मूल संस्कृतम्

ाम पुस्तकं..........विरचितं.............। तैः विरचितं 'मूलं संस्कृतम्
ाम पुस्तकं अपि सन्धिविरहितायां..............शैल्यां उपनिबद्धं वर्तते।
ास्थि अपि प्रयोजनं संस्कृतभाषायाः तत्साहित्यस्य च, विशेषतः वेदानां,
ौरवस्थापनं एव वर्त्तते।..........तेषां अयं प्रयासः सर्वथा स्तुत्यः प्रोत्सा-
नार्हश्च विद्यते इत्यादि।'

५) पं० रामेश्वर झा, व्याकरण-साहित्याचार्य, ऐम. ए. अध्यक्ष,
संस्कृतकालिज, आगरा।

'आचार्य पं० श्यामकुमारमहोदयाः विगतकतिपयेभ्यः वर्षेभ्यः संस्कृत-
ाषायाः प्रचाराय नितरां प्रयत्नशीलाः सन्ति, इति जानन्ति, एव संस्कृतज्ञाः।
तदर्थं अनेन महानुभावेन भूयोभूयः अस्मिन् आगरानगरे सम्मेलनं अकारि
.........(अखिलभारतीयसंस्कृतमहासम्मेलनं) यस्मिन्..............एकस्य
शुद्धसंस्कृतविश्वविद्यालयस्य कीदृशी आवश्यकता अस्ति, इति सर्वैः
मनुभूता, परन्तु समयस्य प्रतिकूलत्वात्..........साफल्यं न असादि अनेन,
ापि प्रयतमानः एवं आस्ते तदर्थं अपि। अस्मिन् एव प्रसंगे 'कीदृशं
कृतम्?' इति नामधेयं एकं नूतनपुस्तमपि लिखितं..........तत्र कियन्तः
ीनाः विषयाः संस्कृतभाषायाः व्यावहारिकत्वसम्पादनाय प्रदर्शिताः,
ा वाक्ये व्यवहारकाले सन्धिराहित्येन एव लेखाः लेखनीयाः व्यवहर-
याश्च।..........यदि सन्धिः न क्रियते, तर्हि झटिति एव अल्पसंस्कृत-
नां अपि ज्ञानं जायते।.............सन्धिकरणे शब्दस्य स्वरूपे महत्
रवर्त्तनं जायते यथा 'मर्वन्तेचार्ववस्थितिः' (मरोः अन्ते चारुः अवस्थितिः)
यादि।'

) पं० नारायण शास्त्री, काङ्करः, कार्यवाहः, श्री संस्कृतवाग्विव-
र्द्धिनी परिषद्, महाराजासंस्कृत-कालिज, जयपुरं।

'..............परं यावत् श्रीमन्तः नेतृरूपे पथिप्रदर्शकरूपे वा अग्रे न
ारन्ति तावत् कार्यसिद्धिः संदिग्धा एव। आधुनिकयुगे संस्कृतस्य
लता भृशं अपेक्ष्यते। सर्वतः इत्थं एव श्रूयते 'संस्कृतं सरलं क्रियतां!
कृतं सरलं क्रियतां तदैव इदं उपयोगि इति। एतत् श्रीमतः आश्रित्य
कर्त्तुं शक्यते, न अन्यथा..........।'

# प्राक्कथनम्

भारतीयविद्याप्रचारसमितेः प्रधानमंत्री पं० श्यामकुमार आचार्यः देशस्य संस्कृतसेवकेषु प्रशस्तं स्थानम् आसादयति। संस्कृतभाषा भारतस्य सर्वस्वम्, तस्याः, तदीयस्य साहित्यस्य, तया सुचिरपूर्वं सन्दिष्टस्य परमार्थस्य च संरक्षणप्रचारणाभ्याम् एव समग्रायाः मानवजातेः वास्तवं मङ्गलं भविष्यतीति तस्य धारणा। परमेश्वरेण सृष्टिं निर्माय तत्र च मनुष्यान् उत्पाद्य तेषां हिताहितयोः बोधनाय वेदाः रचिताः। वेदेभ्यः एव च मानवसभ्यतायाः, विविधानां ज्ञानविज्ञानानाँ तत्प्रतिपादनानुगुणानां विभिन्नानां लोकभाषाणां च विकासः जातः। इत्थं संसारे विद्यमानस्य सर्वस्यैव वस्तुजातस्य मूलभूतं स्रोतः परमेश्वरः, वेदः, संस्कृतं चेति त्रितयमेवेति तदीयः विश्वासः।

विचारोऽयं न नितान्तं नूतनः किन्तु भारतीयन्यायशास्त्रस्य आचार्यैः उद्भावितपूर्वः। तथा हि आत्मतत्वविवेकस्य उपक्रमे उदयनाचार्येण उपन्यस्त :—

स्वाम्यं यस्य निजं जगत्सु जनितेष्वादौ ततः पालनम्।
व्युत्पत्तेः करणं हिताहितविधिव्यासेधसम्भावनम्॥
भूतोक्तिः सहजा कृपा निरुपधिर्यत्नस्तदर्थात्मकम्——
तस्मै पूर्वगुरूत्तमाय जगतामीशाय पित्रे नमः॥ इति श्लोकः

न्यायकुसुमांजलेः पंचमस्तबके विन्यस्तः यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दादीनां, वाग्व्यवहारश्च व्यक्तवाचां लिपितत्क्रमव्यवहारश्च बालानाँ स सर्वस्वतन्त्रपुरुषविश्रान्तः इति शब्दसन्दर्भश्च उक्तमेव विचारं प्रकटयतः।

एषः विचारः सर्वसम्मतः स्यात् न वा, परमिदं तु सत्यं प्रायः सर्वसम्मतं च, यत् संस्कृतम् अतिप्राचीना वैज्ञानिकी सुसमृद्धा शक्तिसम्पन्ना सर्वजनाहितकारिशाश्वतसन्देशदायिनी च भाषा। अतः व्यापकरूपेण अस्याः प्रचारणम् एतदीयसाहित्यस्य अध्ययनाध्यापनं च आवश्यकम्। अतएव अस्याँ दिशि आचार्यश्रीश्यामकुमारमहोदयेन क्रियमाणः प्रयासः सर्वथाऽभिनन्दनीयः। तद्रचितानि पुस्तकानि च पठनार्हाणि प्रचारयोग्यानि च इति सम्मन्यते।

कुबेरनाथ शुक्लः
स्थानापन्न–उपकुलपतिः
वाराणसेयसंस्कृतविश्वविद्यालयस्य
वाराणसी उ० प्र०

१४–१२–६०

# भूमिका

'मूलं संस्कृतं' नामकं पाण्डित्यपूर्णं पुस्तकमिदं मया सादरं अवलोकितम्। ग्रन्थकर्त्ता महाभागेन अत्यन्तपरिश्रमपूर्वकं संस्कृतभाषा कथं सरला साधारणजनबोधगम्या च भवेत् इति प्रतिपाद्य निर्धारितम्। स्वदेशे वर्तमान भाषाविवादपरिस्थितिरेषा वर्तते यत् संस्कृतभाषा सरलीभूय पठने-पाठने लेखने च राष्ट्र-राज-जनभाषा भूत्वा पुनरपि स्वकीयातीतगौरवम् आभजितुं शक्नोति। संस्कृतव्याकरणं सरलं कर्त्तुमनेके विद्वाँसः सोद्योगाः दृश्यन्ते। तेषु महानुभावेषु महामहोपाध्यायः श्री मथूरानाथशास्त्री, डा० कुनहनराजा तथा पं० स० न० कुलकर्णी महोदयाः वर्त्तन्ते, येषां नामानि लेखकमहानुभावेन ग्रन्थे अत्र सगौर्वेण उल्लिखितानि। तेष्वन्यतमः ग्रन्थकर्ता आचार्यप्रवरः श्यामकुमारः सततं प्रयत्नशीलः जनः। परमास्तिकमहानुभावस्य इयं मान्यता तु सर्वैरेव स्वीक्रियते, यत् वेदाः वेदभाषा च प्रचीनतमा, अतएव वेदभाषातः संस्कृतं तथा संस्कृतात् लोकस्य सर्वाः भाषाः प्रादुर्भूताः। संस्कृतलिपितश्च सर्वाः प्राकृतलिपयः प्रादुर्भूताः।

लेखकेन संस्कृतभाषायां कठिनसन्धिविधानं, द्विवचनप्रयोगः, लट्-लृट्-लङ्-विधिलिङ् इत्येतान् चतुर्लकारान् विहाय अन्येषां लकाराणां प्रयोगः, णकारनकारयोर्भेदश्च इति सर्वेऽनावश्यकाः, इति प्रतिपादितम् अस्मिन् ग्रन्थे। यद्यप्यहं न सर्वं तथैव स्वीकरोमि यथा अत्र प्रतिपादितं तथापि भाषा-सौविध्यदृष्ट्या प्रयोगदृष्ट्या-प्रचारदृष्ट्या च लेखकस्य प्रयत्नः अधिकांशरूपेण श्लाघ्यः।

सर्वतो वीक्ष्य लेखकस्य प्रयासमभिनन्दामि। संस्कृतजगति एतादृशाः प्रयासाः सर्वथापेक्षिताः सन्ति। गीर्वाणवाण्यनुरागी लेखकः स्वकीये प्रयत्ने सफलो भवेत् इयं मदीया कामना।

इदं 'मूलं संस्कृतं' युगानुसारि विज्ञानगणितादिक्षमं, यस्मिन् प्रदर्शिते रूपे विद्यार्थिनां कृते विज्ञानगणितादिग्रन्थानां प्रकाशनं सरलतया भवितुमर्हति। यदि छात्राणां कृते पाठ्यपुस्तकेषु स्फुटानि पदानि भवेयुः तदा महोपकारः स्यात् छात्रवर्गस्य। इति।

सत्यनारायण पाण्डेय, डाक्टर,
ऐम० ए०, पी० ऐच० डी०
अध्यक्ष—संस्कृत विभाग, बी० ऐस० ऐस० डी० कालेज, कानपुर
तथा
कार्यवाह :– संस्कृत पाठ्यपुस्तकनिर्धारण समिति,
आगरा विश्वविद्यालयः।

# लेखकस्य वक्तव्यं

यथा भगवता कृष्णेन सम्राजः जरासन्धस्य, स्वमातुलस्य महा-क्रूरकंसस्य श्वशुरस्य, कारागारात् राजपत्नीनां राजकन्यानां अन्यासां च स्त्रीणां, अर्थात् प्रायः मातृवर्गस्य पीडितस्य मुक्तिः कृता, तथैव भारतीयानां अनन्तकालपर्यन्तं मातृभाषायाः, राष्ट्र-राज-शिक्षाभाषायाः, संस्कृतभाषायाः (सृष्टिकालात् आरभ्य न्यूनातिन्यूनं महाभारतकालपर्यन्तं) आत्यन्तिक-मुक्तिः कृता, अद्य २६।१।१९६१ ई० भारतीयगणतन्त्रदिवसे लेखकेन सर्वबन्धनेभ्यः जटिलजटिलेभ्यः, येषु बद्धीकृता देववाणी संस्कृतवाक्, महाभारतानन्तरं वाममार्गिभिः, देशद्रोहिभिः, विदेशीयशासकादिभिः भारतनाशेच्छुभिः शाश्वतदासतायै आंग्लशासनपर्यन्तं । यस्मात् दिनात् भारतं स्वतन्त्रं जातं १९४७ ई० वत्सरे, तस्मात् दिनात् संस्कृतमुक्तिप्रयासः प्रारब्धः लेखकेन, विशेषरूपेण, भारतीय विद्या प्रचार समितेः (राज्यपंजीकृतायाः) तत्वावधाने, यस्याः लेखकोऽपि एकः संस्थापकः, डा० माधव श्री हरि अणे (संरक्षकः) भू० पू० राज्यपाल, बिहार, तथा डा० नारायणप्रसाद आस्थानः (प्रधानः, सभायाः आधारः, यः 'आस्थानः' शब्दस्य अर्थः) भू० पू० उपकुलपति, आगरा विश्वविद्यालय, महाभागैः सह, प्रायः द्वाविंशतिवर्षाणि व्यतीतानि । जन्मकालात् अस्याः समितेः एकमात्रोद्देश्यं संस्कृतोद्धारः, तथा तस्याः प्रधान-मन्त्रिणः लेखकस्य वेद-वेदभाषा-संस्कृत-संस्कृतसाहित्यस्य आत्यन्तिकोद्धारः जीवनोद्देश्यं । कदाचित् एतेषां उद्धाराय तस्य विशिष्ट-जन्म जातं 'महावनं' इति स्थाने (व्रजमण्डले) भगवतः कृष्णस्य क्रीडास्थले । अतः लेखकः एकः गोपः कृष्णसखा, यः तं भगवन्तं कृष्णं महायोगिनं अनुकरोति यथासाध्यं, यतोहि भगवतः कृष्णस्य, भगवत्याः यशोदायाः, राज्ञः नन्दस्य, तथा सर्वेषां स्त्रीपुरुषाणां तदानींतनानां, संस्कृतं एव मातृभाषा आसीत् । भगवतः कृष्णस्य विषये कथ्यते यत् :—

वेद-वेदांग-विज्ञानं बलं चाऽपि अधिकं तथा,<br>
नृणां लोके हि कः अन्यदस्ति विशिष्टः केशवात् ऋते ।'

लेखकेन १९४९ ई० वत्सरे 'कीदृशं संस्कृतम् ?' नाम पुस्तकं प्रका-शितं, प्रायः १० वर्षाणां अनुसन्धानन्तरं । अस्मिन् ग्रन्थे बहुभिः बन्धनैः

मुक्तीकृता संस्कृतभाषा, आधुनिकंसंस्कृतस्य एकेन दृढ़तमेन आधारेण सह, येन प्रकृतितः स्वस्थं संस्कृतं भूयोऽपि विज्ञानयुगानुसारि स्यात् । प्रकाशनकालात् अद्यपर्यन्तं प्रायः एकादशवर्षेषु लेखकस्य 'प्रस्तावाः', प्रायः सर्वें स्वीकृताः देशीय-विदेशीय-विद्वद्भिः, तथा बहुनवीनं साहित्यं रचितं, तथा साप्ताहिकादीनि संस्कृतपत्राणि निस्सृतानि लेखकस्य लेखन-शैल्यां, यस्याः अयं सारः यत् 'वाक्येषु पदानि पृथक् २ स्फुटानि तिष्ठेयुः अर्थात् संस्कृतव्याकरणानुसार यत्पदस्य यद्रूपं भवति, तदेव प्रयोक्तव्यं स्वरूपे, येन श्रवणमात्रेण संस्कृतज्ञानं स्यात् । यावत् मातृवर्गे बालक-बालिकासु, भावि-स्त्रीपुरुषेषु संस्कृतज्ञानं नहि जायते, तावत् संस्कृतं भूयोऽपि कथं मातृभाषा स्यात् ? अतः गृहेषु विद्यालय-महाविद्यालय-विश्वविद्यालयेषु संस्कृत-प्रवेशः आवश्यकः अनिवार्यरूपेण । अयं दूरस्थः दृष्टिकोणः, यः शनैः २ पंच-दशवर्षेषु संस्कृतं 'मातृ-भाषा' इति कुर्यात् भारतीयानां ।

परन्तु सद्यः एव 'वाक्येषु संधिरहितं संस्कृतं' राष्ट्र-राज-शिक्षाभाषा भवितुं अर्हति, निखिलभारते विदेशीय-आंग्लभाषा स्थाने, अत्र संदेह-लेशोऽपि नास्ति । इदं अद्य अपि सत्यं, यत् लेखकेन एकादशवर्षपूर्वं स्वग्रन्थे लिखितं । संस्कृतज्ञानां संख्याऽपि न्यूना नास्ति समग्रभारते आंग्लभाषाविदां अपेक्षया । अतः भारतशासनेन सत्वरं एव संस्कृतं आंग्लभाषास्थाने राष्ट्रादिभाषा उद्घोषणीयं । अस्मिन् विषये अस्माभिः बहुलिखितं 'मूलं संस्कृतम्' इति प्रस्तुतग्रन्थे, पाठकानां पुरतः सादरं समर्पिते ।

'मूलं संस्कृतम्' इति ग्रन्थः लेखकेन प्रायः एकादशवर्षाणां अनुसन्धानानन्तरं रचितः प्रकाशितश्च । अनेन आत्यन्तिकोद्धारः स्यात् देववाण्याः संस्कृतस्य इति सुनिश्चितं, यत् लेखकस्य एकं जीवनोद्देश्यं । यद्रूपं लेखकेन अद्य दीयते संस्कृतस्य, तत् सर्वथा युगानुसारि, आधुनिकतमं तथा विज्ञानगणितादिलेखनक्षमं, कोऽपि आधुनिकविषयः कथं न स्यात् ? एतादृशं संस्कृतं त्रिकालेषु त्रिलोकेषु तिष्ठेत्, यतोहि न विस्मरणीयं, यत् संस्कृतभाषा न केवलं मानवानां आदिभाषा, अपितु देवतानां अपि इयं भाषा देवीवाक् वेदभाषारूपे । देवतासु मुक्तात्मसु सदैव वेदज्ञानं तिष्ठति वेदभाषामाध्यमेन ईश्वर–सकाशात् । इदं एव अलौकिकं मुक्तिसुखं, यस्य कृते मानवमात्रचेष्टा । अस्मात् देवता शब्दोऽपि [illegible] संस्कृतं देववाणीवत् ।

रहस्यं हि एतत उत्तमं, यत् विद्वद्भिः सम्यक् ज्ञातव्यं, विमर्षणीयं च। लौकिकसंस्कृतस्य संस्कृतसाहित्यस्य च उद्धारः तु भवेत् एव, परन्तु भगवतः वेदस्य वेदवाण्याः अपि उद्धारः स्यात्, अनेन ग्रन्थेन इति सुनिश्चितं। विद्वांसः अत्र प्रमाणं। वस्तुतः लेखके कोऽपि गर्वः नास्ति, यद्यपि स प्रायः द्वाविंशतिवर्षेषु संस्कृतस्य आत्यन्तिकोद्धाराय समर्थः जातः। भगवतः कृष्णस्य वेदस्य च शब्देषु :—

कर्मणि एव अधिकारः ते, मा फलेषु कदाचन,
मा कर्मफलहेतुर्भूः, मा ते संगः अस्तु अकर्मणि। (गीता)
कुर्वन् एव इह कर्माणि, जिजीविषेत् शतं समाः,
एवं त्वयि न अन्यथा इतः अस्ति, न कर्म लिप्यते नरे। (यजुर्वेदः)

अतः लेखकः कर्मफलं ईश्वरे समर्प्य, ईश्वरेच्छायाः माध्यमं भूत्वा यन्त्रवत् कार्यं करोति। सौभाग्यं लेखकस्य, यत स, एतादृशः क्षुद्रः अपंडितः अविद्वान् अपि, तस्य माध्यमं जातः, परन्तु गुणहीनोऽपि ईश्वरस्य कृपापात्रं भवितं अर्हति, यतोहि

'भक्तिविशेषात् आवर्जितः ईश्वरः भवतं अनुगृह्णाति'

एतादृशी 'ईश्वरप्रतिज्ञा' स्वभक्तान् प्रति, ये तं ईश्वरं 'मातरं पितरं च' अनन्यभावेन भजन्ते। ईश्वरः, अदृष्टोऽपि, अरूपोऽपि, अकायोऽपि सर्वत्र प्राप्यते भक्तैः, तस्य ईश्वरस्य सर्वव्यापकत्वात्, सर्वज्ञत्वात्, सर्वशक्तिमत्त्वात् इति।

इयं आख्यायिका, यत् 'भगीरथः भागीरथीं गंगां' आनीतवान् लोके स्वर्गात्, येन कलिकालस्य वेदादिशास्त्ररहितपापिमानवस्य स्नानमात्रेण कल्याणं स्यात् (न्यूनातिन्यूनं शारीरिकं स्वास्थ्यादिरूपं), यतोहि महाकविकालिदासस्य अमरशब्देषु

'शरीरं आद्यं खलु धर्मसाधनं'

स्वस्थ-शरीरात् धर्मं सम्पाद्य पापनाशं मोक्षं च आप्तुं शक्नोति मानवः। परन्तु इयं तु भौतिकगङ्गा, यां राजा भगीरथः, स्थापत्यकलाविशारदः आनीतवान् भारतस्वर्गात् हिमालयात्, भारतप्रहरीरूपत्वात्, येन भारतं स्वास्थ्येन सह धनधान्यसम्पन्नं अपि स्यात्। परन्तु लेखकः अद्य एकां संस्कृतमानसिकगङ्गां जाह्नवीं आनयति देवलोकात् (एका स्थितिः) देवतानां स्व-

र्गात् मोक्षस्थितिरूपत्वात्, येन भारतीया: तस्यां वेदादिशास्त्रगङ्गायां देव वाणीसंस्कृतमय्यां स्नानं कृत्वा सद्यः 'स्वभारतीयं आत्मानं' जानीयुः, तथा 'आत्मानं सदाचारिणं वेदादिशास्त्रमर्यादासहितं संस्कृतभाषामयं' विधाय, सुसंस्कृताः भूत्वा 'नैजाधिकारपदं जगद्गुरुत्वं' भूयोऽपि प्राप्य, आत्म-कल्याणं, भारतकल्याणं विश्वकल्याणं च कुर्युः। परन्तु एतादृशं महत् कार्यं ईश्वरसाहाय्येन, प्रेरणया विना, कदापि न सम्भवेत्। संस्कृतगङ्गायाः तट-मर्यादासंरक्षणाय अल्पसुधाराणां व्याकरणादिसम्मतानां एका सुदृढा भित्तिः सर्वतः दत्ताऽस्ति, यत् पौरुषमात्रं लेखकस्य। लेखकेन संस्कृतगङ्गायाः तट-बन्धनं अस्मात् कारणात् कृतं अस्ति, येन 'आपूरः' न आगच्छेत् भारतना-शाय; भारतीयानां प्रमादात्। परन्तु इदं संस्कृततटबन्धनं प्रायः त्रिंशद-वर्षेषु सम्पन्नं आर्षादिप्रयोग–व्याकरणसम्मतं, येन भूयः मर्यादाभङ्गः न स्यात् भारतीयानां प्रमादेऽपि। के के सुधाराः आवश्यकाः संस्कृतगङ्गा-तटबन्धनाय सततधाराप्रवहनाय, अयं एव मुख्यविषयः अस्य ग्रन्थस्य, अतः सावधानतया आद्यन्तं अध्ययनीयः पाठकमहाभागैः संस्कृतोद्धारेच्छुभिः भारत-हितचिन्तकैः। अस्य श्रेयोऽपि संस्कृतविदुषां 'न मम वेदानुसारं'। इति।

यैः महानुभावैः अस्मिन् पुण्यकार्ये लेखकस्य, भारतीय विद्या प्रचार समितेः च, सहायता साहाय्यं च कृतं, ते सर्वे धन्यवादार्हाः विद्यन्ते। ते सर्वे धन्यवादान् कृपया स्वीकुर्युः।

अल्पज्ञः लेखकः, अतः यदि क्वाऽपि त्रुटिः स्यात् प्रकाशनादेः ग्रन्थे-ऽस्मिन्, सा कृपया क्षन्तव्या, तथा सूचनीयः लेखकः, येन आगामि प्रकाशने दूरीकृता स्यात्। अशुद्धि-शुद्धिपत्रं अपि दीयते अत्र। सुसम्मतिभिः अनु-ग्राह्योऽयं जनः ग्रन्थविषये। भारतीयछात्रवर्गस्य विशेषरूपेण उपकरिष्यति अयं ग्रन्थः, यदि सर्वेषु विद्यालय-महाविद्यालय-विश्वविद्यालयेषु निर्धारितः स्यात् पाठ्यपुस्तकेषु, यतोहि कदाचित् सदाचार-देशभक्ति-गुरुभक्ति-नियम-पालनादि-गुणशिक्षकोऽपि अयं ग्रन्थः। इति शम्।

२६-१-१९६१ ई०

गणतन्त्रदिवसः

—लेखकः

# ग्रन्थ-विषयसूची

सूचना :—प्रत्येकं अध्यायस्य विषयानुसारि पृष्ठाः कोष्ठके दीयन्ते यथा (१) इति ।

संस्कृत-लिपौ आवश्यकः ? भारते विश्वे च का लिपिः स्यात् तथा का भाषा ? (४३) अस्माकं मतं विदुषां विचारार्थं (४३) सन्धि संयोग-विचारः भिन्नः, यः संस्कृत-पदनिर्माणे आवश्यकः (४४) दीर्घ-गुण-वृद्धि-यण-सन्धयः पदेषु (४४) दीर्घसन्धिः, गुण-सन्धिः, वृद्धि सन्धि (४५) यण सन्धि (४६) अत्र किं रहस्यं ? (४६) सन्धिनियमेषु काचित् वैज्ञानिकी कृत्रिमता तु भवेत् एव (४७) कृत्रिमोच्चारणं मन्येत चेत् (४८) ऋ, ॠ, ऌ, कथित-स्वराः ? (४८) ऋ, ॠ, वर्णोच्चारणं भिन्नं भारत-प्रदेशेषु (४९) अं, अः वर्णाः (४९) अमङणनानां नासिका च (४९) अन्तिम-निवेदनं (५०)

तृतीयः अध्यायः— ५२-८०

विषयाः—

संस्कृतभाषायाः पतनेतिहासः पतनकारणानि च (५२) महा-भारतात् प्राक् देशे स्थितिः (५२) शिक्षा (५४) मानव-स्वभावः (५५) अस्य कारणं किं ? (५५) भारतीय साम्राज्यं (५५) समा-जस्य स्थितिः (५७) भारतीय राष्ट्रस्य समाजस्य तदा हीनावस्था (५८) महाभारतात् प्राक् संस्कृतभाषायाः संस्कृतसाहित्यस्य च स्थितिः (६३) महाभारतयुद्धं (६४) महाभारतकालानन्तरं (६५) संस्कृतभाषा-साहित्यादिकस्य दशा (६५) बौद्धकाले संस्कृतदशा (६७) भ्रष्टीभूता स्मार्त-वर्णाश्रमव्यवस्था पतनकारणं (६८) वाममार्गिणां नास्तिकानां कुकृत्यानि (६९) सर्वोपरि-संस्कृतपत-नस्य कारणं वेद-त्यागः (७१) तदा क्व वेदाः वर्णाश्रमधर्माश्च ? (७५) यावत् क्षीणं, मातृ, संस्कृतज्ञानं नास्ति (७५)

(१४६) द्वित्र-प्रस्तावाः (१५०) संख्याः अव्ययानि, अट्कुप्वाङ्नुम्व्यवायेऽपि वा, उणादि-प्रकरणं (५) गणित–विज्ञान–ज्योतिषादि-शास्त्राणि (१५०) लीलावती–गणितं (१५१) अद्य संख्यानां अपि रूपाणि चलन्ति (१५२) पूर्णि–संख्याः अपि 'अव्ययानि' स्युः (१५४) परन्तु वस्तुतः कथं संस्कृत-गणितग्रन्थेषु आसीत् संख्या (१५६) अव्ययं, अव्ययानि वा कानि ? (१५६) कथं संख्याः 'अव्ययानि' स्युः ? (१५७) संख्या-गणना 'अव्यय रूपा' (१५८) अन्याः सर्वाः संख्याः अनेन प्रकारेण 'अव्ययानि' (१५६) शेष संख्याः शंख पर्यन्तं इमाः स्युः 'अव्ययानि' (१६१) अरबी–गणना (१६२) 'दशमलव' आदि गणितक्रियाः (१६२) गणितं विज्ञानस्य आधारः (१६४) आधार–क्रिया–धनं (१६५) 'धनं' क्रिया (१६५) 'ऋणं' क्रिया (१६६) 'गुणनं' क्रिया (१६७) 'भाजनं' क्रिया (१६८) धन-गणनं (१६८) मिश्रसंख्या (१७०) भौतिक-विज्ञानादि-विषयेषु (१७०) यदि संस्कृतं राष्ट्र-भाषा भवेत् ? (१७१) विज्ञानसाहित्यस्य परमावश्यकता (१७१) तदा संस्कृतं कीदृशं ? (१७२) (६) अट्कुप्वाङ्नुम्व्यवायेऽपि ८।४।२ (१७४) संस्कृत-भाषायां किं अवलोक्यते ? (१७५) 'अंक-अङ्कयो, पंच–पञ्चयो, दंड–दण्डयोः, मंद-मन्दयोः, कंप-कम्पयोः' (१७६) उणादि-प्रकरणं (१७६) तदा उणादि–प्रकरणे किं ? (१८०) वैज्ञानिक-यान्त्रिक-प्राविधिक-पारिभाषिक-शब्दाः (१८१) पारिभाषिक–शब्दादिनिर्माणकार्यं (१८३) विशेष-निवेदनं (१८४) उत्तर–भारते अद्य संस्कृतं (१८४) काशी–संस्कृतकेन्द्रतः कीदृशं संस्कृतं ? (१८५) स्वास्थ्यम् (१८५) दक्षिण–भारते अद्य संस्कृतं (१८५) 'हिंदाः तंत्रयात्रा' (शीर्षकं) (१८६) पश्चिमभारते

अद्य संस्कृतं (१८७) संस्कृतायोगस्य निवेदनम् (१८७) पूर्वीय-भारतस्य अद्य-संस्कृतं (१८६) अखिलभारतीयसंस्कृतराष्ट्रभाषा-सम्मेलनम् (१८६) दीक्षान्तभाषणम् (१६२) विशेषसूचना: (१६८) मम अयं ग्रन्थ: 'मूलं संस्कृतं नाम' (१६६)



विषया:—

संस्कृतसाहित्यस्य का शल्यचिकित्सा ? (२०४) महाभारतात् प्राक् संस्कृतसाहित्यं ऋषिमुनिभि: महाविचारकै: वैज्ञानिकैश्च रचितं (२०५) प्राचीन-ऋषि-मुनीनां कोऽपि दोष: नास्ति (२०७) उपनिषत्सु अध्यात्मग्रन्थेषु वेदव्याख्यातृषु अद्य किं विद्यते ? (२११) परन्तु शोधकार्यस्य पूर्वं किं आवश्यकं ? (२१४) तदा ग्रन्थानां स्फुट-प्रकाशनं किं ? (२१४) गद्य-साहित्यं (२१५) पद्य संस्कृतसाहित्यं (२१६) विशुद्ध-काव्य-ग्रन्था: पिंगलशास्त्र-युक्ता: (२१७) मुद्रकाणां प्रकाशकानां कृते एक: महत्वपूर्ण: क्रान्तिकारि-परामर्श: (२१६) तदा शोधकार्यं, सम्पादन-कार्यं च किं ? (२२१) अन्तिम: संस्कृत-साहित्यस्य सुधार: (२२२) 'संस्कृतपद्य' साहित्यं (२२४) पिंगल-शास्त्रस्य किं प्रयोजनं ? (२२४) तदा कीदृशं काव्यलेखनं ? (२२५) अद्य मनु-स्मृतौ विद्यते यज्ञादय: न मांसेन विना इत्यादि: (२२६) श्राद्धे मधुपर्के च मांस-भक्षणं (२२७) मांसभक्षणेन पितृणां अनन्तकालपर्यन्तं तृप्ति: (२२७) शूद्राणां कृते दण्ड: (२२७) तदा सूत्र-ग्रन्थानां किं स्यात् ? (२२६) योगदर्शनं (२२६) अष्टाध्यायी व्याकरणस्य लेखनं कथं स्यात् ? (२२६) अष्टाध्यायी सूत्राणां लेखनविधि: (२३०) व्या-ख्या (२३१) भारतीयजनतायाः कर्तव्यं (२३२) केन्द्रीयप्रान्तीय-

'लोक-भागः' समाप्तः

# वेद-भागः

..........सदैव तिष्ठन्ति (२८२) अतः अस्माकं एका घोषणा (२८३) सामवेदस्य वेदानां च विषये गायनाचार्य अलाउद्दीनखां किं कथयति (२८५) भारतीयधर्मनिरपेक्षराज्येन कथं कस्मात् कारणात् वा वेदानां रक्षा कार्य्या (२८६) भारतीयजनतया अपि किं अपि करणीयं अस्यां दिशि (२८७)।

ग्रन्थ–समाप्तिः

# अशुद्धि-शुद्धिपत्रम्

| पृष्ठः | पंक्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १२ | ३ | मध्यस्थां | मध्यस्था |
| १३ | १२ | राजाना: | राजानः |
| २८ | १० | पृथकत्व | पृथकत्व |
| ३६ | ३ | सौवर्गवर्गी | सौवर्गवर्गः |
| ४१ | ४ | राष्ट्रीय | राष्ट्रिय |
| ४८ | १ | मन्येत | मन्येत |
| ५७ | ७ | सच्छात्रेषु | सच्छास्त्रेषु |
| ६१ | १८ | प्रजाहित | प्रजाहितं |
| १२१ | ६ | परस्पर | परस्परं |
| १३७ | ७ | अस्माभि | अस्माभिः |
| १७१ | १२ | भारत | भारते |
| १८६ | १८ | पूर्वी | पूर्वीय |
| २०१ | ३ | जातानिः | जातानि |
| २१४ | २३ | कर्त्तं | कर्त्तुं |
| २२१ | ६ | वह्वयः | बह्वयः |

सूचना :—यदि काऽपि अन्या त्रुटिः स्यात् ग्रन्थे प्रकाशनादेः, तदा कृपया सा शोधनीया स्वत एव पाठकैः, तथा सूचनीयः अयं लेखकः, येन आगामि-प्रकाशने शोधः कृतः स्यात्। कदाचित् अनुस्वारस्य विसर्गस्य च यत्र तत्र त्रुटिः भवेत् इति। —लेखकः

# मूलं संस्कृतम्

एवं

# वैदिकभाषोत्पत्तिविज्ञानम्

# "लोकः"

## प्रथमः अध्यायः

### संस्कृतस्य मूलत्वं, भाषोत्पत्ति–विज्ञानं च

यथा 'वेदः अखिलः, धर्ममूलं' तथा वेद–भाषा लोके संस्कृत भाषा 'सर्व–लोक भाषा–मूलं' इति स्थितिः। यथा भगवन्तः वेदाः सर्वेषां मानवानां तथैव वेदभाषाऽपि सर्वेषां मानवानां विद्यते। सा वेदभाषा लोके 'संस्कृत भाषा' केवलं 'भाषा' वा इति कथ्यते बुधैः, यत्र तत्र केनचित् व्याकरणपरिवर्तनेन सह। आगामि पृष्ठेषु वयं विस्तृत-रूपेण लेखिष्यामः, यत् केन प्रकारेण सर्व–प्रथमं वेदभाषातः "संस्कृतं" निस्सृतं, यतोहि अनन्तकालपर्यन्तं "वेदभाषा" एव संसारस्य भाषण–व्यवहारादि–भाषा अतिष्ठत्। शनैः शनैः विद्वद्भिः "संस्कृत-व्याकरणं" रचितं, तथा लोके "व्यवहारार्थं" एका "भाषा" रचिता वेदभाषां आधारीकृत्य "संस्कृतं नाम"। अतएव "वेदभाषा" "संस्कृत भाषायाः जननी" अत्र संदेहलेशोऽपि नास्ति। पश्चात् अनन्तकालपर्यन्तं "संस्कृत भाषा" लोकभाषा अतिष्ठत्, न्यूनातिन्यूनं महाभारतकालपर्यन्तं।

परन्तु विशेषरूपेण 'भगवतां वेदानां, वेदभाषाया:' अनन्तरं 'संस्कृत-साहित्यस्य, संस्कृत भाषाया:' संरक्षणं प्राणपणेन भारतदेशेन कृतं, अत: गौणरूपेण वेदा:, वेदभाषा, संस्कृत साहित्यं, संस्कृत भाषा' भारत देशस्य इति 'प्रसिद्धि:' जाता। वेद-धर्म: केवलं भारतीयानां नास्ति, अपितु सर्वेषां मानवानां अस्ति। इतिहास:अत्र प्रमाणं, यतोहि सृष्टिकालात् आरभ्य महाभारतपर्यन्तं 'वेद धर्म:' 'लोक धर्म:' आसीत्। महाभारतात् प्राक् तु कस्यचित् अपि 'सम्प्रदायस्य' उल्लेख: नास्ति। बौद्धादिसम्प्रदाया: सर्वे महाभारतकालानन्तरं प्रादुर्भूता:।

पूर्वोक्त-कारणात् इदं सत्यं, यत् अत्र भारते "लौकिक संस्कृत-साहित्य" स्य रचना भारतीयै: प्रधानतया कृता, तथा लोके सर्वा: लोक-विद्या:, वेद-विद्याऽपि प्रसारिता। अनन्तकालपर्यन्तं भारतीय चक्रवर्त्ति राज्यं, साम्राज्यं नाम अक्षुण्णं अतिष्ठत्। यत: संस्कृतभाषा 'धर्मभाषाऽपि' आसीत् भारतीयानां, तथा 'मातृ-राष्ट्र-राज-शिक्षा-भाषाऽपि',अतएव 'संस्कृत भाषाया: उत्थानपतनेतिहास: 'वेद-धर्मेण, भारतीय राष्ट्रेण, भारतीय समाजेन सह सम्बद्ध: विद्यते।

इदं असम्भवं यत् 'संस्कृत भाषाया: उत्कर्षापकर्षेतिहासेन सह' वेद धर्मस्य भारतीय राष्ट्रस्य, भारतीय समाजस्य वा वर्णनं न स्यात्।' अन्ते इदं "तथ्यं" स्वीकरिष्यते भारतीयै:, विदेशीयै: अपि, यत् यदा यदा 'वेद धर्मस्य, भारतीय राष्ट्रस्य, समाजस्य च उत्थानं जातं, तदा 'संस्कृतस्य अपि उन्नति: जाता,' तथा यदा 'वेदधर्मस्य, भारतीयराष्ट्रस्य समाजस्य च पतनं जातं, तदा संस्कृतस्य अपि अवनति: जाता।' सृष्टि: प्राय: विंशति-अर्बुद-वर्ष-प्राचीना। बहूनि युगानि व्यतीतानि। एतेषु 'अनन्तयुगेषु' संस्कृतस्य अपि उत्थानं-पतनं 'युगानुसार' संजातं। अस्माकं कथनं 'सत्यं' इति विषये एकं 'अतर्क्यं प्रमाणं' दीयते, यत्

अत्र भारतवर्षे 'वेद धर्मस्य, भारतीय समाजस्य परमह्रासः अतः संस्कृतस्य अपि परमह्रासः अवलोक्यते सर्वैः।' 'भारतीय गणराज्यं' तु वस्तुतः 'भारतीयं' नास्ति संस्कृतसाहित्य-संस्कृति-संस्कृतभाषादि-राहित्यात्। भारतीय राष्ट्रं 'भारतीं' संस्कृतं विहाय असम्भवं इति अस्माकं निश्चितं मतं।

'भारतीयैः विस्मर्यते कदाचित् यत् तेषां भाग्योदयस्य कालः दीर्घतमः अर्थात् प्रायः विंशति-अर्बुद-वर्षात्मकः। तेषां दासताकालः प्रायः द्विसहस्रवर्षात्मकः, कालस्य महासागरे केवलं विन्दुवत्। दासताऽपि अस्माकं 'दोषात्' 'वेदादिशास्त्राणां, तेषां भाषा संस्कृतस्य विस्मरणात्' एव आगता। अतएव भारतीयैः नैराश्यैः न भाव्यं कदापि। भूयोऽपि भाग्योदयः स्यात् यदि अस्माभिः 'वेदः, संस्कृतं च' न विस्मर्येत। इदं त्रिकालसत्यं। अतः वयं ईश्वरस्य कृपां, विदुषां शुभकामनाः कामयामहे येन 'ईश्वरीय वेद-धर्मः, संस्कृत भाषा च" अक्षुण्णा तिष्ठेत् लोके 'समग्र–मानव–कल्याणाय, शाश्वत-सुखाय च।'

संस्कृतोत्थान-पतनेतिहास्य 'वेदतः, भारतीयराष्ट्रतः, भारतीय समाजतः 'सम्बन्ध-कारणात्' अस्माभि यत्रतत्र 'वेदस्य, भारतीय राष्ट्रस्य, समाजस्य' अपि संक्षेपे उल्लेखः क्रियते आवश्यकतानुसारं। तथापि इदं कार्यं क्रियते व्यापक-दृष्ट्या। कदाचित् भारतीयाः अपि सर्वे न जानन्ति, यत् वेदभाषा, यस्यां भाषायां प्रत्येकं सर्गादौ भगवतां वेदानां प्रादुर्भावः भवति देवानां सकाशात् मानव-कल्याणाय, कियती प्राचीना विद्यते। यदा यदा सृष्टिः जायते, तदा तदा वेदोत्पत्तिः भवति, तथा वेद भाषायाः उत्पत्तिः अपि जायते। यथा ईश्वरेण सर्व-मानवानां कल्याणाय शारीरिक सुखाय च प्रत्येकं सर्गादौ निखिल-

ब्रह्माण्डं अर्थात् आकाशं, वायुः, अग्निः, जलं, पृथिवी, सूर्यः, चन्द्रः, तारागणाः विविधि लोकादयः निर्मीयन्ते तथा मानवानां आत्मिक-कल्याणाय, ज्ञान संवर्द्धनाय, अन्ते मोक्षदानाय, ईश्वरीय-पूर्ण-निभ्रान्त-ज्ञानं वेद रूपे देवतासकाशात् दीयते। एतादृशी ईश्वरीय-नित्य-परम्परा। कीदृशी सूक्ष्मरचना विद्यते ईश्वरस्य, कथने न आगच्छति। इयं अनन्ता अस्ति जंगम-स्थावर-सृष्टिः, यस्याः कल्पनाऽपि कर्त्तुं नहि शक्यते मानवेन। अनेन सिद्ध्यति कीदृशः महान् ईश्वरः, यस्य कार्य-जगत् एतादृशं महत्, अनन्तं सूक्ष्मरचनामयं, महाश्चर्य-करं। सत्यं यस्य ईश्वरस्य निखिलरचनायाः अपि सम्पूर्णज्ञानं न स्यात् मानवाय स मानवः कथं ईश्वरस्य ( सृष्टेः निर्मातुः ) सम्पूर्णज्ञानं आप्तुं शक्नुयात्? स्पष्टं इदं सर्वं। अल्पज्ञः एव मानवः स्वाभावात्। तथापि कीदृशः मिथ्या-गर्वपूर्णः मानवः, यः ईश्वरस्य सत्तां अपि प्रायः अस्वीकरोति। यदि येन केन प्रकारेण तस्य ईश्वरस्य सत्तां स्वीकरोति मानवः, तदा एतादृशं महान्तं ईश्वरं, यस्य विषये भगवन्तः वेदाः स्थाने स्थाने उपदिशन्ति यत्

एतावान् अस्य महिमा, अतः ज्यायान् च पुरुषः,
पादः अस्य विश्वा भूतानि, त्रिपात् अस्य अमृतं दिवि।
( यजुः, मं० ३, अध्या० ३१ )

वेद अहं एतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात्,
तमेव विदित्वा अतिमृत्युं एति, नान्यः पन्थाः विद्यतेऽयनाय।
( यजुः मं० १८ अध्या० ३१ )

स पर्यगात् शुक्रं, अकायं, अव्रणं, अस्नाविरं, शुद्धं अपापविद्धं,
कविः मनीषी, परिभूः, स्वयंभूः, याथातथ्यतः अर्थान् व्यदधात्
शाश्वतीभ्यः समाभ्यः।
( यजुः, मं० ८ अध्या० ४० )

न तस्य प्रतिमा अस्ति, यस्य नाम महद्‌यशः,

"हिरण्यगर्भः इति एषः, मामा हिंसीत् इति एषा, यस्मात् न जातः

इति एषः। ( यजुः मं० ३, अध्या० ३२ )

प्रायः 'मानवरूपेण तस्य दासवत्' अवलोकयति, प्रकोष्ठेषु बन्दीकरोति, शूले आरोपयति, सप्तमाकाशे सिंहासने वा स्थापयति इत्यादि २ स्वमिथ्याकल्पनानुसारं। कीदृशः ईश्वरः, कीदृशं तस्य जगत् इति विषये आवश्यकं विस्तारपूर्वकं अस्य पुस्तकस्य द्वितीयभागे 'वेदः' इति नामके दास्यते। अत्र तु वेदभाषा, लोके संस्कृत भाषा प्रश्नः, यया लोकस्य सर्वाः भाषाः प्रादुर्भूताः। संस्कृतभाषायाः किं प्राचीनं रूपं, किं महत्वं, कीदृशं तस्याः साहित्यं कथं संस्कृतभाषा प्राचीनभारत-देशस्य मातृ-राष्ट्र-राज-शिक्षा-भाषा ? किं सा भूयोऽपि भारतस्य मातृ-राष्ट्र-राज-शिक्षा भाषा भवितुं अर्हति, विश्वे च विश्वभाषा, तथा किं संस्कृतेन एव भारतीय क्षेत्रीय भाषा-समस्या समाधातुं शक्यते ? इति विषयाः एव प्रधानतया पुस्तक-लेखने, प्रयोजनं। परन्तु यथा ईश्वरः निखिल-ब्रह्माण्डस्य रचयिता तथा भाषायाः अपि आदिस्रोतः इति अस्माकं मन्तव्यं। अतएव ईश्वरस्य चर्चा अपि यत्र तत्र आवश्यकी, अन्यथा भाषोत्पत्ति-ज्ञानं सम्पूर्णं न स्यात्। वस्तुतः भाषा-विज्ञानं इदं, तात्विक-दृष्ट्या। अत्र तु अस्माभिः इदं एव कथ्यते, यत् अद्य भौतिक-वैज्ञानिकैः अपि इदं स्वीक्रियते, यत् काचित् चैतन्या अनिर्वचनीया, अतर्क्या शक्तिः अस्ति, यथा इयं सर्वा रचना व्यवस्थितपूर्णा, युक्तियुक्ता, महाश्चर्यप्रदा, अनन्ता च क्रियते। परन्तु तैः वैज्ञानिकैः भौतिकवादिभिः 'तां चैतन्यां-महोद्देश्यपूर्णां महाशक्तिं" "ईश्वरः" इति कथने लज्जा अनुभूयते।

ईन्सटनमहाभाग: पाश्चात्यजगत: महावैज्ञानिक: आसीत् । तेन
स्वीक्रियते, यत् एतादृशी काचित् "महाशक्ति: अनिवर्चनीया,
अतर्क्या" अस्ति, परन्तु का शक्ति: सा इति ज्ञाने वयं असमर्था:।
अनेन आधारेण तेन स्वमृत्यो: पूर्वं कथितं आसीत्, यत् वैज्ञानिकै:
जगत: मानवजाते: च नाश: न कार्य्य: विविध-नाशकारक-विस्फोटक-
यन्त्रै:। स ईन्सटन: वर्तमान-युगस्य भौतिक-वादिनां वैज्ञानिकानां 'गुरु:'
यस्य भौतिक-ज्ञानं आधारीकृत्य अत्यन्तनाशकारिविस्फोटका: तै:
निर्मीयन्ते । यथा यथा भौतिकवादि-वैज्ञानिकेषु 'एतादृश्या:
चैतन्याया: महाशक्ते:" ज्ञानं जायते, तथा तथा भाषोत्पत्ति-ज्ञानं
अपि उत्पद्येत, यत् सा महाशक्ति: "ईश्वर: नाम" भाषाया: अपि
आदिस्रोत: । इदं अस्माकं भारतीयं भाषोत्पत्तिविज्ञानं, अन्तिमं सत्यं,
यस्य अद्य वैज्ञानिक-पद्धत्या वर्णनं विश्लेषणं च क्रियते अस्माभि: ।
अन्ते भौतिक-विज्ञानवादिभि: अपि स्वीकृतं स्यात् इदं न: विश्वास:,
यै: तृतीयविश्वयुद्धस्य भूमिका रच्यते ईश्वरं सर्वथा बहिष्कृत्य।
मानवे इदं 'राक्षसत्वं' ।

## ईश्वरः एव आदिस्रोतः लोकभाषाणां वेदकारणात् ।

परन्तु अत्र अयं प्रश्न: उपतिष्ठते, यत् ईश्वर: सर्वासां लोक-
भाषाणां आदिस्रोत: कथं ? सर्वै: आस्तिकै: स्वीक्रियते, यत् ईश्वर:
एव जगत्-कारणं, अस्य निखिलब्रह्माण्डस्य रचयिता । भौतिक
वादिभि: वैज्ञानिकै: अपि अद्य स्वीक्रियते, यत् काचित् पूर्वोक्ता
महाशक्ति: अदृष्टा च अस्ति, यस्या: ज्ञानं नास्ति । भौतिक कारणं
जगत: 'प्रकृति:' तु नित्या, अचेतना, इति स्वीक्रियते वैज्ञानिकै: ।
'प्रकृति: अस्ति' इति तेषां तस्या: नित्यत्वे हेतु: । नास्तिकानां,
दार्शिकवादिनां, अज्ञानिनां अपठतां अत्र उल्लेख: नहि क्रियते, यतोहि

तेषां कृते तु किमपि नहि वद्यते, न ईश्वरः, न आत्मा, न प्रकृतिः। अस्माभिः पूर्वं निवेदितं, यत् ईश्वरेण सर्वाणि वस्तूनि जीवमात्रस्य शारीरिक सुखाय, जीवनयापनाय च निर्मितानि। आदौ इदं सर्वं तु ईश्वरेण क्रियते। कोऽपि मानवः इमां निखिलरचनां कर्तुं नहि शक्नोति। किं कोऽपि मानवः आकाशं, वायुं, अग्निं, जलं पृथिवीं इत्यादिकं रचयितुं शक्नोति? कदापि नहि इति उत्तरं कस्यचित् अपि विचारशीलवतः भवेत्। द्वितीयः प्रश्नः अयं यत् सूर्यः न स्यात् वायुः न स्यात्, जलं न स्यात् पृथिवी न स्यात् तदा कथं मानवजीवनं भवेत्? जीवमात्रस्य शरीरं अपि आकाश-वायु-अग्नि-जल-पृथिवी-तत्त्वैः निर्मितं, अतएव तस्य शरीरस्य पोषणाय अपि एतेषां सर्वेषां पंच-तत्वानां आवश्यकता। अतः जगतः रचना ईश्वरेण क्रियते इति सिद्धं। मानवः प्रचुर मात्रायां बुद्धि-युक्तः, ज्ञान युक्तः, भाषादि-युक्तः इति तस्य विशेषता, अन्येभ्यः जीवेभ्यः। किं एतेन महता ईश्वरेण मानवस्य "मानसिक-बौद्धिक-आत्मिक-विकासाय भाषाद्वारेण ज्ञान-विज्ञानं नहि दास्यते, येन तस्य मानवस्य सर्वाङ्गीण-विकासः स्यात्? सर्वप्रथमं तु ईश्वरेण बौद्धिकादि-विकासाय स्ववेद-ज्ञानं-वेदभाषामयं दीयते, यथा भौतिक-जगति जीवनाय सूर्यादयः दीयन्ते। अनेन मार्गेण मानवानां भाषा-सृष्टिः, ज्ञान-सृष्टिः वेदतः भवति। ईश्वरीयज्ञानं-वेदभाषामयं देवतानां सकाशात् लोके प्रादुर्भवति इति पूर्वं निवेदितं। इदं एव अन्तिमरूपे भाषोत्पत्तिविज्ञानं। संक्षेपे यथा भौतिक जीवनाय ईश्वरेण सूर्यादयः भौतिक-केन्द्राणि शक्ति-ग्रहणाय स्थाप्यन्ते, तथैव बौद्धिक-मानसिक-विकासाय स्ववेदज्ञानं, वेदभाषामयं दीयते। यदि इदं केन्द्रं आदौ न स्यात्, तदा बुद्धिविकासः, ज्ञानविकासः, भाषा-विकासः असम्भवः। यदि भौतिक जगति शक्ति-केन्द्राणि स्थी-

क्रियन्ते तदा कथं न सूक्ष्मबौद्धिक-आत्मिक-जगति ? अन्ते आत्म
जगति, आत्मनः परमात्मना सह योगादि-क्रियाभिः चिरस्थायि
सम्बन्धः स्थापितः भवति। तदा ईश्वर-सकाशात्, ईश्वर प्रेरणया
वा सम्पूर्ण-ज्ञान-विज्ञानं मिलति मानवाय स्वतएव, स्थूल-जगत
सर्वाणि साधनानि दूरीकृत्य। साधनानां सर्वेषां तत्र अन्तः जायते
यतोहि

"सूक्ष्मविषयत्वं च अलिङ्गपर्यवसानं"

( योगदर्शनं, प्रथमपादः, सू० ४५ )

बुद्धेः प्रकृति-पर्यन्तं अधिकारः। अत्र बुद्धेः परिसमाप्तिः भवति।
तत्परं तु ईश्वरं कोऽपि आत्मवान् प्राप्नोति, यत्र प्रकृतेः लेशोऽपि
नास्ति ।

एतादृशः विद्यते मानवस्य-भाषादि-विकास-क्रमः। अन्यः कोऽपि
नास्ति मार्गः, न भवितुं अर्हति। ईश्वरीय-ज्ञानं, अर्थात् वेदः
अत्र प्रमाणं।

## वेदः वेदभाषा च कियती प्राचीना विद्यते

सृष्ट्युत्पत्ति-कालः कः, अयं प्रश्नः ? भारतीय गणनानुसारं सृष्ट्यु-
त्पत्ति-कालात् आरम्भ अद्यपर्यन्तं १,९७,२९,४९,६० वर्षाणि
व्यतीतानि अर्थात् दशार्बुद, सप्तनवतिकोटि, नवत्रिंशतलक्ष, नवचत्वा-
रिंशत् सहस्र, षष्टि वर्षाणि जातानि यदा सृष्टिः उत्पन्ना। अयं सृष्टि
सम्वत्सरः, आर्य संवत्सरः वा इति कथ्यते। पूर्वं अस्माभिः कथित
आसीत् यत् सृष्ट्युत्पत्तिकाले भगवन्तः वेदाः प्रादुर्भूता। अतएव
प्रायः विंशति-अर्बुद-वर्ष-प्राचीनाः वेदाः, वेदभाषा च विद्यते
अस्माकं ज्योतिष-शास्त्रानुसारं एकैकं दिनं सृष्टि-संवत्सरस्य गणि
विद्यते। भारतीय संस्कृतसाहित्य तु इदं सर्वं स्पष्टतया सदेहराहित्ये

च दत्तं अस्ति, अस्य सर्वस्य पुष्टिः आधुनिक वैज्ञानिकैः अपि क्रियते। यद्यपि पाश्चात्यवैज्ञानिकानां वेदेषु वेदभाषायां भारतीय सृष्टि-काल-गणनायां कोऽपि विश्वासः नास्ति, तथापि ते प्रायः सर्वे स्वतन्त्ररूपेण अस्मिन् निष्कर्षे आगताः सन्ति, यत् सृष्ट्यारम्भ-कालः प्रायः विंशति-अर्बुद-वर्षप्राचीनः। ते वैज्ञानिकाः निश्चितगणनां तु कर्त्तुं असमर्थाः न तैः दातुं शक्यते सृष्टिसंवत्सरः, तथापि सामान्यतया तेषां अनुमानं प्रायः सत्यं एव। अस्माभिः 'प्रायः' इतिशब्दस्य प्रयोगः क्रियते, यतोहि भारतीय ज्योतिष-शास्त्रेषु विद्वत्सु कालगणनायां भिन्नत्वं प्राप्यते, एवमेव पाश्चात्यग्रन्थेषु तथा विद्वत्सु, परन्तु सामान्यतया एकत्वं विद्यते। अतः वेदान् आरभ्य सर्वं वैदिक-साहित्यं, आर्ष-ग्रन्थाश्च एतादृशाः प्राचीनाः। अनन्तरं संस्कृतभाषायां साहित्यं निर्मितं। संस्कृतभाषातः संसारस्य सर्वाः प्राकृतभाषाः प्रादुर्भूताः। 'प्राकृतभाषाः' इति शब्दस्य अर्थः भवति, वेदभाषायाः संस्कृतभाषायाः वा भ्रंशरूपाणि। प्रथमं तु लोके वेदभाषा आसीत्, परन्तु शनैः शनैः संस्कृत-शब्दानां भ्रंश-रूपाणि लोके प्रसृतानि। संस्कृतस्य भ्रंश-शब्दैः लोकस्य अन्याः भाषाः प्रादुर्भूताः। अयं एव लोके भाषोत्पत्तिक्रमः। शनैः शनैः लोके तत्तद्देशीयैः स्वभाषाणां व्याकरणानि, साहित्यं च निर्मितं परन्तु सर्वासां लोकभाषाणां आदिस्रोतः तु वेदभाषा संस्कृत भाषा च। वेदभाषा संस्कृत भाषा वा देवतानां अपि, यथा मानवानां। अतएव देववाणी इत्यपि कथ्यते लोके।

## परन्तु येषां ईश्वरे, वेदे विश्वासः नास्ति ?

परन्तु बहवः जनाः विद्यन्ते लोके येषां ईश्वरे विश्वासः नास्ति, कथं पुनः वेदे, सः तेन ईश्वरेण मानव-कल्याणाय दत्तः ? तेषां तु

साटोपं कथयामः यत् भगवन्तः वेदाः न केवलं भारतीयानां सम्पत्तिः अपितु समस्त संसारस्य। ईश्वरस्य यथा सूर्य-चन्द्र-पृथिवी-जल-वायु-आकाशादयः सर्वेषां मानवानां सम्पत्तिः, तथैव वेदाः अपि सर्वेषां मानवानां सम्पत्तिः। परन्तु येषां लोक-मानवानां ईश्वरे वेदे च विश्वासः नास्ति, तेषां कृते अस्माकं इदं निवेदनं। अस्य ग्रन्थस्य 'विषयः' 'धर्मः' नास्ति। ग्रन्थस्य मुख्य-विषयः तु वेदभाषा, संस्कृत भाषा, तासां महत्त्वं, स्थानं, इत्यादिकं च, यत् अस्माभिः पूर्वं स्पष्टी-कृतं। वेदभाषा सर्वप्रथमं आसीत् लोके, अतएव वेदभाषा कारणात् 'वेदस्य' उल्लेखोऽपि नितान्तं आवश्यकः जातः। येषां वेदेषु आस्था, श्रद्धा, विश्वासः तेषां इदं निवेदनं यत्, यदि इदं सत्यं ( सत्यं इदं ) यत् ईश्वरेण किमपि "स्वज्ञानं" मानव-हिताय दीयते, तदा तु तत् ज्ञान-दानं सृष्टिकालारम्भे भवितुं अर्हति न मध्ये, अन्यथा ईश्वरः 'अन्यायी' इति मन्येत। इदं सर्वं विचारशीलपुरुषैः गम्भीरतया पक्षपातं विहाय, विचारणीयं, यतोहि वेदाः (ईश्वरीय-सम्पूर्ण-ज्ञानं) तेषां अपि, यथा अस्माकं। ईश्वरस्य सर्वाणि वस्तूनि सर्वेषां मानवानां, जीवमात्रस्य कल्याणाय विद्यन्ते।

परन्तु अस्माकं अत्र कोपि आग्रहः नास्ति। ते मन्येरन् न वा, यतोहि तेषां एव हानिः न तु अस्माकं। येषां विशेषतया पाश्चात्य-विदुषां 'वेदेषु' आस्था नास्ति, तेऽपि न्यूनातिन्यूनं इदं तु मन्यन्ते एव यत् 'वेदाः, विशेषतया ऋग्वेदः' मानवपुस्तकालये 'सर्वप्रथमः लिखित-ग्रन्थः,' अतएव अस्मात् कारणात् "वेदः वेदभाषा च" प्राचीनतमा सिद्धयति। अत्र तु अस्माकं केवलं इदं एव उद्देश्यं, यत् वेदाः वेदभाषा च प्राचीनतमाः, अतएव वेदभाषातः संस्कृतं तथा संस्कृतात् लोकस्य सर्वाः भाषाः प्रादुर्भूताः, यथा भारतस्य सर्वाः क्षेत्रीयभाषाः

सौभाग्यं हि एतत् भारतस्य यत् ईरान–देशीयैः, एवमेव अफगानिस्तान-देशीयैः इदं सहर्षं स्वीक्रियते, यत् तेषां फारसी पुश्तो भाषा संस्कृतात् निस्सृता, अतएव तैः स्व-स्व-विश्व-विद्यालयेषु संस्कृतस्य पठनपाठनं 'अनिवार्यं' कृतं साहित्य-विद्यार्थिनां कृते। एवमेव इंगलैण्ड, फ्रान्स, अमेरिका, रूस, जापान, जर्मनी, चीनादि देशेषु संस्कृतस्य पठन पाठनं अन्वेषणं च समेधते तथा तेषु देशेषु संस्कृतभाषायाः कृते विशेष समादरोऽपि विद्यते। अद्य लोके एतादृशः विश्वासः समुत्पन्नोऽस्ति यत् संस्कृत-साहित्य-ज्ञानेन विशेषतया भारतीय-अध्यात्म-ज्ञानेन "चिरशान्तिः शाश्वत-सुखं च" भवितुं अर्हति, न अन्यथा। संस्कृत साहित्यं 'सत्यं–शिवं–सुन्दरम्' इति मन्यते तैः यत्र तत्र क्षेपकं विहाय। इदं महाश्चर्यकरं, आनन्ददायकं अपि, यत् विदिशेषु शोध-कार्यं अपि प्रचलति। जर्मनदेशे तु द्वितीयमहायुद्धस्य पूर्वं शोधकार्यं भवतिस्म संस्कृत-साहित्ये, वेदेषु अपि, अतएव जर्मन देशीयानां अद्य अपि विज्ञाने एतादृशी उन्नतिः विद्यते। जर्मनवैज्ञानिकाः अद्य अपि संसारस्य अन्यान् वैज्ञानिकान् अतिशेरते। सत्यं तु इदं एव यत् रूस देशे अमेरिका देशे या विज्ञान-प्रगतिः अवलोक्यते, तस्याः संचालनं प्रायः जर्मन-वैज्ञानिकैः क्रियते। कदाचित् अस्याः शताब्द्याः महत्तमः वैज्ञानिकः ईन्सटनः जर्मन देशीयः आसीत्, यः अन्ते अमेरिका-देशे गतः। महाश्चर्यस्य वार्त्ता यत् जर्मनदेशतः महर्षिदयानन्देन 'भगवन्तः वेदाः' भारते पुनः आनीताः। तदा भारते, संस्कृतभाषायाः उद्गमस्थले "भगवतां वेदानां ग्रन्थाः" अपि न आसन्। अतएव अस्माभिः भारतीयैः जर्मन-देशीयान् प्रति स्वकृतज्ञता-प्रकाशनं निःसंकोचेन क्रियते। एतादृशी साध्वी स्थितिः विदेशेषु संस्कृत-विषये विद्यते।

जैनानां बौद्धानां अपि वेदेषु आस्था नास्ति, परन्तु तेषां अपि विपुल-साहित्यं संस्कृतभाषायां विद्यते। जैन-बौद्ध-सम्प्रदायानां भारतं एव जन्मस्थानं, अतएव तैः संस्कृत-भाषायाः त्यागः न कृतः, तथा अद्य अपि बहवः जैनाः बौद्धाः देववाण्याः महापंडिताः विद्यन्ते, यैः संस्कृतमाध्यमेन पठनपाठनं, भाषणं, लेखनादिकं क्रियते। एतेषु महानुभावेषु कदाचित् महापंडितः राहुलसांकृत्यायनः मूर्धन्यतां भजते इदानीं। परन्तु प्राचीनकाले तु बहवः महापंडिताः बौद्धाः जैनाः अभवन्, यैः सर्वं कार्यजातं संस्कृतेन 'क्रियतेस्म। पूर्वं सर्वे धार्मिक-वाद-विवादाः संस्कृतमाध्यमेन एव भवन्तिस्म। आदिशङ्कराचार्यस्य जैनैः, बौद्धैः सह वाद-विवादाः लोक-प्रसिद्धाः। तत्र कर्मकाण्डिमंडन मिश्र महाभागेन तथा तस्य भार्यया "सरस्वती उभय भारती" देव्या सह शास्त्रार्थः सर्वान् शास्त्रार्थान् अतिशेते। बौद्धकालेऽपि संस्कृतस्य प्रथमं स्थानं आसीत्, तथा पठित-समाजे प्रायः संस्कृतं भाषणभाषा आसीत्। महाश्चर्यकरं तु इदं आसीत्, यत् आदि-शङ्कराचार्यस्य तथा महापंडित मण्डन मिश्रस्य शास्त्रार्थे "मध्यस्था" पं० मंडन मिश्रस्य महापंडिता भार्या "सरस्वती उभय भारती" आसीत्। तया पक्षपातं विहाय स्वपत्युः पं० मंडन मिश्रस्य शास्त्रार्थे पराजयः उद्घोषितः। एका आख्यायिका विद्यते, यत् यदा आदिशङ्कराचार्यः पं० मंडन मिश्रस्य नगर्यां 'माहिष्मती' नाम्नीं प्राप्तः, तदा नगर्यां मार्गे कतिपय-स्त्रियः मिलिताः। यदा आदिशङ्कराचार्येण ताभिः सह पं० मंडन मिश्रस्य गृह-विषये पृच्छा कृता, तदा ताभिः स्त्रीभिः संस्कृतकाव्ये उत्तरं दत्तं यत् इदं :—

स्वतः प्रमाणं परतः प्रमाणं कीराङ्गनाः यत्र गिरं गिरन्ति,
द्वारस्थ-नीडान्तर-सन्निरुद्धाः, जानीहि तन्मंडन-पंडितौकः।

फलप्रदं कर्म फलप्रदः अजः, कीराङ्गनाः यत्र गिरं गिरन्ति,
द्वारस्थ-नीडान्तर-सन्निरुद्धाः, जानीहि तन्मंडनपंडितौकः।
जगत् ध्रुवं स्यात्, जगत् अध्रुवं स्यात्, कीराङ्गनाः यत्र गिरं गिरन्ति,
द्वारस्थ-नीडान्तर-सन्निरुद्धाः, जानीहि तन्मंडन-पंडितौकः।
( शंकर-दिग्विजयः )

परन्तु सामान्यतया इदं सत्यं, यत् संस्कृत भाषायाः ह्रासः बौद्धकाले प्रारब्धः, यतोहि बुद्धमहाभागेन प्राकृतभाषायां प्रचारः कृतः, या तस्मिन् काले अपठित-समाजस्य, जनसाधारणस्य भाषणभाषा आसीत्। तदा प्रायः सर्वं भारतं बौद्ध-सम्प्रदायावलम्बि जातं आसीत्, तथा प्राकृतभाषायां विपुल-बौद्ध- साहित्यं निर्मितं आसीत्। प्राकृतभाषा तु संस्कृतभाषायाः भ्रंशरूपं, तथापि भ्रंशरूपस्य प्रचारः बाहुल्येन जातः। बहवः राजानः बौद्धाः जाताः अतएव संस्कृतस्य तत् सम्मानं नासीत यदा पुरा आसीत्। अतएव ऐतिहासिक-तथ्यं इदं कथयितुं शक्यते, यत् बौद्धकाले भारतेवर्षे संस्कृतस्य ह्रासः आरब्धः, यः प्रायः दासतायाः द्विसहस्र-वर्षेषु पूर्णतां गतः, येन संस्कृतं अद्य भारते नामशेषतां भजते। भयं तु इदमेव, यत् कदाचित् संस्कृतस्य आत्यन्तिक-लोपः न स्यात्। संस्कृतस्य लोपे जाते सति, वेद धर्मस्य, संस्कृत-साहित्यस्य एवमेव भारतीय संस्कृतेः, अध्यात्मवादस्य, यः अशान्त-संसारस्य आश्रय-स्थानं लोपः न स्यात्। अस्माकं ऋषि-मुनीनां अमूल्यविचाराणां 'अक्षयनिधिः' तदा नश्येत्। एकस्मिन् शब्दे भारतीयानां सर्वस्वं नश्येत्। तदा भारतीयाः नामशेषतां भजेयुः तथा छिन्नभिन्नाः भूत्वा भूयोऽपि वैदेशिक-दासतापाशे निबद्धाः भवेयुः। एतादृशी दुरवस्था मा भवेत् भारतस्य भारतीयानां इति अस्माकं चिन्ता। अनेन मार्गेण तु लोकस्य अपि नाशः स्यात् वेदज्ञान-अभावात्।

कदाचित् सर्वे भारतीया: इदं ऐतिहासिकं तथ्यं न जानन्ति, यत् बौद्ध-सम्प्रदाय: भारत-दासताया: प्रधानकारणं। भारतस्य उत्तरे हिन्दुकुशपर्वत-पर्यन्तं भारतीया: बौद्धा: जाता: आसन्। काबुल प्रदेशे तथा वर्त्तमान-सिन्ध्यादि-प्रदेशेषु प्राय: सर्वे निवासिन: बौद्धा: आसन्। यदा विदेशीया: आक्रामका: उत्तर-पश्चिम-मार्गात् भारते आगता:, तदा बौद्धै:, ये भारतीया: आसन् देश-रक्षायै इदं कथयित्वा युद्धं न कृतं, यत् तेषां 'अहिंसा परम: धर्म:'। अन्ते ते एव बौद्धा: वैदेशिकाक्रामकै: मारिता:, वन्दी-कृता: तथा बलात् मुस्लिम-धर्मे नीता:। सर्वप्रथम: वैदेशिका-क्रामक: 'मुहम्मद बिनकासिम' आसीत्'। न्यूनातिन्यूनं भारतस्य कृते तु बौद्ध-सम्प्रदाय: सर्वप्रकारेण नाश-कारणं जातं। बौद्ध-सम्प्रदायस्य रूपं जापानादि देशेषु सर्वथा भिन्नं। तत्रत्यै: बौद्धै: स्वदेशस्य प्राणपणेन रक्षा क्रियते तथा कदापि नहि कथ्यते यत् 'अस्माकं धर्म: युद्धकरणं नास्ति', यदि देश-स्वातन्त्र्य-रक्षा-प्रश्न: समक्षे आगच्छेत्।' कदाचित् भारतीया: इदं अपि न जानन्ति, यत् बौद्धविहारा: "व्यभिचारस्य केन्द्राणि जातानि आसन्।" बौद्धेषु किमपि भयं नासीत्, यतोहि बौद्ध-सम्प्रदायानुसारं 'कोऽपि ईश्वर: नास्ति, य: कर्मानुसारं दण्डं ददाति, आत्माऽपि नास्ति, य: कर्मानुसारं ईश्वर-व्यवस्थया पाप-पुण्य-फलं प्राप्नोति।' अस्यां दशायां एतेषु घोर-नास्तिकेषु कथितभारतीयेषु 'सद्व्यवहार:, सदाचार:' लोपं गत:। ते भारतीय बौद्धा: वस्तुत: भ्रष्टाचारस्य मूर्तय: जाता:।' य: वेदधर्मस्य सूर्य: किञ्चित्कालपर्यन्तं नास्तिकबौद्ध-सम्प्रदायस्य अज्ञा-नान्धकारमेघै: आच्छादित: आसीत्, भूयोऽपि आदि-शङ्कराचार्यस्य प्रयत्नेन प्रकाशं गत:। इदं तु आवश्यकं नास्ति, यत् सर्वेषां भारती-

यानां आदि-शङ्कराचार्य-प्रतिपादित-धर्मे विश्वासः स्यात्, परन्तु इदं ऐतिहासिकं तथ्यं यत् तेन महाभागेन वेद-धर्मस्य स्वव्याख्यानुसारं पुनः संस्थापनं कृतं। महोपकारः कृतः तेन। अन्ते महर्षिदयानन्देन 'वेद-धर्मस्य वास्तविक-स्वरूपं संस्थापितं विश्व-कल्याणाय। वेद-धर्मस्य भूयः संस्थापनेन अस्माकं 'संस्कृतं, साहित्यं, संस्कृतिश्च जीवति। यदि संस्कृतं जीवति, तदा न केवलं भारतस्य कल्याणं भविष्यति, अपितु संसारस्य।

परन्तु भारतीयैः सावधानैः भाव्यं, यतोहि स बौद्ध सम्प्रदायः, यः न्यूनातिन्यूनं भारतस्य सर्वतः पतनकारणं जातं, यस्य कारणात् भारतं प्रायः द्विसहस्रवर्षाणि यावत् वैदेशिकानां आक्रामकाणां 'दासतापाशे-निबद्धं अतिष्ठत् स एव भारतीय शासकैः (कथित-धर्म-निरपेक्ष-राज्य-वादिभिः) चौर-द्वारेण आनीयते, पंचशीलादि-मिषेण, भ्रमजालप्रसारेण। कोटिकोटि-मुद्राः व्ययी-क्रियन्ते एतैः शासकैः कथितभारत-देशहितैषिभिः कथितभारतीयस्वतन्त्रता-रक्षकैः। यदि वस्तुतः अस्माकं भारतीय गणराज्यं 'धर्मनिरपेक्ष-राज्यं' तदा कथं शासकानां बौद्ध-सम्प्रदाये अयं पक्षपातः ? भारतीयाः, विशेषतया वेदधर्मावलम्बिनः बौद्धाः क्रियन्ते। एतैः नव-बौद्धैः कानि कानि देशद्रोहि-कार्याणि नहि कृतानि इति तिरोहितं नास्ति शासकानां, बौद्ध-धर्म-पक्षपातिनां। यदि कोऽपि राज्यधर्मः भारते भवितुं अर्हति, स तु वेद-धर्मः एव। इमे शासकाः सर्वे, प्रथमं संस्कृतं पठेयुः, तथा वेदान् अपि, येन वास्तविक-भारतीयप्राचीनगौरवस्य, स्व-भारतीय संस्कृतेः, स्वधर्मस्य सम्यक् ज्ञानं तेषु स्यात्। इदं सर्वं तु वैयक्तिकरूपेण अपि कर्त्तुं शक्यते भारतीयशासकैः। यदि ते भारतगणराज्यं 'धर्मनिरपेक्ष-राज्यं' उद्घोषयन्ति, तदा अस्माकं विरोधः नास्ति अत्र। विरोधः

तु तदा जायते, यदा 'बौद्ध-सम्प्रदायस्य' पक्षपातः शासकैः स्पष्टतया क्रियते। एकस्मिन् शब्दे यः बौद्ध-सम्प्रदायः अस्माकं पतनकारणं, अस्माकं दासता-कारणं, कथं भारते भूयोऽपि आनीयेत ? विशेषतया तदा, यदा वयं अवलोकयामः यत् नव-बौद्धाः राजनीतिक-कारणैः वैदेशि-बौद्ध-राज्यानि, नैजराज्यानि इति मन्यन्ते, तथा राजनीतिक-प्रयोजनेषु वैदेशि-राज्यानां साहाय्यं कामयन्ते। एतैः नव-बौद्धैः स्पष्टशब्देषु स्थाने स्थाने कथ्यते, तथा अनेन आधारेण देश द्रोहि-कार्याणि क्रियन्ते। शासनं मौनं तिष्ठति इति महाश्चर्यं यतोहि अनेन मार्गेण देश-स्वातन्त्र्यं नश्येत्। चीन देशात् भारतं विशेषतया सावधानं स्यात्। तानि सर्वाणि कारणानि विचार्यन्ते अत्र, यैः बौद्ध-काले संस्कृतस्य परमह्रासः जातः, तथा स ह्रासः अद्य अपि भारतीय शासने ( वस्तुतः बौद्ध-गते ) सवेगं अवलोक्यते। शासकानां तोष-नीतिः आरम्भतः घातकी, येन देश-विभाजनं जातं। राष्ट्रभाषा-क्षेत्रीयभाषा-नीतिः एतादृशी, येन प्रान्ते प्रान्ते विभाजनं स्यात्। भारतीयाः अभारतीयाः इव कथं कार्यं कुर्वन्ति, इति विचार-पथे न आगच्छति। आशा तु इयं एव आसीत् यत् देश-स्वातंत्र्यलाभे भारतैक-सूत्र-गते, भारतस्य, अमर भारत्याः (देववाण्याः संस्कृतस्य) आशातीतं उन्नतिः सर्वेषु क्षेत्रेषु भविष्यति, परन्तु सा आशा निराशायां परिवर्तिता। अद्य तु भारतीय-स्वातन्त्र्यस्य त्रयोदशवर्षे भारतीयानां कृते "अन्नं, वस्त्रं, गृहं" अपि नास्ति। "कीदृशं इदं स्वाराज्यं ?" इति भारतीयसर्वसाधारण-जनानां प्रश्नः ? वयं कामयामहे यत् इमे शासकाः तिष्ठेयुः, परन्तु तैः राष्ट्रिय-शासनं स्थापनीयं, येन राजनीतिक दलानां व्यर्थ-विरोधे देश-नाशः न स्यात्। कारणं तु इदं एव यत् भारते दलद्वयं नहि तिष्ठति। अधिनायकत्वं

राष्ट्रिय शासनं वा उपायः, परन्तु मार्गद्वये "राष्ट्रिय शासनं" वरं। वस्तुतः उचितं तु इदं एव, यत् सर्वाणि प्रान्तीय शासनानि दूरीकृत्य "केन्द्रीय एकच्छत्रराज्य" स्थापितं स्यात् भारते, येन प्रान्तीय भेदभावाः, ईर्ष्याद्वेषादयः विलयतां गच्छेयुः। परन्तु इदं सर्वं भारतीय-राजनीतिज्ञैः मिलित्वा विचारणीयं भारतीय-राजनीतिशास्त्रानुसारं, देशस्थित्यनुसारं। प्रत्येकं देशस्य स्थितिः, इतिहासः, राष्ट्रीय स्वभावः भिन्नः भवति। यावत् राजनीतिकक्षेत्रे शान्तिः नास्ति, तावत् कस्मिंश्चित् अपि क्षेत्रे शान्तिः न स्यात्। इदानीं अवलोक्यते, यत् "राष्ट्रिय-अन्नादिसंकटे" विविध-दलैः विरोधिकार्याणि क्रियन्ते स्वदलस्य प्रधानता स्थापनाय। अस्यां दशायां इदं निवेदनं नितान्तं आवश्यकं, यद्यपि अस्य पुस्तकस्य विषयः "राजनैतिकः" नास्ति। विविध-राजनैतिक-दलेषु, विवदमानेषु, राष्ट्रिय-शिक्षा प्रश्नः, संस्कृतप्रश्नोपि संकटापन्नः अवलोक्यते। अतएव संस्कृतहिताय वयं कामयामहे राजनैतिक-क्षेत्रे शान्तिः। भारतीय-राजनीति-शास्त्रानुसारं अत्र किमपि समाधानं दीयते अस्माभिः, येन देशोन्नतिः सम्भवा स्यात्। राष्ट्रिय समस्यानां तु "राष्ट्रिय-शासनेन" समाधानं कर्त्तुं शक्यते, न तु केनाऽपि दलीय शासनेन। अनेन मार्गेण शासकाः राजनैतिक-शान्तिस्थापने, संस्कृतस्य उन्नतिकरणे समर्थाः भवेयुः देशस्य कल्याणाय।

अस्य अध्यायस्य अयं सारः यत् यथा वेदः धर्ममूलं लोके, तथैव वेदभाषा विश्वस्य सर्वासां भाषाणां आदि-मूलं। वेदभाषा वेदतः पृथक् कर्त्तुं नहि शक्यते अन्योन्याश्रयत्वात्। यत्र वेद-भाषायाः विचारः क्रियेत सर्वासां भाषाणां जननीत्वात्, तत्र वेदस्य अपि विचारः आवश्यकः। यथा ईश्वरः जगतः आदिकारणं

तथैव स ईश्वरः एव आदिकारणं वेदस्य वेदभाषायाः, येन मानवस्य मानसिक-बौद्धिक-आत्मिकोन्नतिः सम्भवा स्यात्। मानवः केवलं शरीरं, एकं मांसपिंडं, नास्ति, अपितु आत्मा अपि, यस्य आत्मनः जीवनोद्देश्यं केवलं शारीरिकसुखं नास्ति। ईश्वरस्य जगतः यथार्थ ज्ञानं तथा ईश्वरप्राप्तिः तस्य मानवस्य चरमोद्देश्यं। अतः ईश्वरेण वेदः, वेदभाषाद्वारेण, सृष्टिरचनाकाले दीयते, येन बौद्धिक-आत्मिकोन्नतिः सम्भवेत् मानवस्य।

केनाऽपि मानवेन जगतः रचनं कर्त्तुं नहि शक्यते, तथैव वेदस्य वेद भाषायाः अपि। अतः भाषायाः सत्यज्ञानस्य च आदि स्रोतः ईश्वरः एव। इदं संक्षेपे भारतीयभाषोत्पत्ति-विज्ञानं। न्यूटनादि–भौतिक-वादिनां विकास-क्रमः (ईश्वरं सर्वथा विहाय, लोकात् बहिष्कृत्य च) अत्र नहिं लगति।

'यथा राजा तथा प्रजा' इति सत्यस्थितिकारणात्, संस्कृतस्य उत्थानपतनेतिहासस्य विचारः महाभारतात् प्राक् अनु वा भारतीय विविधशासनानां विचारं विहाय भवितुं नहिं अर्हति। अन्ते दुष्टशासनं भाषा-साहित्यादि-पतनस्य प्रधान-कारणं।

यत् बीजरूपेण अस्मिन् अध्याये दीयते, तस्य विस्तृत-विचारः आगामि-अध्यायेषु करिष्यते 'लोकः' 'वेदः' इति विभागद्वयं आधारीकृत्य।

द्वितीये अध्याये संस्कृत-पतनस्य कारणानि दीयन्ते तथा अयं अपि विचारः क्रियते, यत् केन मार्गेण संस्कृतस्य समुन्नतिः भवितुं अर्हति, येन संस्कृतं भूयोऽपि स्वस्थानं प्राप्नुयात् भारते, लोके च। वयं विशेषरूपेण भारतसर्वकारस्य (वर्तमान, भावि च) कर्णपथे सादरं निवेदयामः, यत् "संस्कृतेन" एव सर्वासां भारतीय समस्यानां समाधानं स्यात् सर्वेषु कालेषु।

# द्वितीयः अध्यायः

## संस्कृतस्य महत्त्वं, प्राचीन भारते विश्वे च स्थानं। भारतीय ईश्वरवादः तथा डारविनाद-पाश्चात्य विदुषां विकासवादः।

न असतः विद्यते भावः न अभावः विद्यते सतः,
उभयोः अपि दृष्टः अन्तः तु अनयोः तत्त्वदर्शिभिः।
(गीता, अध्याय २, श्लोक १६)

पूर्वाध्याये अस्माभिः विचारितं, यत् कथं भाषोत्पत्तिः भवति लोके। नवीनः अयं विचारः, अतएव पुनः संक्षेपे अत्र दीयते सम्यक् ज्ञानाय, यतोहि ईश्वरः भाषोत्पत्तेः प्रधान-कारणं। येषां ईश्वरे विश्वासः नास्ति, यथा अद्यतनीयाः भौतिकवैज्ञानिकाः तथा अन्येऽपि नास्तिकाः, तैः अपि काचित् महाशक्तिः तु मन्यते यया इयं सर्वा रचना, अनन्ता, सूक्ष्मा, उद्देश्यपूर्णा कृता, या रचना मानवेन कदापि कर्त्तुं नहि शक्यते। एतेषां वैज्ञानिकनां तथा नास्तिकानां कृते कथयिष्यते, यत् तया अदृष्ट-शक्त्या, चैतन्यया ईश्वरः नाम भाषोत्पत्तिः अपि क्रियते, यथा अन्यानि भौतिक शक्ति-केन्द्राणि तया जीवमात्रस्य कल्याणाय स्थापयन्ते। यदि भौतिक-जगति कर्मेन्द्रियाणां, ज्ञानेन्द्रियाणां कृते, स्थूल-सूक्ष्म-शक्ति-केन्द्राणि महाकायानि, कोटि-कोटि-क्रोश-दूरे निकटे वा निर्मितानि, तदा किं तेन ईश्वरेण तया चैतन्यया महाशक्त्या वा आत्मिक-मानसिक-बौद्धिक जगति, आत्मकोन्नत्यै, ज्ञानोत्पादक-केन्द्राणि नहि निर्मास्यन्ते, येन मानवस्य, सर्वेषु क्षेत्रेषु उन्नतिः स्यात्? किमपि वस्तु अदृष्टं,

अतएव तत् नास्ति, इयं स्थितिः तु कदापि साध्वी भवितुं न अर्हति। भौतिकजगति अपि बहूनि वस्तूनि अदृष्टानि यथा आकाशः, विद्युत, वायुः इत्यादीनि, परन्तु तेषां सत्तायां कस्यचित् बुद्धिमतः सन्देहः नास्ति। विद्युत्—चमत्कारः तु अद्य सर्वस्मिन् देशे, सर्वेषु नगरेषु, उपनगरेषु अवलोक्यते। यद्यपि चर्मचक्षुषा विद्युत् प्रत्यक्षी-कर्तुं नहिं शक्यते, तथापि विद्युत् अस्ति 'इति विषये कः वराकः, आस्तिकः, नास्तिकः वा शंकां कुर्यात्। यदि कोऽपि शंकां कुर्यात्, कथयेत् च 'विद्युत् नास्ति', तदा जनैः कथंयिष्यते स 'विकृत–मस्तिष्कः'। अतर्क्यं प्रमाणं इदं।

डारविनादि–वैज्ञानिकानां "विकास-क्रम-सिद्धान्तः" अपूर्णः असत्यश्च सिद्धः इति, पाश्चात्य-वैज्ञानिकैः अद्य उद्घोष्यते। क्षुद्रकीटात् अद्यतनः मानवः, मत्स्य-वानर-वनमानुषादिः भूत्वा पुच्छादिविरहितः, ज्ञानयुक्तः सञ्जातः इतिसंक्षेपे विकासवादिनां सिद्धान्तः। विकास-वादिभिः, कथ्यते, यत् लक्षलक्ष-कोटि कोटि-वर्षाणि व्यतीतानि तदा कीटतः मानवः विकासं गतः। परन्तु इदं सर्वं एका मिथ्या कल्पना, अल्पज्ञ-मानवस्य अज्ञानं। भाषा-विषयेऽपि एतः विकासवादिभिः अनेन प्रकारेण अनर्गलं सर्वथा असत्यं कथ्यते, यथा मानव-विकास-विषये। वस्तुतः डारविनादि वैज्ञानिकानां ईश्वरे विश्वासः नासीत्। तेषां कृते केवलं प्रकृतिः आसीत्। यत्किञ्चित् अक्षि-लक्ष्यी-कर्तुं शक्यते प्रत्यक्ष-जगति, तदेव सत्यं। प्रायः १५ शताब्दीतः आरभ्य कदाचित् १८ शताब्दीं यावत् अयं विकासवादः सर्वथा सत्यः सिद्धान्तः मानितः। इतिहासस्य अपि क्षेत्रेषु प्रयुक्तः अयं सिद्धान्तः। इतिहासे यदा विकास-सिद्धान्तः लग्नः, तदा इतिहासकाराणां विचारानुसारं

प्रस्तर-काष्ठ-लौहादि-युगानि व्यतीतानि । शनैः शनैः मानवस्य ज्ञाने वृद्धिः जातः, तदा स मानवः एतावान् ज्ञानी सञ्जातः, यथा अद्य अवलोक्यते । यदा पाश्चात्यैः भारतस्य इतिहासः रचितः, तदा तैः लिखितं, यत् प्रथमं भारतीयाः पूर्णतया अज्ञानिनः आसन् । भगवन्तः वेदाः "गोपालानां गीतानि, अश्लीलानि, ग्रामीण भाषा-युक्तानि इत्यादि सन्ति । पूर्वं भारतीयाः प्राकृतवस्तूनां पर्वत-नदी-मेघ-विद्युत-वृक्षादि-देवतानां पूजकाः आसन् । शनैः शनैः भारतीयाः ज्ञानिनः जाताः, मुख्यतया यूरोपदेशीयानां कृपया. तेषां भाषा–सभ्यता–धर्म-शासनादि-आधारेण । भारतीयेतिहासः सर्वः द्विसहस्रवर्षेषु समाप्तः एतैः, यदा भारतीयेतिहासः प्रायः विंशति-अर्बुद-वर्षप्राचीनः यथा अस्माभिः पूर्वाध्याये निवेदितं । भारतीय ज्योतिष-विद्-भिः सृष्टिकालात् आरभ्य अद्यपर्यन्तं एकैकं दिनं गणितं, अतएव सृष्टि–संवत्सरे त्रुटिः भवितुं नहि अर्हति ? प्रायः सार्धपंचसहस्रवर्षाणि तु महाभारत–युद्धाय व्यतीतानि । राम–रावण–युद्धाय प्रायः सार्धचतुर्दशलक्ष-वर्षाणि व्यतीतानि । अतएव केवलं द्विसहस्रवर्षेषु भारतीयेतिहासस्य समाप्तिः कथं भवेत् इति आश्चर्यं ? सारः तु अयं एव यत् पाश्चात्येतिहासकारैः भारतस्य इतिहास-विषये यत्किञ्चित् लिख्यते तत्सर्वं प्रायः असत्यं, कथितविकासवादस्य प्रदर्शन-मात्रं । न्यूनाति-न्यूनं भगवतां वेदानां, वेदभाषा–विषये विकास–वाद–कारणात् यत् किञ्चित् पाश्चात्यविद्वद्भिः लिख्यते, तत् भ्रममूलकं । दौर्भाग्यं अस्माकं भारतीयानां यत् संस्कृतभाषाज्ञान-अभावात्, संस्कृत-साहित्य-पठन-योग्यता-अभावात् अस्माभिः पाश्चात्य विदुषां अन्धविश्वासः कृतः क्रियते च । वेद - विषयेऽपि यत्किञ्चित्

मैक्समूलरादिभिः लिख्यते तत् "सत्यं" इति मन्यते अस्माभिः अज्ञानात्, परन्तु यत् अस्माकं ऋषि-महर्षि-मुनिभिः लिखितं, तत्सर्वं असत्यं। कीदृशी विडम्बना, कीदृशं महत् अज्ञानं ! यस्य उदाहरणं नास्ति लोके।

प्रश्नः तु अयं एव, यत् डारविनादि-पाश्चात्य-वैज्ञानिकानां भौतिक-विकासवादः सत्यः उत भारतीय ऋषि-मुनीनां अध्यात्म-वादः सत्यः ? भारतीय विचारकानां वादः सत्यः न तु पाश्चात्य-भौतिक-विज्ञानवादिनां, क्षणिक-वादिनां वा इति अस्माकं निश्चितं मतं। सृष्टिः एकवारं नहि जायते, अपितु वारं वारं भवति अनादि-चक्र-रूपेण। यथा दिनं, पुनः रात्रिः, रात्रिः पुनः दिनं, तथैव सृष्टिः, पुनः विनाशः, बिनाशः पुनः सृष्टिः इति अनादि-क्रमः प्रचलति। विनाशः तु अस्मात् कारणात् सिद्ध्यति यत् यस्य उत्पत्तिः तस्य विनाशः अवश्यम्भावी—

जातस्य हि ध्रुवः मृत्युः, ध्रुवं जन्म मृतस्य च,<br>
तस्मात् अपरिहार्ये अर्थे, न त्वं शोचितुं अर्हसि।

(गीता अध्याय २ श्लोक २७)

कार्यजगत् तु कदापि अनादि न स्यात्, यथा शरीरादिकं नास्ति। ये नास्तिकाः 'कार्य-जगत् अनादि' इति मन्यन्ते, तेषां तु अयं भ्रमः। श्री मद्भगवद्गीतायां विद्यते,

प्रकृतिं पुरुषं चैव विद्धि अनादी उभौ अपि,<br>
विकारांश्च गुणांश्चैव विद्धि प्रकृति-संभवान्।<br>
कार्यकारणकर्तृत्वे हेतुः प्रकृतिः उच्यते,<br>
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः उच्यते।

पुरुषः प्रकृतिस्थः हि भुंक्ते प्रकृतिजान् गुणान्,
कारणं गुणसङ्गः अस्य, सद्-असद्-योनिजन्मसु।
उपद्रष्टा, अनुमन्ता च, भर्ता भोक्ता महेश्वरः,
'परमात्मा' इति च अपि उक्तः, देहेऽस्मिन् पुरुषः परः।

(गीता अध्याय १३ श्लोक १९-२२)

द्वा सुपर्णा सयुजा सखाया समानंवृक्षं परिषस्वजाते,
तयोः अन्यः पिप्पलं स्वादु अत्ति अनश्नन् अन्यः अभिचाकशीति।

(ऋग्० म० १, सू० १६४, मं० २०)

अत्र वेद-प्रमाणात् श्रीमद्भगवद्गीतायाः प्रमाणत्वं सिद्ध्यति।

अयं एव संक्षेपे भारतीय अध्यात्मवादः। भारतीय वादानुसारं ईश्वरः आत्मा प्रकृतिः इति त्रीणि अनादि-तत्वानि विद्यन्ते, येषां कदापि नाशः न भवति। जगत् भूयः भूयः भवति, नश्यति च अनादिचक्ररूपेण। भाषोत्पत्तिः अपि ईश्वरेण, प्रधान-तत्त्वेन, सच्चिदानन्देन सर्गादौ क्रियते मानवस्य हिताय। अतएव वयं भारतीयाः कथयामः, यत् 'वेद भाषा" (लोके संस्कृतं) प्रायः विशंति-अर्बुदवर्षप्राचीना, सर्वासां विश्वभाषाणां जननी। अत्र अस्माभिः सर्वप्रथमं संस्कृत-लिपिविचारः क्रियते, तत्पश्चात् संस्कृत भाषायाः संस्कृत-साहित्यस्य च करिष्यते। अन्ते वयं विचारयिष्यामः यत् संस्कृतभाषायाः किं स्थानं भारते विश्वे च आसीत्, तथा किं स्थानं संस्कृतभाषायै उचितं इदानीं।

## संस्कृत-लिपिः, तस्याः महत्त्वं च

संस्कृत लिपेः अपरनाम 'देवनागरी लिपिः', यथा संस्कृतस्य अपरनाम 'देवभाषा' इति विद्यते। संस्कृत-लिपिः अपि प्राचीनतमा लोके यथा संस्कृतभाषा। संस्कृतलिपितः संसारस्य भारतस्य च

सर्वाः प्राकृत-लिपयः प्रादुर्भूताः, यथा संस्कृतात् सर्वाः लोकभाषाः इति स्थितिः।

संस्कृतलिपेः ज्ञानेन इदं स्पष्टं स्यात्, यत् कीदृशी वैज्ञानिकी सा लिपिः विद्यते। वस्तुतः संस्कृतलिपिः एकं 'विज्ञानं' भारतीय विचारकाणां महत्त्व-प्रदर्शकं। 'स्वराधारे' अस्याः वैज्ञानिकी रचना यस्याः उदाहरणं लोके न मिलति। संस्कृतलिपिः वस्तुतः स्वतः प्रमाणं, अन्याः सर्वाः लोक-लिपयः परतः प्रमाणं। संस्कृत-लिपेः प्रत्यक्ष-महत्वं, श्रेष्ठत्वं, वैज्ञानिकत्वं तु इदं यत्, यत्कथयिष्यते, तदेव लेखिष्यते, यदेव लेखिष्यते, तदेव पठिष्यते। केवलं संस्कृत-लिपेः उच्चारण-ज्ञानं आवश्यकं। अन्यासु लिपिषु एतादृशी स्थितिः नास्ति। तासु सर्वासु अक्षराणां उच्चारणं भिन्नं, अवैज्ञानिकं, स्वरादिभ्यः विपरीतं। तासां लिपीनां अक्षरैः ये शब्दाः निर्मीयन्ते, तेषां उच्चारणं भिन्नं। कारणं इदं यत् तासुसर्वासु लिपिषु अक्षराः स्वर-व्यञ्जनानां 'मिश्रणं' येन तासु भाषासु 'शब्दानां' उच्चारणं 'कृत्रिमं' स्वेच्छानुसारं विद्यते, तासां लिपीनां ज्ञानेन 'शब्दोच्चारण-ज्ञानं' कदापि न स्यात्। यत् उच्चार्यते, तत् कदापि लेखितुं नहि शक्यते, यत् लिख्यते, तत् कदापि पठितुं नहि शक्यते।

## आंग्लभाषायाः तस्याः लिपेः च मोहः

अद्य भारतेवर्षे आंग्लभाषायाः, तस्याः लिपेः च महामोहः विद्यते। लोकेऽपि तस्याः अन्ताराष्ट्रियत्वं महत्त्वं अवलोक्यते। परन्तु कीदृशी आंग्लभाषा-लिपिः विद्यते? चतुर्-लिपयः आंग्लभाषायाः अर्थात् लेखनस्य लघु-दीर्घ-लिपिद्वयं तथा पुस्तकेषु पठनस्य लघु-दीर्घ-लिपिद्वयं। अनेन प्रकारेण आंग्ल भाषायाः

चतुर्लिपीनां ज्ञानं आवश्यकं। द्वितीयं आंग्ललिपेः इमे अक्षराः। यथा "ए, बी, सी, डी, ई, ऐफ, जी, ऐच, आई, जे, के, ऐल, ऐम, ऐन, ओ, पी, क्यू, आर, ऐस, टी, यू, वी, डबल्यू, ऐक्स, वाई, जेड" विद्यन्ते। इमे सर्वे अक्षराः अवलोकनमात्रेण एव न "स्वराः" न "व्यञ्जनाः", अपितु अनेकानां स्वर-व्यञ्जनानां "अवैज्ञानिकं मिश्रणं"। अनेन अवैज्ञानिक-लिपि-कारणात् शब्द रचना, उच्चारणं च सर्वथा अवैज्ञानिकं भवति यथा 'पुट' शब्दः 'पी, यू, टी, इति अक्षरैः निर्मितः, एवमेव 'बट' शब्दः 'बी, यू, टी, अक्षरैः निर्मितः, तथा 'लाफ' इति शब्दः 'एल, ए, यू जी, ऐच अक्षरैः निर्मितः। स्पष्टं सन्देह-राहित्येन, यत् "सर्वथा कृत्रिमोच्चारणं" आंग्ल शब्दानां। 'पुट' उच्चारणं 'पी, यू, टी' अक्षरैः, 'बट' उच्चारणं 'बी, यू, टी' अक्षरैः, तथा 'लाफ' उच्चारणं 'ऐल, ए, यू, जी, ऐच' अक्षरैः कथं भवितुं अर्हति, बुद्धौ न समायाति? आंग्लभाषा–अक्षर–ज्ञानेन तु 'पी, यू, टी' 'बी, यू, टी' ऐल, ए यू, जी, ऐच, इति उच्चारणं अक्षराणां स्यात्। अन्यत् उच्चारणं कथं सम्भवेत्? इति अस्माकं आंग्लान् प्रति प्रश्नः? अहं तु विचारयामि, यत् कदाचित् आंग्लभाषाभाषिणः, विज्ञाः वा, अद्य संसारे अन्यभाषा–विज्ञेभ्यः अधिकाः, यतोहि इयं आंग्ल भाषा अन्ताराष्ट्रिय भाषाऽपि विद्यते, यथा पूर्वे फ्रेञ्चादयः आसन्। भारतं विहाय शेषलोकस्य लिपयः, शब्द निर्माणं, उच्चारणं च एतादृशं यथा आंग्ल-भाषायां विद्यते। यदि एतादृशं "कृत्रिमोच्चारणं" कण्ठस्थी-कृतं न स्यात्, तदा तु शब्द-ज्ञानं अपि केवलं आंग्लादि-लिपि-ज्ञानेन असम्भवं। किं अस्यां दशायां इदं उचितं नास्ति, यत् सर्वासां लोक-भाषाणां लिपिः संस्कृत-लिपिः स्यात्? तत्तद्

भाषाभाषिणां हितं अत्र विद्यते न तु अस्माकं। अनेन संस्कृत-लिपिग्रहणेन सर्वाः लोकभाषाः "सुरक्षिताः" स्युः, एवमेव तासां सर्वासां साहित्यादिकं, ज्ञान-विज्ञानं च। इयं संस्कृत-लिपिः भारतीयानां इति कथयित्वा, ईर्ष्या-द्वेषकारणात् वा स्वहानिः न कर्त्तव्या लोकेन। अनेन एकः अन्योऽपि महालाभः स्यात, यत् संसारस्य सर्वं ज्ञान-विज्ञानं सरलतया अन्येभ्यः जनेभ्यः, देशेभ्यः वा प्राप्तं स्यात्। अनेन मार्गेण शनैः शनैः लोकः एकः 'कुटुम्बवत्' स्यात्, यथा एकस्मिन् संस्कृतपद्ये विद्यते—

अयं निजः परः वा इति 'गणना' लघुचेतसां,
उदारचरितानां तु 'वसुधा एव' कुटुम्बकम्।

## महावैज्ञानिकी संस्कृतलिपिः दूषिता क्रियते

महाचर्यं तु इदं एव, यत् एतादृशी वैज्ञानिकी संस्कृतलिपिः कदाचित् अज्ञानात् 'दूषिता' क्रियते कतिपयभारतीयैः, ये संस्कृत लिपेः कदाचित् महत्वं न जानन्ति, न केवलं एतत्, अपितु बहु-संख्याकैः भारतीयैः आंग्लभाषा-विमोहितैः इदं अपि कथ्यते, यत् संस्कृतलिपि-स्थाने 'आंग्ल भाषा–लिपिः, अर्थात् 'रोमन लिपिः' स्यात्। अज्ञानस्य पराकाष्ठा वयं विचारयामः।

## कथं दूषिता क्रियते संस्कृत-लिपिः ?

यस्मात् कालात् भारतीयशासनं जातं भारते, तस्मात् कालात् एतादृशी चेष्टा अवलोक्यते अस्माभिः। सर्वप्रथमं तु शासकानां अयं प्रयत्नः आसीत्, यत् काचित "हिन्दुस्थानी" भाषा राष्ट्रभाषा स्यात, तथा फारसीलिपिः, देवनागरीलिपिः च अर्थात् लिपिद्वयं प्रयुक्तं स्यात् तस्याः लेखने। यदा शासकाः विफलाः अभवन् अस्मिन्

दुष्कार्ये, तदा तैः चेष्टितं यत् "संस्कृतलिपेः" विघटनं क्रियेत कथित-सुधार-मिषेण। उत्तर प्रदेशे सर्वप्रथमं एतादृशं 'विघटनं' आरब्धं। सर्वप्रथमं उत्तरप्रदेशीयशासनेन कतिपयविदुषां, विविध-प्रान्तीयानां, एकं सम्मेलनं कृतं। तत्र इच्छानुसारं एतैः संस्कृत-लिपिः 'दूषिता'। कतिपय-नवीन-अक्षराः आनीताः, मात्रासु अवैज्ञानिक-रीत्या स्वेच्छाचारितया परिवर्त्तनं कृतं। हिन्दीशब्द-लेखने तु एतैः महानुभावैः यत्कृतं तत् 'लिपि-भाषानाशस्य' पराकाष्ठा आसीत्, यतोहि राजनीतिक कारणैः इदं सर्वं नाटकं "अभिनीतं। 'बेसिक-हिन्दीरीडर्स' इति नाम्ना "नवीन-हिन्दी-लिपिं अवलम्बय पुस्तकानां रचनं आरब्धं। अस्मिन् अभारतीयकार्ये लक्षशःमुद्राः राजकोषस्य, निर्धन-भारतीय-जनतायाः नष्टी-कृताः। 'अयं नाशकारी मार्गः" प्रायः पंचवर्षानन्तरं उत्तरप्रदेशीय-सर्वकारेण परित्यक्तः। अस्मिन् कार्येऽपि लक्षशः मुद्राः नष्टीभूताः। शासनेन 'परीक्षणं' कृतं जनता-धनेन। इदं सर्वं अन्येषु प्रान्तीयशासनेषु केन्द्रीयसर्वकारेऽपि प्रचुर-मात्रायां अवलोक्यते। भारतीय शासनस्य त्रयोदश-वर्षेषु निरन्तरं "परीक्षणं" प्रचलति भारतनाशाय। कदापि२ एतैः शासनैः अपि 'रोमन लिपेः' आनयनाय चेष्टा क्रियते। एकस्मिन् शब्दे वयं कथयामः, यत् अयं सर्वःव्यापारः 'कथित-लिपि-भाषासुधारात्मकः यः शासनैः राजनीतिककारणैः क्रियते एका अनधिकार-चेष्टा।

## भारते अन्याः लिपयः

भारतेवर्षे याः अन्याः क्षेत्रीय-लिपयः विद्यन्ते, ताः सर्वाः संस्कृत-लिपितः निस्सृताः, यथा भारतस्य सर्वक्षेत्रीयभाषाः, संस्कृतस्य एव भ्रंशरूपाणि। यत्रतत्र अक्षरेषु परिवर्तनं कृतं अस्ति। परिणामे बह्वयः लिपयः क्षेत्रीयाः भारते प्रचलिताः सन्ति। सर्वप्रथमं

तु केवलं संस्कृतलिपिः भारतेवर्षे सर्वेषां भारतीयानां आसीत्, यथा संस्कृतं सर्वेषां भाषा आसीत्, मातृ-राष्ट्र-राज-शिक्षाभाषा-रूपेण। परन्तु बौद्ध-काले (संस्कृत भाषा-पतनकाले) अन्याः लिपयः प्रारब्धाः याः गतद्विसहस्रवर्षेषु वृद्धिं गताः, यत् अद्य प्रायः त्रिशंत् चत्वारिशंत् लिपयः अधिकाः वाः भारते विद्यन्ते। तासु सर्वासु लिपिषु अक्षरोच्चारण-साम्यं प्रायः विद्यते एव, यद्यपि अक्षर-रूपं प्रायः भिन्नं संस्कृत-लिपितः। परिणामे एक-संस्कृत-लिपिः अद्य नास्ति भारते। अस्मात् कारणात् महती हानिः जाता देशस्य। भिन्न भिन्न-लिपि-भाषा-साहित्यकारणात् तज्जानितभावनाप्रार्थ-क्येन, क्षेत्रीयभावनाः, पृथकत्व-भावनाः ईर्ष्या-द्वेष-समन्विताः प्रादुर्भूताः। अन्ते भारतदेशस्य एव भागाः प्रथक् प्रथक् अभवन्, यतोहि भाषादि—भिन्नत्वात् एकस्याः भारतीयसंस्कृतभाषायाः अभावात् कोऽपि सर्वदेशीयसम्बन्धः न अतिष्ठत। ईसवीय-संवत्सरस्य प्रायः ११, १२ शताब्दीषु एतादृशी दुःस्थितिः पराकाष्ठां गता, येन विदेशीय-आक्रामकाणां भारते आगमनं सरलं जातं। आक्रामकैः सह यत्र तत्र क्षेत्रीय-युद्धानि जातानि तत्तद्-भागस्य संरक्षणाय, परन्तु समग्रभारतस्य रक्षायै किमपि युद्धं न अभवत्, भारतस्वातन्त्र्यरक्षायै। भारतैक्य-मूलं तु संस्कृत आसीत्, परन्तु भिन्न-भिन्न-क्षेत्रीय-भाषा-कारणात् सा 'एकता' नष्टा। संक्षेपे भारतीयाः 'अभारतीयाः' जाताः। सर्वप्रथमं मुसलमानादि-आक्रामकाः उत्तर-पश्चिम-मार्गात् आगताः, यैः भारतं बहुवारं लुण्ठितं, असंख्यधनं नीतं। जनहानिः अपि न्यूना नासीत्। असंख्य-जनाः गुटिका-घट्टे नीताः, लक्ष-लक्ष-जनाः ल्लिलोऽपि दासदासीवत् आक्रामकैः विदेशेषु बलात् नीताः। अयं

लुण्ठन-व्यापारः शतकेषु प्रचलितः। पतनस्य पराकाष्ठा जाता यदा दुष्ट-जयचन्द्रेण मुस्लिमाक्रामकाः आहूताः। मुसलमानशासकानां राज्यं प्रायः सप्त-अष्ट-शतंवर्षाणि यावत् प्राचलत। परन्तु बहवः आक्रामकाः, विदेशीय मुसलमानाः भारतनिवासिनः जाताः। बहवः आक्रामक-जातयः तु भारतीयेषु पूर्णतया अन्तर्भूताः, येन अद्यकोऽपि कथयितुं नहि शक्नोति, यत् ते विदेशीयाः आक्रामकाः आसन्। मुगलशासकाः अपि भारतनिवासिनः जाताः, अतः मुगलशासनं प्रायः भारतीयं जातं। अस्मात् कारणात् भारतीयमुसलमानशासकानां शासनं प्रायः त्रिचतुः शताब्दीः यावत् प्राचलत्। विदेशीयमुस्लिम-आक्रामकाणां शासनं तु प्रायः क्षणिकं एव आसीत्। इदं एव केवलं संतोषकारणं। सम्राट् अकबरः तु इच्छति स्म यत् स 'वेदधर्मी' भवेत्, परन्तु दौर्भाग्यकारणात् तदानींतनैः धर्माचार्यैः देश-धर्मादि-विरोधिभिः पत्ते 'व्यवस्था' न दत्ता, अन्यथा भारतेतिहासः सर्वथा भिन्नः भवेत्। इमे अवसराः मुस्लिमशासनकाले बहवः आगताः, यत् मुस्लिम शासकाः 'वेद धर्मस्य श्रेष्ठत्वात्' सनातनधर्मावलम्बिनः भवितुं इच्छन्तिस्म, परन्तु दुर्दिनं भारतस्य यत् वेदधर्मपाखण्डिभिः स्वधर्मे इमे शासकाः न नीताः।

तदानीं तनैः एतैः कथित-धर्माचार्यैः वेदज्ञान विरहितैः
भगवतः वेदस्य इयं शिक्षा विस्मारिता यत्
"कृणवन्तः विश्वं आर्य्यं" (वेदः)

महाभारत-कालपर्यन्तं तु सर्वं विश्वं वेदधर्मावलम्बि आसीत्। अयं एवं ईश्वरधर्मः सर्वेषां लोकमानवानां कृते विद्यते। पुनः यूरोपीय-व्यापारिणः व्यापार-मिषेण आगताः, ये मुस्लिम

शासकान्, क्षेत्रीय शासकान्, स्वदेशगर्व-विरहितान् दूरीकृत्य भारतशासकाः जाताः। तेषु सर्वेषु आंग्लाः महाकूट-नीतिज्ञाः आसन्, येषां अन्ते विजयः जातः, तथा ते भारतशासकाः अभवन्। प्रायः एतेषु द्विसहस्रवर्षेषु भारतीयाः भारतीयैः सह विवदमानाः, युद्धेषु स्वभ्रातृभिः सह रताः विदेशीयानां शरणे गच्छन्तिस्म। विदेशीयानां तु केवलं इदं एव कार्यं आसीत्, यत् एकं राजानं शरणे आनीय द्वितीयेन सह युद्धं कारयित्वा स्वार्थं सिद्धी-कुर्युः। दुर्दिनानि इमानि। अक्षरशः सत्यं इदं यत्

"विनाश-काले विपरीत-बुद्धिः"

अस्मात् कारणात् एव 'समग्रवेदस्य' साररूपे गायत्री मन्त्रे-

"ओ३म् भूः, भुवः, स्वः, तत्सवितुः वरेण्यं,
भर्गः देवस्य धीमहि धियः यः नः प्रचोदयात्।"

"सद्बुद्धिं ईश्वरः मानवेषु प्रदद्यात् इति प्रार्थना क्रियते"। यदि मानवेषु, राष्ट्रेषु सद्बुद्धयः स्युः तदा कथं दुःखं, युद्धादि-मार्गेण विनाशः स्यात्? अद्यलोके विनाशोन्मुखे भूयोऽपि सद्बुद्धेः परमह्रासः जातोऽस्ति, अस्मात् कारणात् "महाघातकाः विस्फोटकाः" निर्मीयन्ते लोकनाशाय वैज्ञानिकैः।

## भारतीयैः हृदयङ्गमं करणीयं पतन-कारणं

अस्माभिः भारत-दासतायाः प्रायः द्विसहस्रवर्षीयः इतिहासः संक्षेपे अस्मात् कारणात् दत्तः, येन ते स्वपतन-कारणं जानीयुः। तैः संस्कृतं भारतैक्य-कारणं, संस्कृतलिपिः भारतैक्य-कारणं, भगवान् वेदः भारतैक्य-कारणं परित्यक्तः, अतएव तेषां पतनं अभूत-पूर्वं जातं। वेदविमुखानां संस्कृत-संस्कृति-संस्कृतलिपि-

विमुखानां इयं दुर्दशा स्यात्, किं आश्चर्यं ? इदं त्रिकालतथ्यं भारतीयैः हृदि करणीयं, तदैव पूर्ववत् ते चक्रवर्त्तिनः राजानः, विश्वनेतारः भवेयुः। अद्य तु विंशति-शताब्द्यां पतन-कारणं परित्यक्तं स्यात् अर्थात् क्षेत्रीयलिपयः, क्षेत्रीयभाषाः, याः भूयोऽपि भारतस्य प्रान्ते प्रान्ते विभाजने कारणीभूताः स्युः। किं भारतीय-दौर्भाग्यं अद्य अपि अन्तं न एति ? इतिहासपठनस्य अन्यथा कः लाभः ? भारतस्य द्विसहस्रवर्षाणां इतिहासः अस्माभि सर्वैः गम्भी-रतया पठनीयः। तस्मिन् इतिहासे यानि यानि कारणानि अस्माकं पतने कारणी-भूतानि, तानि सर्वाणि दूरी-करणीयानि। अनेकता, प्रान्तीयता, ईर्ष्या-द्वेषादयः भारतीयेषु कथं आगताः इति सर्वं अन्वेषणीयं, दूरीकरणीयं च ? अस्माकं तु पूर्णविश्वासः यत् संस्कृतभाषा-लिपि-संस्कृति-त्यागकारणात्, सर्वोपरि वेद त्यागात् इयं सर्वा विपत्तिः दासतादिरूपा आगता। संस्कृतेन भूयोऽपि भारतैक्यं भवितुं अर्हति, तथा भारतीयसंस्कृतिः धर्मश्च स्थातुं शक्नोति। संस्कृत-साहित्यं तु एकः महान् निधिः यः दायरूपे भारतीयैः प्राप्तः। परन्तु नेत्रे उन्मील्य एव कार्यं करणीयं। द्विसहस्रवर्षेषु संस्कृत-साहित्ये शोध-कार्यं अवरुद्धं। अतएव यत्किञ्चित् तत्र विद्यते तत्सर्वं "स्वर्ण" नास्ति, इति अस्माभिः पूर्वं अपि निवेदितं। कतिपय-भारतीयवर्गैः विचार्यते कथ्यते च यत् "संस्कृतं" तेषां भाषा, साहित्यं तेषां "निधिः", ते एव तद्दायस्य एकमात्र-उत्तराधिकारिणः। एतादृशाः विचाराः भूयोऽपि नाश-कारणानि स्युः, इति न विस्मरणीयं भारतीयैः। एतादृशी चेष्टा अवलोक्यते इदानीं अपि आधुनिके युगे। अतः भारतीयाः सावधानाः स्युः। एतादृशी स्थितिः कदापि

न स्वीकार्य्या। गतद्विसहस्त्रवर्षेषु वास्तविक-वेद-धर्मस्य महती दुर्दशा जाता। वेद धर्मस्य, संस्कृतभाषायाः, तस्य लिपेः, संस्कृतेः, कोऽपि वर्गः भारतीयसमाजे अद्य एकमात्र-अधिकारी न स्यात् इयं त्रुटिः भूयः न कार्य्या। सर्वेषां भारतीयानां वेदधर्मः, सर्वेषां संस्कृत भाषेत्यादयः। सर्वे भारतीयाः संस्कृतपठने अधिकारिणः। भारतीयाः परःसहस्त्रजातिपंक्तिषु धर्मविरुद्धासु, विभक्ताः कदापि "एकं सुदृढ़-राष्ट्रं" न भवेयुः। अस्मात् कारणात् एतेषु भारतीयेषु "एकत्व-भावना" उत्पन्ना नहि भवति। उच्च-नीच-भावना भारतीयेषु भारतदेशनाशं करोति। वस्तुतः नीचः भारतीयः तु स यः अन्येन भारतीयेन सह घृणां करोति। यदि सर्वे भारतीयाः "संस्कृतज्ञाः" स्युः, तदा ते सर्वे स्वधर्मग्रन्थान् सामाजिक-व्यवस्थां ज्ञातुं शक्नुवन्ति। सत्यं तु कथनीयं एव अन्यथा "राष्ट्र-हितं न स्यात्।

मनु-स्मृतौ विद्यते,

कामात् माता पिता च एनं यदुत्पादयतः मिथः,<br>
सम्भूतिं तस्य तां विद्यात्, यद्योनौ अभिजायते।<br>
आचार्यः तु अस्य यां जातिं विधिवत् वेदपारगः,<br>
उत्पादयति सावित्र्या सा सत्या सा अजरा अमरा।

(मनु० अध्याय २, श्लोक १४७-४८)

इयं एव प्राचीनतमा स्मार्त-वर्णव्यवस्था वेदज्ञानाधारेण न तु जन्मना। कस्यचित् अपि मानवस्य न केवलं भारते, अपितु विश्वे 'द्विजत्वं' प्राप्तं स्यात्, यदि स ब्रह्मचारी भूत्वा २५ वर्षाणि यावत् सरहस्यं वेदं पठेत् ऋषिकुलेषु, गुरुकुलेषु वेदाचार्यमहाभागात्। मनुमहाभागानां आदेशात् 'जन्म' कारणं नास्ति समाजव्यवस्थायाः

शारीरिक जन्म तु एकं एव सर्वेषां मानवानां लोके मातुः सकाशात्। एकस्मिन् जन्मनि द्वितीयं जन्म अर्थात् 'द्विजत्वं' कथं भवेत् तन्मानवस्य ? २५ वर्षाणि भावत् वेद-ज्ञान-प्राप्तिः ऋषिकुलेषु 'द्विजत्व-कारणं'। स्पष्टं सर्वं। बहवः विधर्मिणः, विदेशीयाः अपि, वेद-धर्मे आगन्तु इच्छन्ति, परन्तु "जन्म-जाति-कारणात्" इदं सर्वं असम्भवं एव।

## संस्कृतस्य महत्त्वं स्थानं च

संस्कृत लिपौ सुधारः सर्वथा अनावश्यकः, हानिकरः। आं, एकं कार्यं भवितु अर्हति। हिन्दी-भाषायाः लिपिः तु संस्कृत-लिपिः एव, परन्तु कतिपयः वर्णाः तत्र वृद्धिं गताः, यथा क़, ख़, ग़, ज़, फ़ येन हिन्दी भाषायाः एका अन्या शैली 'उर्दू' इति लेखने आगच्छेत्। अनेन प्रकारेण अन्यासु क्षेत्रीय-भाषासु कर्त्तुं शक्यते, यथा वंग, गुर्जर, महाराष्ट्री, टेलग्यू, तमिल, मलायालम्-इत्यादिषु, यदि कोऽपि अक्षरः संस्कृतलिपौ नास्ति, येन उच्चारणं न सम्भवेत् तासु तासु क्षेत्रीयभाषासु। वयं न कामये एतासां क्षेत्रीयप्राकृतभाषाणां उच्छेदः, परन्तु संस्कृत एव राष्ट्र-राज-शिक्षाभाषा भवेत् समग्र-भारते आंग्ल-भाषा-स्थाने, न तु काचित् क्षेत्रीयभाषा हिन्दी-त्यादिः, यतोहि ताः सर्वाः संस्कृतस्य एव अपभ्रंशरूपाणि। ताः सर्वाः १५, १६ संख्याकाः कथं पूर्णाः, समृद्धाः उन्नताः च भवेयुः समान-रूपेण भारते ? संस्कृतं तु प्रायः सृष्टि-कालात् प्रचलति लोके, अतएव उपेक्षिताऽपि सा महासमृद्धाः, महोन्नताः पूर्णा, तस्याः व्याकरणस्य पूर्णत्वात्। हिन्दी भाषादीनां तु कदापि व्याकरणं अपि पूर्णं न स्यात्, यतोहि तत्र शब्द-कोषः तु संस्कृतस्य एव। कथं व्यर्थ-प्रयासः अस्माभिः भारतीयैः क्षेत्रीयप्राकृत-भाषाणां

समानोन्नत्यै क्रियते, यदा देशे संस्कृतं महासमृद्धं पूर्वतः अस्ति। संस्कृते विद्यायाः प्रायः सर्वासु शाखासु साहित्यं मिलेत्। विज्ञानं अपि संस्कृते अस्ति। यदि आधुनिक-विज्ञानं" नहि विद्यते, तत्सर्वं संस्कृते ५ वर्षेषु भवितुं अर्हति। पारिभाषिक-प्राविधिक-शब्दानां सरलतया रचना संस्कृते भवितुं अर्हति। प्रथमं तु कदाचित् सर्वं पारिभाषिक-प्राविधिक शब्दाः संस्कृतसाहित्ये विद्यन्ते एव। सर्वप्रथमं तु सर्वं संस्कृतसाहित्यं अवलोकनीयं। यदि केऽपि पारिभाषिक-प्राविधिकशब्दाः नहि विद्यन्ते, तदा अन्ताराष्ट्रिय-पारिभाषिक-वैज्ञानिक-प्राविधिकशब्दानां संस्कृती-करणं सफलतया भवितुं अर्हति संस्कृत–व्याकरणस्य "उणादि-प्रकरण-कारणात्"। अस्माकं ऋषयः मूर्खाः न आसन्। ते तु महाविद्वांसः, व्यवहारकुशलाः, राष्ट्र-वादिनः आसन्। तैः तु सर्वं पूर्वतः एव दत्तं। एते महाविचारकाः तु संसारे अन्यत्र न प्रादुर्भूताः।

## संस्कृत-व्याकरणे विद्यते "उणादयः बहुलम्" ३/३/१

अस्य सूत्रस्य व्याख्या विद्यते 'एते वर्तमाने संज्ञायां च बहुलं स्युः। केचित् अविहिताः अपि ऊह्याः। अनया व्याख्यया सह श्लोकः अपि दीयते स अयं—

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे,
कार्यात् विद्यात् अनूबन्धं, एतत् शास्त्रं उणादिषु।

अतएव कस्यचित् अपि विदेशीयशब्दस्य संस्कृतीकरणं सहज-तया भवति। विदेशीय-शब्दानां संस्कृतीकरणं तु नितान्तं आवश्यकं, येन संस्कृत-व्याकरणानुसारं रूपं स्यात्, तथा ते शब्दाः संस्कृते अन्तर्भूताः स्युः। अतः काऽपि हानिः नास्ति, यत् वैदेशीयाः शब्दाः (संस्कृतस्य एव भ्रंशरूपाणि) पुनः "सुसंस्कृताः" कृताः स्युः,

तथा संस्कृतभाषायां गृह्य रन्। अस्माकं शास्त्रेषु सर्वं विद्यते, यत् व्यावहारिक-दृष्ट्या आवश्यकं। कदाचित् न जानन्ति अस्माकं शासकाः, यत् सृष्टि-कालात् आरभ्य महाभारत-कालपर्यन्तं भारतीयाः एव भारतदेशस्य शासकाः आसन्। प्रायः विंशति-अर्बुद-वर्षाणि यावत् प्राचलत् इदं शासनं। एतेषु वर्षेषु तु भारतीय चक्रवर्ति-शासनं अर्थात् लोकशासनं अर्थात् एकछत्रसांस्कृतिक-साम्राज्यं आसीत्, परन्तु महाभारतकालानान्तरं तत् शासनं सार्वभौम-शासनरूपे न अतिष्ठत्। बौद्धकाले (प्रायः सार्धत्रिसहस्र-वर्षाणि व्यतीतानि) तु प्रायः अन्तः एव जातः भारतीय शासनस्य क्व सार्वभौमशासनं लोके ? विंशति-अर्बुद-वर्षेषु संस्कृतभाषा एव अस्य देशस्य मातृ-राष्ट्र-राज-शिक्षा-भाषा आसीत् भारतेवर्षे। सर्वाः विद्याः अस्यां संस्कृतभाषायां आसन्। सर्वं शासन-कार्यं सर्वस्मिन् भारते संस्कृतेन एव भवतिस्म। किं बहुना, गालि-प्रदानं अन्यानि दुष्ट-भाषणानि कार्याणि वा संस्कृतेन एव भवन्तिस्म, यथा बाल्मीकि-रामायणे, महाभारते, अन्येषु संस्कृतग्रन्थेषु अवलोक्यते। दुष्टरावणेन सर्वाः वार्त्ताः "सती सीता" मात्रासह संस्कृते कृताः आसन्। एवमेव दुष्ट-दुःशासनेन, दुष्टदुर्योधनेन भगवते महायोगि-कृष्णाय गालि-प्रदानं संस्कृते कृतं आसीत्। यानि पतन-कारणानि महाभारतकाले प्रारब्धानि तानि बौद्ध-काले वृद्धिं गतानि, अद्य तु पराकाष्ठां भजन्ते। कस्यदोषः ? भारतीयानां एव। ईश्वरः तु पक्षपाती नास्ति। यत् क्रियते तत् फलरूपे मिलति। विष-वृक्षस्य रोपणानन्तरं अमृतफलस्य आशा दुराशा एव। महाभारतकालपर्यंतं संस्कृतं विश्वे विश्वभाषा आसीत्। प्रमाणानि तु बहूनि एव, परन्तु एकं प्रमाणं अत्र दीयते। महाकविहर्षेण स्वनैषधे काव्ये दमयन्ती

स्वयम्वरे लोकत्रयीविद्वत्सम्मेलनावसरे लिख्यते—

"अन्योऽन्यभाषाऽनवबोधभीतेः, संस्कृत्रिमाभिः व्यवहारवस्तु,
दिग्भ्यः समेतेषु नृपेषु तेषु, सौवर्गवर्गी न जनैः अचिन्हि। (१०।३४)
जगत्त्रयी-पंडित-मंडितैषा, सभा न भूता न भाविनी वा,
राज्ञां गुणज्ञापन-कैतवेन, संख्यावतः श्रावय वाङ्मयानि। १०-७१

अर्थात् एतादृशे विश्वसम्मेलने सर्वं कार्यं संस्कृतभाषायां जातं। सर्वाः लोकभाषाः अपि प्रमाणं, यतोहि ताः सर्वाः संस्कृतात् एव निस्सृताः, संस्कृतशब्दान् स्वरूपे विरूपे वा अद्याऽपि बिभ्रति। लोकस्य विविधभागेषु अद्याऽपि मन्दिराणि, संस्कृत-संस्कृति-चिह्नानि प्रचुरमात्रायां मिलन्ति। एतादृशी आदिभाषा "संस्कृतं नाम" यस्यां ईश्वरीयज्ञानं अपि दीयते मानवकल्याणाय, भारतीयैः भारतनाशाय तिरस्क्रियते अवमन्यते च। दौर्भाग्यस्य अज्ञानस्य पराकाष्ठा। सर्वं "सत्यं, शिवं, सुन्दरं" तु संस्कृतसाहित्ये विद्यते परन्तु एतैः भारतीयैः अज्ञान-आलस्य-समन्वितैः, वस्तुतः अभारतीयैः "अक्षय-ज्ञान-निधेः" तु लाभः गृह्यते एव नहि। ज्ञानविज्ञानं बहिर् विदेशेषु आंग्लादिभाषासु तासां ग्रन्थेषु अन्वेष्यते। कीदृशं महत् अज्ञानं भारतीयजनतायाः, शासकानां च ? क्व देशोन्नतिः द्वितीयपंचवर्षीय-योजनायां, यावत् भारतीयाः "आत्मानं" संस्कृत-साहित्ये "निहितं" न जानन्ति ? अतएव भारतीयजनतया, शासनेन स्वकर्त्तव्यस्य पालनं करणीयं, अन्यथा आत्यन्तिकः नाशः स्यात्।

## संस्कृत-साहित्य-सागरः विलोडनीयः

अतएव सर्वैः भारतीयैः केन्द्रीय-प्रान्तीय-शासनैः च संस्कृत-साहित्य-सागर-मथनं करणीयं, यथा पुरा सुर-असुरैः कृतं आसीत्।

देवैः तु 'अमृतं' प्राप्तं सत्यविद्यारूपेण, परं असुरैः 'विषं' प्राप्तं "असत्य नाशकारि–विद्यारूपेण' यथा अद्य भौतिक-पाश्चात्य-वैज्ञानिकैः असुरतुल्यैः लोक-नाश-सामग्री 'विषरूपेण' संगृह्यते। तन्मंथनेन यत् निस्सरेत्, तस्मात् "अमृत" ग्राह्यं 'विषं' परित्यज्य। अद्य संस्कृत-साहित्यं अमृत-विष-द्वयस्य मिश्रणं एव। गतद्विसहस्र-वर्षेषु संस्कृत-साहित्यस्य, संस्कृतभाषायाः उपेक्षा-कारणात् बहु-मिश्रणं क्षेपकादि-रूपेण संस्कृत-ग्रन्थेषु जातं। इदं कार्यं अज्ञानिनां, अस्माक विरोधिनां शत्रूणां अपि अस्ति। न्यूनातिन्यूनं एतेषु ग्रन्थेषु याः परस्परं विरोधिवार्त्ताः अवलोक्यन्ते, ताः सर्वाः दूरीकरणीयाः। ताः सर्वाः "क्षेपकाः" इति तु स्वतः सिद्धं एव। कोऽपि बुद्धिमान् लेखकः परस्परविरोधि वार्त्ताः प्रसङ्गाः वा न लिखेत्।

परन्तु अस्मिन् संस्कृत-साहित्य-विलोडने "सत्यं, शिवं, सुन्दरं" प्रचुरमात्रायां मिलेत्, येन अस्माकं भाषा-विषयिकानि सर्वाणि कष्टानि दूरीभवेयुः। विविध-विद्या-शाखासु यत् पारिभाषिक-शब्द–कोषः, प्राविधिक–शब्दकोषः, भूगर्भादि–विज्ञानशब्दकोषः प्राप्यते, तस्य उपयोगः कार्य्यः। अल्पप्रयासेन इदं सर्वं प्राप्तं स्यात्। नवीनशब्दरचनायां प्रायः १६ क्षेत्रीय-भाषासु भारतीय संविधान-स्वीकृतासु तु कदाचित् युगानि लगेयुः, तथापि राष्ट्र-कार्यं सम्पन्नं न स्यात्। सर्वासां १६ क्षेत्रीयभाषाणां एकस्मिन् काले अभि-वृद्धिः, असम्भवा एव। एका भाषा प्रधानरूपा तु भारते आवश्यकी, या राष्ट्र-राज-शिक्षाभाषा स्यात् आंग्लभाषा-स्थाने। एका राष्ट्र-भाषा, या राजभाषा अपि स्यात् यस्यां भारतीय-समग्र-विधानं दीयेत, या शिक्षा-भाषाऽपि भवेत् समग्र-भारते, सा भाषा तु केवलं संस्कृत-भाषा एव अस्ति। अन्यः मार्गः नास्ति भारतकल्याणाय।

विचारशील-भारतीयैः, राष्ट्र-हित-चिन्तकैः, विशेषतया शासकैः, भारतभाग्यविधातृभिः राजनीतिज्ञैः विचारणीयं यत् १६६५ वत्सरे अनन्तरं वा आंग्लभाषायाः भारतैक्य-साधनभूतायाः निष्कासने भारतस्य का दशा भविष्यति ? वयं सर्वे मन्यामहे यत् 'आंग्लभाषा' विदेशीया भाषा, तथापि प्रायः १५० वर्षेभ्यः देशे प्रचलनात् भारतस्य एकतायाः कारणं एव। द्वितीयं अद्य आंग्लभाषा "भारतीय-राष्ट्र-राजभाषा तथा शिक्षाभाषा विद्यते समग्रभारते।" सर्वं राष्ट्रिय-कार्यं आंग्लभाषया एव क्रियते केन्द्रीयादि-शासनेन पठितसमाजेन अपि। इदं अपि स्वीक्रियते राजनीतिज्ञैः यत् आंग्लभाषया एव समग्र-भारते ऐक्यं उत्पन्नीभूतं, तथा देश-स्वातन्त्र्य-युद्धाय भारतीयानां एकीकरणं सम्भवं जातं। यतोहि आंग्लभाषा समानरूपेण सर्वेषु प्रान्तेषु स्कूल-कॉलिज-विश्वविद्यालयेषु पाठिता, अतएव सा विदेशीयाभाषा भारतैक्य-सम्पादने कारणीभूता। उत्तर-दक्षिण-पूर्व-पश्चिम-भागस्य कोऽपि भारतीयः अन्येषु भागेषु आंग्लभाषा-माध्यमेन विचार-विनिमयाय, प्रचाराय च गन्तुं शक्नोतिस्म, शक्नोति च अद्याऽपि। अतएव आंग्लभाषा-निस्सारणं तु सरलं, परन्तु तस्याः स्थानपूर्तिः तु असम्भवा, कयाचित् अपि क्षेत्रीयभाषया हिन्दी-भाषया वा, हिन्दी भाषा 'राष्ट्रभाषा' इति घोषणेऽपि।

अतएव अस्माभिः सर्वैः विशेषतया अस्माकं शासकैः, येषां एकाऽपि 'अनर्थकरी आज्ञा' भारतनाशे पर्याप्ता, तथा अन्यैः राजनीतिज्ञैः अपि, गम्भीरतया विचारणीयं यत् एतस्यां विषम-स्थितौ किं करणीयं ? काऽपि एतादृशी भाषा अस्तिः न वा भारते या "विदेशीय-आंग्लभाषायाः" स्थानं गृह्णीयात्। उत्तरं मेलिष्यति 'केवलं संस्कृतं' एव भाषा, या आंग्लभाषायाः स्थानं ग्रहीतुं

शक्नोति । संस्कृतभाषा भारतीयाभाषा प्राचीनतमा, तथा आंग्लभाषातः न्यूनातिन्यूनं १० गुणितं अधिकं समृद्धा, महोन्नता च। संस्कृतं काऽपि प्रान्तीया क्षेत्रीया वा भाषा नास्ति। संस्कृतं तु भारतीया भाषा, अनन्तकालपर्यन्तं भारतस्य मातृ-राष्ट्र-राज-शिक्षाभाषा अतिष्ठत्। यदि कोऽपि सहृदयः भारतीयः संस्कृत-साहित्यपठनस्य कष्टं कुर्यात्, तदा सरलतयाः इदं सर्वं जानीयात्। किं अपराद्धं संस्कृतेन शासकानां तथा राजनीतिज्ञानां, यत् संस्कृतस्य अमृततुल्यस्य, भारतत्राण-कारणस्य नाम अपि नहि गृह्यते ? गतेषु द्विसहस्रवर्षेषु क्षेत्रीयभाषाः आसन् यथा पाली-प्राकृतादयः परं किं ताभिः सर्वाभिः भारतैक्यं सम्पादितं ? किं ताः सर्वाः उन्नताः जाताः ? किं तासु विज्ञानं विद्यते ? किं अद्यपर्यन्तं तासां व्याकरणं कोषः च पूर्णः जातः ? काऽपि क्षेत्रीयभाषा 'भारतीया भाषा' भवितुं न अर्हति, इति द्विसहस्रवर्षेतिहासस्य "शिक्षा" । व्यर्थप्रयासः शासकानां, यतोहि 'हिन्दी' केनाऽपि अहिन्दीभाषिप्रान्तेन नहि स्वीक्रियते। हिन्दी-व्याकरणं अपि कदापि पूर्णं न स्यात्, यथा अन्यासां क्षेत्रीय-भाषाणां स्थितिः। परन्तु संस्कृस्य प्रायः सर्वैः प्रान्तैः समर्थनं क्रियते। कोऽपि प्रान्तः संस्कृतस्य विरोधं न करोति। संस्कृतस्य तु सिक्खाः, मुसलमानाः, पारसीकाः ईसाइनः इत्यादयः विरोधं न कुर्युः, यतोहि संस्कृतं तु सर्वेषां, समानरूपेण सम्मान-पात्रं, समानरूपेण कठिनं सरलं च। सर्वेषु प्रान्तेषु समानरूपेण संस्कृतज्ञाः मिलन्तिः एव। बहवः ईसाई-मुसलमानादि-भारतीयाः संस्कृतज्ञाः सन्ति। अतएव शासकेषु किं भयं, अहं न जानामि। कथं संस्कृतस्य एकमात्रभारतीयभाषायाः विरोधः इति अपि नहि ज्ञायते ? शासकाः विशेषतया अस्माकं

प्रधानमंत्री महाभाग: भारतभाग्य-विधाता जानीयात्, यत् संस्कृत-भाषा 'अनिवार्यरूपेण' साहित्य-छात्रेषु काबुल-ईरान-विश्वविद्यालयेषु पाठ्यते, यतोहि अफगान-ईरान-निवासिभिः स्पष्टतया स्वीक्रियते, यत् तेषां पुश्तो, फारसी भाषा संस्कृतात् एव निस्सृता: । परन्तु संस्कृतं अद्य कुत्र अपि अनिवार्यं नास्ति भारतीय-विश्वविद्यालयेषु, यद्यपि संस्कृतभाषा सर्वासां क्षेत्रीयभाषाणां जननी ।

एका वार्त्ता कथ्यते संस्कृत-विरोधे । संस्कृतभाषा महाकठिना, जटिल-जटिला, कुत्र अपि भारते नहि भाष्यते, पठ्यतेऽपि नहि सामान्यरूपेण, अत: एतादृशी भाषा कथं राष्ट्र-राज-शिक्षाभाषा स्यात् समग्रभारते ? अहं स्वीकरोमि, यत 'संस्कृतं' कठिनं विद्यते इदानीं, भाष्यते पठ्यतेऽपि नहि सामान्यरूपेण जनतया ? परन्तु अत्र कस्य दोष: ? अस्माकं सर्वेषां भारतीनां, शासकानां, विशेष-तया संस्कतज्ञानां । संस्कृतस्य 'महासरलरूपं' तु अस्ति एव, यस्य उदाहरणं पुस्तकं इदं । कोऽपि क्षेत्रीयभाषाविद् एतादृशस्य सरल-संस्कृतस्य सारं ग्रहीतुं शक्नुयात्, यतोहि संस्कृतं एका भारत-व्यापिनी भाषा, क्षेत्रीयभाषा-जननी च । "आधुनिक - सरलतमस्य संस्कृतस्य तु जन्म १६४६ ई० संवत्सरे सप्रमाणं जातं । अद्य अस्मिन् पुस्तके "आधुनिक-संस्कृतस्य अन्तिमं रूपं" दीयते, येन भारतीया: संस्कृतभाषायां भूगोल-इतिहास-गणित-समाज शास्त्र-राजनीति शास्त्र-विज्ञानादि-विषयान् सरलतया लेखितु शक्नुयु: । संस्कृतं "अस्मिन् आधुनिकरूपे" "अनिवार्यं सर्वेषु स्कूल-कालिज-विश्वविद्यालयेषु समग्रभारते कृतं स्यात् । पञ्चवर्षेषु संस्कृतं प्रसरेत् भारते तथा विदेशीय-आंग्ल भाषा-स्थानं" सरलतया गृही-

यात् । वयं जानीमः यत् संस्कृतं यस्मात् कालात् अस्माकं दोषात् प्रमादात् वा "एका ग्रन्थीया भाषा" जाता, तस्मात् कालात् संस्कृतं भाषणभाषा न अतिष्ठत् । परन्तु सरलतया इदं सर्वं भवितुं अर्हति, यदि "अस्माकं शासकाः" ध्यानं दद्युः, तथा राष्ट्रीय-समाधानं क्षेत्रीय-भाषा–गृहयुद्धस्य गम्भीरतया विचारेयेयुः, । संस्कृतभाषायाः क्षमता, योग्यता, श्रेष्ठता तु नश्यति एव नहि अस्माकं प्रमाद–कारणात् । ईसराईल देशस्य 'इडा' भाषाग्रहणं 'एकं ज्वलत्प्रमाणं', यस्याः भाषायाः नामाऽपि नासीत् लोके । अन्ते प्रधानमन्त्रिणः शब्दाः दीयन्ते येन स महानुभावः, तस्य अनुयायि-शासकाः प्रेरणां, प्रकाशं च' गृह्णीयुः ।

"........ यदि मत्तः पृष्टं स्यात् यत् भारतस्य महीयान् निधिः कः ? तर्हि अहं वदिष्यामि संस्कृतभाषा, तस्याः साहित्यं च । संस्कृतभाषा अस्य देशस्य एका सजीवपरम्परा..................अति-खिद्यामहे वयं यत् संस्कृतस्य गुणगाथां गायन्तः अपि तस्य मौखिकीं सेवां कुर्मः .....................।"

## अतः शासकेषु निवेदनं

भारतैक्य–सम्पादनाय, भारतीयगणराज्यरक्षायै त्रिवार्त्ताः आवश्यकाः, अन्यथा भारत-गणराज्यं दीर्घकालपर्यन्तं न तिष्ठेत् । ताः इमाः । (१) भारतीयैः सर्वैः "विदेशीय–आंग्लभाषा तु सोढुं शक्यते भारतवर्षे राष्ट्र-राज-शिक्षाभाषारूपेण" परन्तु तैः एकाऽपि देशीयभाषा आंग्ल-भाषा-स्थान-ग्रहणाय नहि स्वीक्रियते । हिन्दी भाषा उद्घोषिताऽपि राष्ट्रभाषा गृहयुद्ध-कारणं जातं । परन्तु इदं तु "त्रिकाल सत्यं" यत् यावत् काऽपि भाषा "भारतीया भाषा समग्रभारतस्य" नहि स्वीक्रियते तावत् भारतैक्यं, भारतीय गण-

राज्यं संशयापन्नं एव। काऽपि "देशीय भाषा" तु भवेत् एव, यस्यां सर्वराज्यकार्यं प्रचलेत्। सा भाषा एतादृशी स्यात् यस्यां समग्र-भारतीयविधानं दत्तं स्यात्, अन्यथा "एकः भारतीयविधिः, एकः भारतीय-न्यायः, न्यायपद्धतिश्च, एकः भारतीयन्यायाधीश-वाक्कीलसंघः" असम्भवः एव। सा भाषा एतादृशी अपि स्यात् या शिक्षाभाषाऽपि स्यात् समग्र-भारते, अन्यथा राष्ट्रोन्नतिः कदापि न स्यात् साहित्य-विज्ञानादि-क्षेत्रेषु। का भाषा पठित-समाजस्य जनतायाः च स्यात् भारतेवर्षे अयं प्रश्नः? प्रश्नः तु महाजटिल-जटिलः, राष्ट्रस्य समग्रस्य गम्भीरविचारं अपेक्षते। आवेशेन प्रश्न-समाधानं न स्यात्। अन्यथा अराजकतायाः साम्राज्यं स्यात् यथा स्वराज्य-प्राप्ति-काले भारतस्य पाकस्थानस्य विभाजितप्रदेशेषु जातं। लक्षशः जनाः लुण्ठिताः, मारिताः, गुटिकाघट्टे नीताः, बलात् स्व-स्व-धर्मेषु आनीताः अर्थात् विधर्मिणः कृताः, तथा देश-परिवर्त्तने लक्षशः धनजन-विरहिताः जाताः, सहस्रशः मृताः अपि गमा-गमने। युद्धेऽपि एतादृशी भीषण-धन-जनहानिः न भवति लोके। इदानीं अपि देशद्वयस्य जन-परिवर्तन-समस्या समाधनं न एति। अतएव अविचारेण आवेशेन, किं अपि न कृतं स्यात् इति शिक्षा। सर्वैः भारतीयैः एकीभूय 'लोक सभायां' अन्यत्र वा विचारः कृतः स्यात्, यत् एतादृशी "भारतीया भाषा" संस्कृतभाषा अस्ति न वा, या विदेशीय-आंग्लभाषायाः सर्वेषु क्षेत्रेषु स्थानं गृह्णीयात्। अस्माकं उत्तरं निश्चयात्मकं तु इदं यत् संस्कृतभाषा "एका भारतीया भाषा प्राचीनतमा महासमृद्धा" या 'आंग्लभाषा-स्थानं' ग्रहीतुं सर्वथा योग्या। अन्ते वयं साटोपं निवेदयामः, यत् "संस्कृतेन एव देशीयभाषा-समस्या समाधातुं शक्यते न अन्यथा" तथा संस्कृतं

एव भूयोऽपि भारतस्य मातृ-राष्ट्र-राज-शिक्षाभाषा भवितुं अर्हति ससम्मानं। संस्कृतेन विना भारतैक्यं, भारत-गणराज्यं सुरक्षितं नास्ति, इति सर्वैः भारतीयैः पुनः हृदयङ्गमं करणीयं।

## किंकोऽपि सुधारः संस्कृत-लिपौ आवश्यकः ?
## भारते विश्वे च का लिपिः स्यात् तथा का भाषा ?

संस्कृतभाषायाः कृते संस्कृतलिपौ कोऽपि वृहत्-सुधारः अनावश्यकः तथा भवितुं अपि नहिं अर्हति। संस्कृतभाषायां केवलं संस्कृतलिपिः प्रयुक्ता भवितुं अर्हति न काऽपि अन्या। संस्कृतलिपिः वैज्ञानिकी, संस्कृतभाषा च वैज्ञानिकी, अतएव काऽपि अन्या लिपिः प्रयुक्ता न स्यात्। वेदः नित्यः, तथैव वेदभाषाऽपि नित्या यस्यां वेद-ज्ञानं सर्गे सर्गे ईश्वरेण दीयते। वेदभाषातः संस्कृतलिपिः निस्सृता यथा ऊर्णनाभितः तन्तुः स्वभावतः निस्सरति। वेदस्य शब्दरचना एतादृशी यत् संस्कृतलिपौ वेद-मन्त्राणां लेखनं उच्चारणं च सम्भवेत्। वेद-मन्त्रोच्चारणमात्रेण संस्कृत-लिपि-ज्ञानं स्यात्। यद्यपि वयं मन्त्रामहे, यत् संस्कृतलिपिः पूर्णा वैज्ञानिकी च, परन्तु अद्य संस्कृतलिपौ कतिपयवर्णानां येन प्रकारेण उच्चारणं क्रियते, विविध-प्रदेशेषु, उत ह्रस्व-दीर्घमिश्र-विकृत्-स्वरादिविषये यत्-किंचित् कथ्यते, तेन सह अस्माकं स्तोकः भिन्न-विचारः। कतिपय-वर्णानां वर्णरचनाऽपि एतादृशी, येन भ्रमः स्यात्। वयं कामयामहे, यत् विद्वद्भिः अत्र ध्यानं दीयेत, येन न केवलं भारतस्य अपितु विश्वस्य संस्कृतज्ञानां कृते कोऽपि निश्चित-मार्गः प्रदर्शितः स्यात्।

## अस्माकं मतं विदुषां विचारार्थं

अस्माकं मतानुसारं संस्कृतलिपेः वर्णानां (स्वर-व्यञ्जनानां
अनेन प्रकारेण उच्चारणं वर्गीकरणं च स्यात् :—

स्वराः

अ इ उ ह्रस्व-स्वराः विशुद्धाः

आ ई ऊ ए ऐ ओ औ दीर्घस्वराः ,,

अन्येषां पंडितानां मतं

व्याख्या :— ये पंडिताः कथयन्ति यत् :—

ए ऐ ओ औ मिश्रविकृतदीर्घस्वराः

विद्यन्ते, तेषां महानुभावानां कथनं सत्यं नहि प्रतीयते, यतोहि तत्र
विशुद्ध-स्वराणां कथं उच्चारणं स्यात् यथा एतेषु शब्देषु विद्यते ?

उदाहरणं

ए ऐ ......एव, एला, एकं, वै, (अव्ययं)
ऐन्द्रं, ऐक्यं इत्यादि

ओ औ ......ओजः, ओकः, ओत्वं, औचित्यं इत्यादि

सन्धि-संयोग-विचारः भिन्नः, यः संस्कृतपदनिर्माणे आवश्यक

यदि सन्धि-नियम-कारणात् संस्कृतपदरचनायां

ए ऐ ओ औ

इति विशुद्ध-स्वराः, मिश्रविकृत-स्वराः मन्यन्ते, तदा तु अयं
विचारः सर्वथा भिन्नः यथा

## दीर्घ-गुण-वृद्धि-यण्-सन्धयः पदेषु

यदि सन्धि-नियमाः स्वरनिर्णये निर्णायकाः, तदा तु ह्रस्व-दीर्घ
स्वराः ये 'विशुद्धाः' पंडितैः मन्यन्ते, तेऽपि न्यूनातिन्यूनं 'मिश्रविकृत'
स्वराः इव भवेयुः यथा

## दीर्घसन्धिः ( अकः सवर्णे दीर्घः ६।१।१०१ )

| | | | |
|---|---|---|---|
| अ + अ | इ + इ | उ + उ | आ, ई, ऊ इत्यादि |
| अ + आ | इ + ई | उ + ऊ | क्रमशः भवेषु |
| आ + अ | ई + इ | ऊ + उ | |
| आ + आ | ई + ई | ऊ + ऊ | |

इत्यादि

परन्तु अ + अ स्वरः = आ स्वरः कथं स्यात् ?
एवमेव इ + इ = ई, उ + ऊ = ई, ऊ कथं स्यात् ?

## गुण-सन्धिः

(अदेङ्गुणः १।१।२, आद्गुणः ६।१।८७)

इति आधारीकृत्य

| | |
|---|---|
| अ, आ + इ, ई = ए | ए, ओ इत्यादि |
| अ, आ + उ, ऊ = ओ | क्रमशः भवेयुः। कथं ? |
| अ, आ + ऋ, ॠ = अर् | |
| अ, आ + ऌ = अल् | |

## वृद्धि-सन्धिः

( वृद्धिरादैच् १।१।१, वृद्धिरेचि ६।३।८८ )

| | |
|---|---|
| अ, आ + ए, ऐ = ऐ | ऐ, औ |
| अ, आ + ओ, औ = औ | क्रमशः भवेयुः। |

## यण् सन्धिः ( इकः यणचि ३।१।७७ )

( एचोऽयवायावः ६।१।७८, एङः पदान्तादपि ६।१।१०६ )

इमानि सूत्राणि आधारीकृत्य यण् सन्धौ अनेन प्रकारेण स्यात् इति ज्ञातव्यं यथा :—

दधि + अत्र = दध्यत्र
मधु + अदिः = मध्वदिः
शिशु + ऐक्यं = शिऽवैक्यं
धातृ + अंशः = धात्रशः
हरे + ए = हरये
पौ + अकः = पावकः
हरे + अव = हरेऽव

क्रमशः भवेयुः। अत्र 'इ' स्थाने 'य्' कथं स्यात्! तथा 'ए ऐ ओ औ' स्थाने क्रमशः 'अय् आय् अव् आव्' कथं स्यात्!

सूचना—एवमेव हल्–विसर्ग–सन्धिषु कतिपय–नियमाः विद्यन्ते 'पदत्वं' आनयनाय।

### अत्र किं रहस्यं ?

यदि सन्धि-नियम-कारणात् कारणैः वा
ए, ऐ, ओ, औ

विशुद्ध-स्वराः, मिश्रविकृतस्वराः इव क्रियेरन् , तदा तु कदाचित् अस्माभिः संधि-रहस्यं न ज्ञातं अद्यावधि। अनेन प्रकारेण तु सर्वे स्वराः अ, इ, उ इत्यादयः ह्रस्वाः, दीर्घाः, मिश्र-विकृताः स्वराः भवेयुः यथा अस्माभिः सन्धि–नियमैः उपरि सिद्धी-कृतं।

व्याख्या :—पंडितैः 'ऐ' इति स्वरस्य उच्चारणं 'अइ, अई वा' एवमेव औ इति स्वरस्य उच्चारणं 'अउ, अऊ वा' क्रियते, परन्तु ऐ औ स्वराणां इदं उच्चारणं नास्ति, न कदापि भवितुं अर्हति। यदि 'ऐ' इति स्वरस्य उच्चारणं 'अइ, अई वा स्यात्, तदा प्रथम

'ऐ' स्वरदानस्य किं प्रयोजनं, एवमेव 'औ' विषयेऽपि विचारणीयं ?
इदं सत्यं यत् गुणादिसन्धिनियमानुसारं

अ + ए = ऐ } अत्र वर्णद्वयस्य पूर्वपरस्य एकः वर्णः स्यात्
अ + ओ = औ } संस्कृतपदरचनायां इति स्वीकृतं वैय्याकरणैः

इत्यादि स्यात्, परन्तु 'ऐ' इति स्वतन्त्र-विशुद्ध-स्वरस्य एवमेव 'औ' विशुद्ध-स्वरस्य उच्चारणं अइ, अई, अउ अऊ वा कथं स्यात् क्रमानुसारं ? इयं वार्त्ता तु अन्या, यत् कृत्रिमरूपेण कस्यैचित् सुविधायै ऐ, औ स्वराणां उच्चारणं 'अइ अउ' इत्यादि मानितं वैय्याकरणैः।

## सन्धिनिमयेषु काचित् वैज्ञानिकी कृत्रिमता तु भवेत् एव

सन्धि-निमयेषु काचित् कृत्रिमता तु अस्ति एव, परन्तु सा कृत्रिमता पदरचनायै व्याकरणानुसारं आवश्यकी इति मन्यते सर्वैः संस्कृतभाषाविद्भिः। यदि कतिपयाः अच्हल्सन्धि-नियमाः न मन्येरन्, तदा विविधप्रातिपदिकेषु कथं 'पदत्वं' आनीयेत व्याकरणानुसारं ? इयं संस्कृतभाषायाः विशेषता, या अन्यासु भाषासु लोके नहि प्राप्यते। परन्तु तत्र अपि प्रचुरमात्रायां 'भाषा-विज्ञानं' विद्यते। या कृत्रिमता सन्धि-नियमेषु अवलोक्यते, तत्र अपि किमपि विज्ञानं विद्यते। अतएव वयं कथयामः, यत् संस्कृतलिपिः भाषा च वैज्ञानिकी। कोऽपि सिद्धान्तः, नियमः, काऽपि व्यवस्था वा संस्कृतलिपौ भाषायां च अवलोकयितुं शक्यते केनाऽपि बुद्धिमता। अव्यवस्था अनियमता नास्ति संस्कृतलिपौ संस्कृतभाषायां च। ते जानन्ति इदं सर्वं, ये संस्कृत-व्याकरणं अवधानेन पठन्ति। इदं सर्वं स्पष्टं भवति पूर्वकथनेन, अतः इत्यलं विस्तरेण।

## कृत्रिमोच्चारणं मन्येत् चेत्

परन्तु यदि संस्कृत-पंडिताः इच्छन्ति, यत् विशुद्ध-स्वरेण सह ऐ, औ स्वराणां एकं कृत्रिमोच्चारणं अपि स्यात् यथा अइ अई, अउ, अऊ, वा तदा इदं घोषितं स्यात्।

## ऋ, ॠ, लृ, कथित-स्वराः ?

वस्तुतः ऋ, ॠ, लृ विशुद्धस्वराः नहि विद्यन्ते, यत् उच्चारण मात्रेण स्पष्टं भवति, परन्तु संस्कृतलिपौ, संस्कृतव्याकरणे च विशिष्ट-प्रयोजन-कारणात् इमे वर्णाः स्वराः इति गणिताः

ऋटुरषाणां मूर्धा }
लृतुलसानां दन्ताः }

'ऋ, ॠ' वर्णद्वयस्य उच्चारण-स्थानं मूर्धा यथा 'र' वर्णस्य, तथापि 'ऋ, ॠ' उच्चारणे 'र्' इति व्यञ्जनस्य उच्चारणं भवेत् केनाऽपि स्वरेण सह क्षेत्रोच्चारणभेदेन। एकमेव लृ, लॄ इति वर्णोच्चारणे 'ल्, र्' इति व्यञ्जनद्वयस्य उच्चारणं भवेत् इ ई इत्यादि स्वरेण सह। अस्याः सत्यस्थितेः कोऽपि विकल्पः नास्ति। ऋ, ॠ, लृ, लॄ, वर्णाः, व्यञ्जन-स्वर-मिश्रितवर्णाः विशेषप्रयोजनकारणात् 'स्वराः' इति कृत्रिमरूपेण अवधारिताः यतोहि संस्कृत-व्याकरणात् ऋ, ॠ, लृ, वर्णानां निष्कासनं भवितुं नहि अर्हति इति स्पष्टं। एकं उदाहरणं दीयते:—

तुल्यास्यप्रयत्नं सवर्णम् १।१।९

व्याख्याः—'ताल्वादिस्थानं आभ्यन्तरप्रयत्नश्च इति एतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्। ऋ, लृ, वर्णयोः मिथः सावर्ण्यं वाच्यं'। यद्यपि ऋ इति वर्णस्य उच्चारणस्थानं मूर्धा तथा लृ वर्णस्य उच्चारणस्थानं दन्तः, तथापि वर्णद्वयस्य

सावर्ण्यं वाच्यं व्याकरणे विशेष-प्रयोजन-कारणात्। अनेन प्रकारेण ऋ, ॠ, लृ इति वर्णानां स्वरेषु गणना व्याकरणे क्रियते।

## ऋ, ॠ वर्णोच्चारणं भिन्नं भारत-प्रदेशेषु

कतिपयप्रदेशेषु ऋ, ॠ, वर्णद्वयस्य: उच्चारणं 'रि, री' अनेन प्रकारेण भवति, तथा अन्येषु 'रुँ, रूँ' अनेन प्रकारेण भवति। कारण अस्य उच्चारणभेदस्य संस्कृतलिपौ, क्षेत्रीयभाषाणां लिपय:, या: संस्कृतलिपिं अनुकुर्वन्ति, परन्तु क्षेत्रीयलिपिं आधारीकृत्य संस्कृतलिपौ, वर्णानां उच्चारणे च कृत्रिमभेद: आनीयते। वङ्ग-प्रदेशीयानां संस्कृतोच्चारणं विशेषरूपेण अवलोकनीयं, यत्र वङ्गलिपे: वर्णोच्चारणस्य प्रभाव: स्पष्टतया दरीदृश्यते संस्कृतहानये, एवमेव अन्येषु प्रान्तेषु अपि न्यूनाधिक्येन अवलोक्यते।

## अं, अः वर्णाः

मोऽनुस्वार: ८।३।२३ इति सूत्रबलात् 'अं' वर्णस्य उच्चारणं संस्कृलिपौ सानुनासिकं, 'अम्' वा इति स्यात्, परन्तु अङ् इति उच्चारणं क्रियते। उच्चारणद्वये किं उच्चारणं उचितं ? वयं तु विचारयाम:, यत् कदाचित् हिन्दीलिपौ उच्चारण-दोषात् अयं दोष: संस्कृतवर्णोच्चारणे आनीत:। परन्तु संस्कृतव्याकरणानुसारं सानुनासिकं, 'अम्' वा पदान्ते साधु उच्चारणं। अनुसारस्य विसर्गस्य संस्कृतव्याकरणे विशेषस्थानं प्रयोजनं च।

## ञमङणनानां नासिका च

यद्यपि एतेषां वर्णानां तालु-ओष्ठ-कराठ-मूर्धा-दन्ता: उच्चारण-स्थानानि क्रमानुसारं, परन्तु एतै: स्थानै: सह नासिकाऽपि उच्चारण-स्थानं विद्यते एतेषां हलक्षराणां। परन्तु पदस्य मध्ये तु एतेषां हलक्षराणां प्रयोजनं अनुसारं एव अर्थात् यत् कार्यं

अनुस्वारेण क्रियते, तत्कार्यं एतैः हलक्षरैः क्रियते। पदस्य अन्ते यदि अनुस्वारः स्यात् यथा 'तं मानव' तदा तु उच्चारणं 'म्' हल् इति स्यात्। पदानां मध्ये यथा अङ्ग, अञ्जनं, कण्ठः, अन्तः, सम्मानः, तेषां लेखनं अनेन प्रकारेण अपि स्यात् यथा अंगं, अंजनं, कंठः, अंतः, समानः इति। अत्र 'ञमङणनानां' हल् वर्णानां उच्चारण 'अनुनासिकं' स्यात् इति। एतेषां वर्णानां प्रयोजनं-द्वयं व्याकरणे परन्तु विद्वद्भिः निर्णेतव्यं, यत् इमे सर्वे वर्णाः यथापूर्वं संस्कृतलिपौ तिष्ठेयुः, उत किमपि परवर्त्तनं स्यात्, लिपेः भाषायाः च हानिं विना? यदि इमे सर्वे वर्णाः तिष्ठेयुः यथापूर्वं तदा उच्चारणं प्रत्येकं वर्णस्य किं स्यात्? 'ष' वर्णः 'ख' इति उच्चार्यते बहुभिः जनैः। 'ख' इति वर्णस्य आकृतिः रकारः वकारः इव प्रतीयते। जिह्वामूलीयं उपध्मनीयं किं तथा अद्य तेषां कः उपयोगः लौकिकसंस्कृते इत्यादि निर्णेतव्यं।

## अन्तिमनिवेदनं

संक्षेपे अस्माकं निवेदनस्य आशयः अयं। यद्यपि वयं विचारयामः, यत् संस्कृतलिपिः सामान्यतया पूर्णा वैज्ञानिकी च, यादृशी अन्या काऽपि लिपिः संसारे नास्ति, तथापि अद्य संस्कृतं भारतवर्षे कुत्र अपि भाषणादिभाषा नास्ति, तथा विभिन्नभारतीयक्षेत्रेषु क्षेत्रीयभाषाः (संस्कृतस्य भ्रंशरूपाणि) प्रचलिताः विद्यन्ते, यासां विभिन्नलिपयः, (संस्कृतलिपितः निस्सारिताः) विभिन्नोच्चारणासहिताः विद्यन्ते। अतएव संस्कृतलिपौ उच्चारणभेदः आनीतः क्षेत्रीयभाषावादिभिः। संस्कृतलिपिः संस्कृत-व्याकरणं, संस्कृतभाषा सर्वत्र एका, अतः उच्चारणादिभेदः मा भवेत् इति अस्माकं उद्दश्यं। स्वराणां व्यञ्जनानां पुनः वर्गीकरणं, उच्चारणं शुद्धीकरणं, वर्णानां आकृतौ यत्र तत्र परिवर्त्तनं इति आवश्यकं, येन संस्कृतं सुदृढं, सरलं,

आधुनिकं भूत्वा भूयोऽपिभारतस्य मातृ-राष्ट्र-राज शिक्षाभाषा स्यात्। प्राचीनग्रन्थेषु यत्किञ्चित् , विद्यते, कथित-प्राचीनैः यत्किञ्चित् कथ्यते, तस्य एव अविचारेण समर्थनं कथं उचितं ? सत्तर्कः, सद्-विचारः, अनुसन्धानं च आवश्यकं, यदि वयं उन्नतिं कामयामहे संस्कृतभाषायाः। प्राचीनेषु आधुनिकेषु यत् यत् लाभकरं तदेव रक्षणीयं, यत् हानिकरं दूरीकरणीयं इति मार्गेण उन्नतिः सम्भवेत्।

अस्माकं भारतीयविद्याप्रचारसमितिः, यस्याः संस्कृतसरलीकरणे प्रचारे च विशिष्ट-स्थानं (येन संस्कृतं भूयोऽपि राष्ट्रादि भाषा स्यात् भारते, विश्वे च विश्वभाषा) एकां भारतीय विदुषां सभां कर्त्तुं उद्यताऽस्ति, येन तस्यां एतेषु प्रश्नेषु पूर्वोक्तेषु अन्येषु वा विचारः स्यात् तथा कोऽपि सामूहिक-निर्णयः भवेत् संस्कृतहिताय।

संस्कृतलिपेः, संस्कृतभाषायाः तस्याः व्याकरणस्य, संस्कृत-साहित्यस्य महत्त्वं विश्वविदितं, अतः अधिकं कथनं अनावश्यकं। केवलं एतेषु सर्वेषु विषयेषु शोध-कार्यं आवश्यकं, येन संस्कृतं भूयोऽपि 'विशुद्ध स्वर्णं' स्यात्। अस्माकं भारतीयानां प्रमादात्, दासतायाः प्रायः द्विसहस्रवर्षेषु संस्कृतं स्वस्थानात् च्युतं, भ्रष्टं, दूषितं च जातं इति विवादरहितं। अतः अस्माभिः सर्वैः भारतीयैः शोधादिकार्यं करणीयं इति निवेदनं। यदि सर्वासां क्षेत्रीयभाषाणां वङ्ग-तेलगू-तमिल-मलायालमादीनां न्यूनातिन्यूनं संस्कृत-लिपिः स्यात् तथा शनैः २ ताः भाषाः संस्कृतं क्रियेरन्, तदा भारत-भाग्योदयः अवश्यम्भावी।

विश्वेऽपि वैज्ञानिकी संस्कृतलिपिः संस्कृतभाषा च स्यात् पूर्ववत् इत्यपि अस्माकं अभीष्टं।

तृतीयाध्याये संस्कृतभाषायाः पतनेतिहासः पतनकारणानि च दीयन्ते।

# तृतीयः अध्यायः

## संस्कृतभाषायाः पतनेतिहासः पतनकारणानि च

सृष्टिकालात् आरम्भ महाभारतकालात् प्राक् संस्कृतं अक्षुण्णं अतिष्ठत्। संस्कृतं तावत्कालपर्यन्तं भारतदेशस्य न केवलं धर्मभाषा अपितु मातृ-राष्ट्र-राज-शिक्षाभाषाऽपि आसीत् तथा विश्वभाषाऽपि। परन्तु महाभारतकाले एतादृशानि कारणानि सञ्जातानि, यैः संस्कृतस्य ह्रासः तदा प्रारब्धः, यः शनैः २ पूर्णतां गतः, तथा दासतायाः काले प्रायः पूर्णह्रासः सञ्जातः, यः इदानीं अपि अस्माभिः सर्वैः अवलोक्यते। तानि सर्वाणि ह्रासकारणानि अत्र दीयन्ते पतनेतिहाससहितं।

### महाभारतात् प्राक् देशस्थितिः

इदं तु सत्यं एव यत् तदा केवलं संस्कृतं आसीत् भारते विश्वेऽपि, तथा एकं संस्कृत-साहित्यं आसीत् सर्वेषां मानवानां। तदा भारतदेशस्य आत्यन्तिकोन्नतिः सञ्जाताऽऽसीत्, तथा भारतीयं एकछत्रसाम्राज्यं लोके अतिष्ठत्। अस्य कथनस्य पुष्टौ ज्वलत्प्रमाणं इदं, यत् महाभारतयुद्धे देशदेशान्तराणां राजानः आगताः आसन्, ये तदानींतनस्य भारतस्य अधीनत्वं प्रभुत्वं वा स्वीकुर्वन्तिस्म। आश्चर्यं तु इदमेव यत् पाताल-भू-खंडात् ( इदानीं उत्तर-दक्षिण अमेरिका इति नाम ) अपि बहवः राजानः युद्धे, विश्वयुद्धे वा महाभारतं नाम समागताः। तदा भारतं परमोन्नतेः चरमां सीमां आरोहत्। भारतीयजनानां सर्वस्मिन् लोके गमनागमनं

भवतिस्म, तथा देशदेशान्तरेषु गमनस्य अन्यानि साधनानि अपि आसन्।

परन्तु मानव-दौर्भाग्यं तु इदमपि अस्ति, यत् महोन्नतिकाले कस्यचित् देशस्य, भाविन्या: अवनते: कारणानि अपि उत्पद्यन्ते। यदि कस्यचित् भूखण्डस्य, मानवसमाजस्य, राज्यस्य साम्राज्यस्य वा महोन्नति: भवति, तथा तत्रत्य: मानवसमाज: राष्ट्रं वा धन-धान्यत: पूर्णतया समृद्धं जायते, तदा तत्रत्य: जन: शनै: २ अलस: निष्चेष्ट: मद्य-मांस-मैथुनादि-प्रिय: भूत्वा नाशोन्मुख: भवति। अयं एव प्रकृते: नियम: मानव-स्वभावस्य नियम: वा, अवलोक्यते सर्वत्र, यस्य पुष्टि: लोकेतिहासेन क्रियते। भारतीयसाम्राज्यं यत् कोटि-कोटिवर्षाणि यावत् लोके अतिष्ठत्, नाशं गतं, एवमेव अन्यानि साम्राज्यानि अपि यथा फारस–ग्रीस–रोमन-फ्रेञ्च-जर्मन जापान-आंग्लादीनि, यानि महाभारतात् अनु उत्पन्नानि, कालगर्भे विलीनानि च। अस्य ऐतिहासिक-तथ्यस्य अर्थात् यस्य उन्नति:, तस्य अवनति:, यस्य अवनति: तस्य उन्नति: निरन्तरं दिन-रात्रिवत् कुम्भकारस्य चक्रवत्, सुललित–काव्ये, पंचतन्त्र–वर्णिते, दीयते यथा—

रामस्य व्रजनं बले: नियमनं पाण्डो: सुतानां वनं,
वृष्णीनां निधनं नलस्य नृपते: राज्यात् परिभ्रंशनं।
नाट्याचार्यकं अर्जुनस्य पतनं संचिन्त्य लकेश्वरे,
सर्वं कालवशात् जन: अत्र सहते क: कं परित्रायते।
क्व स दशरथ: स्वर्गे भूत्वा महेन्द्र–सुहृत् गत:,
क्व स जलनिधे: वेलां बद्ध्वा नृप: सगर: तथा।
क्व स करतलात् जात: वैन्य क्व सूर्यतनु: मनु:,

ननु बलवता कालेन एते प्रबोध्य निमीलिताः।
मान्धाता क गतः त्रिलोकविजयी राजा क सत्यव्रतः,
देवानां नृपतिः गतः क नहुषः सच्छास्त्रवान् केशवः।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः,
कालेन एव महात्मना तु अनुकृताः कालेन निर्वासिताः।

अपि च—

स च नृपतिः ते सचिवाः ताः प्रमदाः तानि काननवनानि,
स च ते च ताः च तानि च कृतान्तदृष्टानि नष्टानि।

व्याख्याः—काचित् व्याख्या तु आवश्यकी नास्ति, तथा
शब्द-द्वयं अस्य ऐतिहासिक-तथ्यस्य पुष्टी-करणाय आवश्यं
यत् काले २ महाकायानि महासमृद्धानि साम्राज्यादीनि प्रादुर्भवन्ति
तथा भूयोऽपि कालगर्भे विलीनानि भवन्ति । कार्यजगति
'स्थायित्वं सर्वकालीनं' तु अस्ति एव नहि। कार्यजगति 'परि
वर्त्तनं किञ्चित्कालानन्तरं' इति नियमः। तथैव सभ्यताः, संस्कृतयः
भाषाः, साहित्यानि, विज्ञानानि इत्यादीनि अपि नष्टानि भवन्ति
किंबहुना भूचालादि-कारणात् खंड-प्रलयाः जायन्ते, येन भूमयः
पर्वताः समुद्राः, तथा समुद्राः पर्वतादयः जायन्ते। कालान्ते
महाप्रलयोऽपि भवति यदा निखिल-ब्रह्माण्डं अर्थात् इयं अनन्त
रचना सूर्यमंडलादि-लोकलोकान्तरादि-सहिता विनष्टा भवति।
रचना, विनाशः, विनाशः, रचना इति नित्य-नियमः चक्रवत्
यस्य एकमात्र-कर्त्ता ईश्वरः।

## शिक्षा

अतः इयं शिक्षा यत् कार्यजगति संसारे वा किमपि सर्व-
कालीनं, परिवर्त्तन रहितं नास्ति। परिवर्तनं उन्नतये, अवनतये वा

अवश्यम्भावि । अतः यानि आधुनिक-साम्राज्यानि अमेरिका-रूसादीनि (प्रभाव कारणात्) तथा इंगलैण्ड-फ्रांसादीनि (उपनिवेशानां कारणात्) किञ्चित्कालान्तरं विनष्टानि भवेयुः, यथा प्राचीनानि विनष्टानि जातानि । इंगलैण्ड-फ्रांसस्य साम्राज्यं तु नष्टं इव प्रतिभाति लोके ।

### मानव-स्वभावः

परन्तु अल्पज्ञत्वात् मानवस्य अयं स्वभावः, यत् उन्नतिकाले स विचारयति, यत् सदैव एतादृशी उन्नतिः तिष्ठेत् । अवनतिकाले स विचारयति, यत् सदैव अवनतिः एव तिष्ठेत् । समाजः राष्ट्रं साम्राज्यं वा 'मानवानां समूहः', अतः स एव नियमः मानवेऽपि लगति ।

### अस्य कारणं किं ?

उन्नतेः काले, अवनतेः कारणानि उत्पन्नानि भवन्ति, तथा अवनतेः काले, उन्नतेः कारणानि उत्पन्नानि भवन्ति, येन उन्नतिः अवनतिः, अवनतिः, उन्नतिः समाजानां राष्ट्राणां लोके अवलोक्यते । परन्तु समाजः राष्ट्रं वा इमानि अदृष्ट-कारणानि ध्यानपथे न आनयति, अतः पथभ्रष्टं इव तिष्ठति । इयं इतिहासस्य शिक्षा, परन्तु

"गतानुगतिकः लोकः न लोकः पारमार्थिकः"

इति तथ्य-कारणात् भ्रष्टः इव तिष्ठति लोकः इति सामान्य-स्थितिः । संस्कृत भाषायां एका लोकोक्तिः विद्यते यत्

'सुखे कोऽपि ईश्वरं नहि स्मरति,
दुखे स्मरन्ति, दुखं वारणाय इति ।'

### भारतीयसाम्राज्यं

अस्माभिः पूर्वं निवेदितं, यत् सृष्टिकालात् आरम्भ महाभारतात् प्राक् भारतीयसाम्राज्यं लोके अक्षुण्णं अतिष्ठत् । अस्य

कारणं इदं एव आसीत; यत् भारतीयसाम्राज्यं 'प्रधानतः सांस्कृतिकमेव' आसीत, येन एतद्-दीर्घकालपर्यन्तं प्राचलत् वैदिक-युगे, ब्राह्मणादि-दर्शनादि-उपनिषदादि-सूत्र-धर्म-स्मृत्यादि ग्रन्थकाले संस्कृतभाषायाः, संस्कृतसाहित्यस्य, संस्कृतसंस्कृते विज्ञानादेः, लोकवैभवस्य चरमोन्नतिः जाता, परन्तु प्रायः भारती योपनिवेशान् शिक्षितान् कृत्वा 'स्वतन्त्रताः कृताः उपनिवेशा भारतीयशासकैः। भविष्यपुराणे विद्यते यत्,

'मिश्र-उद्भवाः म्लेच्छाः काश्यपेन एव शासिताः,
संस्कृताः शूद्रवर्णेन, ब्रह्मवर्ण उपागताः।
शिखासूत्रं समाधाय, पठित्वा वेदं उत्तमं,
यज्ञैः च पूजयामासुः देवदेवं शचीपतिं।'

व्याख्या :—मिश्र-प्रदेशं (अफ्रीका इति भूखण्डः) गत्वा काश्यपे (कश्चित् भारतीय-चक्रवर्त्तिराजा) तत्रत्याः म्लेच्छाः (अज्ञानिन शासिताः, तथा वेदादि-शिक्षाद्वारा सुसंस्कृताः, वेदधर्मे आनीत इत्यादि। पुराणकालपर्यन्तं अपि

'कृण्वन्तः विश्वं आर्य्यं' ( वेदः )

इति अस्माकं ऋषिमुनीनां, भारतीयचक्रवर्त्तिराज्ञां सिद्धान आसीत्। सर्वस्मिन् लोके महाभारतात् प्राक् तु वेदधर्मः एव ध आसीत्। ये भारतीयाः अन्ये वा यत् इदं कथयन्ति, यत् वेदध अन्ये जनाः आनेतुं नहि शक्नुवन्ति, तत्तु तेषां सर्वेषां 'घोरत अज्ञानं एव'। संस्कृतभाषायाः, संस्कृतसाहित्यस्य वेदादिशास्त्र अज्ञानात्, तथा विशेषतया यस्मात् कालात् संस्कृतभाषाया पठन-पाठनं, भाषणादिकं, संस्कृतसाहित्ये अन्वेषणादिकं, वेद दिशास्त्रस्य सरहस्यं गुरुमुखात् पठनं गुरुकुलादिषु परित्यक्तं, तस्मा

कालात् अस्माकं भारतीयसाम्राज्यस्य, राष्ट्रस्य, समाजस्य पतनं आरब्धं, तत् अद्यपूर्णतां गतं। सरहस्यं वेदादि-शास्त्राणां पठनं नितान्तं आवश्यकं, यदि वयं भारतीय राष्ट्रस्य,समाजस्य, वास्तविकोन्नतिं कामयामहे । केवलं ग्रन्थगतस्य संस्कृतस्य शास्त्रस्य वा पांडित्य-प्रदर्शनार्थं शुकवत् रटनं, भारवाहिगर्दभः इव भारवहनमात्रं एव स्यात् । मानवस्य विशेषता का ? पदादि-रचनाज्ञानं, सरहस्यं अर्थादिज्ञानं, तथा सच्छास्त्रेषु सद्वचनेषु, शिक्षासु, आचरणं इति मानवस्य विशेषता, अन्यथा

साहित्य–सङ्गीत–कला–विहीनः,
साक्षात् पशुः पुच्छ–विषाण–हीनः ।

शास्त्राणां सरहस्यं अर्थज्ञानं आवश्यकं यथा

वेदशास्त्रार्थतत्त्वज्ञः, यत्र तत्र आश्रमे वसन्,
इह एव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते।
अज्ञेभ्यः ग्रन्थिनः श्रेष्ठाः, ग्रन्थिभ्यः धारिणः वराः,
धारिभ्यः ज्ञानिनः श्रेष्ठाः, ज्ञानिभ्यः व्यवसायिनः ।

( मनु० अध्या० १२, श्लो० १०२–३ )

आचारात् यः मानवः, समाजः राष्ट्रं वा हीनं तत् राष्ट्रं अवश्यमेव नाशं आप्नुयात् । अस्माभिः अत्र कोऽपि त्रिकालसत्यः सिद्धान्तः, विश्वेतिहासेन प्रकटीकृतः दीयते, येन कस्यचित् राष्ट्रस्य समाजस्य वा उन्नतेः अवनतेः मापः सरलतया भवेत् । इयं तुला यस्यां तोलनं स्यात् । मानवस्य, समाजस्य, राष्ट्रस्य च संरक्षणाय वैयक्तिक-सामाजिक-राष्ट्रिय-आचारः सदाचारः आवश्यकः इति तथ्यं ।

• महाभारतात् प्राक् भारतीय राष्ट्रस्य तथा।

## समाजस्य स्थितिः

दौर्भाग्यवशात् कस्यचित् राष्ट्रस्य समाजस्य वा कस्मिंश्चित्

काले ( दीर्घे अल्पे वा ) पतनं तु भवति एव, यथा अस्माभिः पूर्व-पृष्ठेषु सिद्धीकृतं। भारतराष्ट्रं भारतसमाजोऽपि अस्य अपवाद नासीत्। इदं सत्यं, यत् कोटि-कोटि-वर्षाणि यावत् अस्माकं साम्राज्यं, राष्ट्रं, समाजः च भ्रष्टः न जातः, तथापि एकं दुर्दिनं आगतं एव, यदा राष्ट्रस्य समाजस्य च पतनं जातं। उन्नतिकाले, यानि अवनतेः कारणानि उत्पन्नी-भवन्ति, तेषां सूक्ष्मदृष्ट्या अवलोकनं तेषां वारणं च कदाचित् सर्वकालपर्यन्तं भवितुं नहि अर्हति मानवस्य अल्पज्ञत्वात्। यदा भारतराष्ट्रस्य, भारतीयसाम्राज्यस्य तथा समाजस्य चरमोन्नतिः जाता सर्वासुदिक्षु, तदा अवनतिः आरब्धा, अर्थात् मानवस्य स्वतएव प्रमादात्, आलस्यात्, मद्य-मांस-मैथुन-द्यूतादि-महादोषेषु लिप्तत्वात्। यदा कोऽपि मानवसमाजः सर्वतः सुखी, सम्पन्नः, लोक-वैभवादियुक्तः जायते, तदा शनैः वेगेन वा दोषाः उत्पन्नाः भवन्ति, यानि भाविकाले नाशकारणानि जायन्ते।

## भारतीय राष्ट्रस्य समाजस्य तदा हीनावस्था

यथा शरीरं तदा रुग्णं भवति, यदा काऽपि न्यूनता निर्बलता शरीरे उत्पद्यते, तथैव कस्यचित् मानवसमाजस्य राष्ट्रस्य वा पतनं तदा भवति, यदा काचित् न्यूनता दोषाः वा तस्मिन् उत्पद्यन्ते। महाभारतस्य कारणं इदं आसीत्, यत् तात्कालिके भारतीय समाजे राष्ट्रे च बहवः दोषाः उत्पन्नाः जाताः आसन्। तदा भारत-देशेऽपि कोऽपि वस्तुतः सम्राट् नासीत्, यस्य सर्वस्मिन् देशे शासनं स्यात्। बहूनि दीर्घ-लघु-राज्यानि जातानि आसन्, येषां परस्परं गृह-युद्धं एकमात्र-पौरुषं आसीत्। प्रायः सर्वे भारतीयाः



मद्यपाः, मांसाहारिणः, व्यभिचारिणः, उद्दण्डाः, सर्वथा मर्यादा-

रहिताः जाताः आसन्। एतस्याः उद्दण्डतायाः गृहयुद्ध-प्रियतायाः एकं ज्वलत्प्रमाणं महाभारतग्रन्थात् एव अस्माभिः दीयते। तस्य मौसलपर्वणि वृष्णीनां एवं यादवानां भगवतः कृष्णस्य वंशजानां नाशः परस्परं गृहयुद्धेन एकं प्रमाणं। यद्यपि तस्मिन् काले महा-योगिराज-कृष्णोऽपि आसीत् सूर्यः इव आकाशे, परन्तु स महात्मा महाराजनीतिज्ञः, वेदज्ञोऽपि युद्ध-वारणे असमर्थः जातः। भगवतः कृष्णस्य विषये महाभारते विद्यते

"वेद-वेदाङ्ग-विज्ञानं बलं चाऽपि अधिकं तथा,
नृणां लोके हि कः अन्यदस्ति, विशिष्टः केशवात्ऋते।' (महाभारतं)

परन्तु पापस्य दुष्ट-कर्मणः तु फलं मिलति एव, काऽपि व्यक्तिः समाजः, राष्ट्रं वा स्यात् ईश्वर-व्यवस्थया। 'नियतिः केन वार्यते' इति पुराणं। अन्यत्र अपि विद्यते यथा

दुर्गः त्रिकूटः परिखा समुद्रः,
रक्षांसि योधाः, धनदात् च वित्तं,
शास्त्रं च यस्य उशनसा प्रणीतं,
स रावणः दैववशात् विपन्नः। (पंचतन्त्रं)

धर्मः एव हतः हन्तिः,
धर्मः रक्षति रक्षितः। (मनु०)

अतः स्वपापस्य फलं प्राप्तं यादवैः, यथा कौरवपांडवैः येन अन्ते भारतनाशः जातः, यस्य दुष्परिणामाः अद्य अपि अपाकर्त्तुं नहि सम्भवन्ति। ईश्वरः न्यायकारी, न कस्यचित् पुरुषस्य, समाजस्य राष्ट्रस्य वा पक्षपाती। एकं सामाजिकं राष्ट्रियचरित्रं वा भवति यथा वैयक्तिकं, अतः यदि समाजस्य राष्ट्रस्य वा चरित्रे दोषाः उत्पद्येरन्, तदा समाजस्य राष्ट्रस्य वा सामूहिक पापस्य फलं

स्वरूपे नाशः स्यात्। इदं एकं अन्यत् त्रिकाल-सत्यं, यत् केनाऽपि पुरुषेण, समाजेन, राष्ट्रेण वा ध्यानपथे नहि आनीयते।

तदानींतनेषु प्रायः सर्वेषु भारतीयराजसु अयं दोषः प्रसृत आसीत्, यत्ते द्यूत-प्रियाः जाताः आसन्। कोऽपि राजा यदि द्यूताय निमन्त्रितः स्यात्, तदा निमन्त्रणं अस्वीकरणं एकं पाप इव आसीत्। अतः धर्मराजयुधिष्ठरेण दुर्बुद्धेः दुर्योधनस्य द्यूताय निमन्त्रणं न अस्वीकृतं, ज्ञात्वाऽपि, यत् स दुष्टदुर्योधनः, पाण्डव-राज्य-हर्ता, शकुनी-प्रेरितः, पाण्डवानां आत्यन्तिक-नाशाय द्यूतार्थं निमन्त्रयते। तदानींतने समाजे, राजवंशेषु च एतादृशी दुष्ट-परम्परा आसीत्। एतादृशी स्थितिः नासीत्, यत् युधिष्ठिरः अन्ये पाण्डवाः वा द्यूतस्य परिणामं न जानन्तिस्म। ते शास्त्रं अपि जानन्तिस्म यत्

द्यूतं समाह्वयं चैव राजा राष्ट्रात् निवारयेत्,
राज्यान्तकरणौ एतौ द्वौ दोषौ प्रथिवीक्षितां।
द्यूतं समाह्वयं चैव, यः कुर्यात् कारयेत् वा,
तान् सर्वान् घातयेत् राजा शूद्रान् च द्विजलिङ्गिनः।
द्यूतं एतत् पुराकल्पे दृष्टं वैरकरं महत्,
तस्मात् द्यूतं न सेवेत, हास्यार्थं अपि बुद्धिमान्।
प्रच्छन्नं प्रकाशं वा, तत् निषेवेत यः नरः,
तस्य दण्डविकल्पः स्यात् यथेष्टं नृपतेः तथा।

( मनु० अध्या० ९, श्लो० २२१-२४-२६-२८)

परन्तु द्यूतस्य निमन्त्रणस्य अस्वीकरणे धर्मराजोऽपि असमर्थः जातः, एतादृशः प्रभावः कस्याञ्चित् दुष्टपरम्परायाः भवति। सामाजिकाः दोषाः एतैः मृत्युमुखे बलात् नीताः अवलोक्यन्ते।

दुर्योधनस्य मातुलः शकुनी महाप्रवीणः छली च आसीत्। तस्य इदं षड्यन्त्रं आसीत्, येन पाण्डवान् द्यूते विजित्य, न्यूनातिन्यूनं १२ वर्षाणि यावत् देशात् वहिष्कृत्य, अर्थात् रामवत् तान् सर्वान् वनवासे प्रेष्य, तस्य भगिनी-पुत्राः, कौरवाः दुर्योधन-मूर्धन्येन, निष्कण्टकं राज्यं कुर्युः, यत् न्यायेन पाण्डवानां आसीत्। षड्यन्त्रविद्भिः, पाण्डवानां शुभचिन्तकैः पाण्डवाः सावधानाः कृताः, परन्तु मिथ्या दुष्ट-सामाजिक-मानमर्यादापाशे निबद्धाः, पाण्डवाः युधिष्ठिर-प्रमुखतः, बलात् षड्यन्त्र-रूपि-मृत्यु-मुखे नीताः। विचारोऽपि जातः, परन्तु अन्ते युधिष्ठिरः कथितवान् यत् कथं द्यूत-निमन्त्रणं, षड्यन्त्र-युक्तं अपि, अस्वीकुर्याम्, यतोहि तेन मम, सर्वेषां पाण्डवानां च अपमानः स्यात् राजसु। इदं सर्वं स्पष्टं भवति, यत् तेन निमन्त्रणानन्तरं कृत।

परं कीदृशं द्यूतं आसीत्, यत् भ्रातरः, द्रौपदी भार्याऽपि पणे स्थापितः युधिष्ठिरेण, यदा सर्वा सम्पत्तिः धनं च द्यूते जितं दुर्योधनेन। अनेन सिद्धयति, यत् तस्मिन् भारतीयसमाजे मनुष्याणां अपि द्यूते स्थापनं भवतिस्म धनवत्। सामाजिकपतनस्य पराकाष्ठा आसीत् इति स्पष्टं। एतादृशाः राजानः सुशासने कथं समर्थाः भवेयुः। एतादृशैः शासकैः, पतितैः, कदापि प्रजा-हित कर्त्तुं नहि शक्यते। अस्यां दशायां भारतीयराष्ट्रस्य घोरतमा अवनतिः अवश्यम्भाविनी आसीत्। किं आश्चर्यं तदा, यत् इमे सर्वे भारतीय राजानः परस्परं महाभारत-युद्धं कृत्वा, नष्टाः अभवन्। तथापि

'दुर्बलः हस्थी अपि, महाकायः इव'

इति लोकोक्त्यनुसारं भारतीयराष्ट्रं सवेगं पतनोन्मुखं लोके तावत्पर्यन्तं विशालं महाकायं आसीत्, येन अन्ये लोक-राजानः

तस्य अधीनत्वे प्रभावे च आसन्। अतः आहूताः सन्तः कौर पाण्डवैः, तेऽपि आगताः, युद्धे नष्टी-भूताः इति।

अतः तदानींतने भारतीयसमाजे राष्ट्रे च सर्वे दोष आसन्, ये नाशाय अलं। ते सर्वे राजानः महाधनुर्धरा महारथाः, महाबलिनः, युद्धेमहाकुशलाः आसन्, परन्तु उद्दण्ड देशद्रोहिणः, प्रजाहित-अचिन्तकाः आसन्, येन नाशमार्गे गताः एतेषु सर्वेषु राजसु, केवलं भगवान् कृष्णः एव महाराजनीतिज्ञ महायोगी, एकमात्र-बुद्धिमान् आसीत्, घोराज्ञानान्धकाराच्छा दिताकाशमण्डले सूर्यवत्। परन्तु स एकलः जनः किं कुर्यात् तेन महात्मना सर्वे राजानः प्रबोधिताः विशेषतया कौरवाः, पर दुर्बद्धेः दुर्योधनस्य उत्तरं आसीत् यत

'पञ्चग्रामदानस्य तु वार्त्ता एव का,

सूच्याग्रतुल्याऽपि भूमिः नहि दास्यते युद्धेन विना।'

अतः युद्धं अवश्यम्भावि जातं 'महाभारतं' नाम। अ उद्दण्डता, अनुशासनहीनता, चरित्रहीनता सर्वोपरि दुर्बु एकमात्रनाशकारणं आसीत्। तथैव वैयक्तिक-दुर्बुद्धिः भवति येन तत्पुरुषस्य नाशः भवति, कौटुम्बिक-दुर्बुद्धिः, सामाजि दुर्बुद्धिः, राष्ट्रिय-दुर्बुद्धिः च भवति, येन क्रमानुसारं कुटु म्बस्य, समाजस्य, राष्ट्रस्य च नाशः भवति आत्यन्तिकः।

प्राचीन-युद्धानि किं, आधुनिक-विश्वयुद्धद्वयं ( १६१४, १६३ ईस्वीयं ) वैयक्तिक-सामाजिक-राष्ट्रिय-दुर्बुद्धेः ज्वलत्प्रमाणं भावितृतीयमहा-युद्धस्य भूमिका तु रच्यते एव सवेगं, तया ए राष्ट्रियादि-दुर्बुद्धया इति न विस्मरणीयं लोकैः।

पूर्वोक्तइतिहासेऽपि एकं त्रिकालसत्यं, येन युद्धानि लो

जातानि, भविष्यन्ति च यथापूर्वं इति निष्कर्षः, यदि लोके सद्बुद्धेः साम्राज्यं न स्यात्। अतः भारतीयैः प्रतिदिनं ईश्वर-प्रार्थनायां ईश्वरः प्रार्थ्यते सद्बुद्धि-दानाय यथा

'ओ३म् भूः, भुवः, स्वः, तत्सवितुः वरेण्यं,
भर्गः देवस्य धीमहि, धियः यः नः प्रचोदयात् ।'
(गायत्री, वेदः)

अत्र प्रार्थना क्रियते यत् स ईश्वरः अस्मभ्यं सर्वेभ्यः सद्बुद्धिं प्रदद्यात्। यदि लोके वैयक्तिक-कौटुम्बिक-सामाजिक-राष्ट्रिय-सद्-बुद्धिः स्यात्, तदा क्व परस्परं कलहः युद्धं च ? अतः विश्वयुद्धादि-वारणाय-सद्बुद्धेः सम्पादनं आवश्यकं इति शिक्षा, यस्याः अवहेलना नहि कर्त्तुं शक्यते केनाऽपि मानवेन, समाजेन, राष्ट्रेण च, लोकहितेच्छुकेन इति।

## महाभारतात् प्राक् संस्कृतभाषायाः संस्कृतसाहित्यस्य च स्थितिः

इदं तु सत्यं यत् तदा सर्वस्मिन् भारते संस्कृतभाषा देशस्य मातृराष्ट्र-राज-शिक्षाभाषा आसीत्। अस्य तथ्यस्य ज्वलत्प्रमाणं इदं यत् सर्वं राष्ट्रियसाहित्य केवलं संस्कृते एव आसीत्। यदि काऽपिभाषा मातृभाषा जनभाषा न स्यात्, तदा कदापि सर्वं साहित्यं तस्यां भाषायां भवितुं नहि अर्हति। विद्यायाः प्रायः सर्वासु शाखासु यथा साहित्य–विज्ञान–गणित–ज्योतिष–आयुर्वेद-इतिहास-अर्थशास्त्र-धर्मशास्त्र (विधिविधानसहित)–नाट्यनृत्यगायन-भूगर्भ-विमानादि-कलासु संस्कृतसाहित्यं आसीत् यत् न्यूनाधिकं इदानीं अपि मिलति। निर्विवादं, यत् तदा संस्कृतं एव भारतस्य मातृभाषा आसीत् जनभाषा च। तावत्पर्यन्तं इदं सर्वं राष्ट्रिय-

साहित्यं अक्षुण्णं आसीत्। वेदः वेदसाहित्यं अपि सुरक्षि
आसीत्। परन्तु अनन्तरं अस्य सर्वस्य विद्यारूपिपैतृकदाय
अभिवृद्धिः उन्नतिश्च अवरुद्धा आसीत्, यतोहि तनानींतनः समा
भारतीय-राष्ट्रं च दुष्टं जातं आसीत्।

## महाभारतयुद्धं

अन्ते महाभारतयुद्धं जातं, यस्मिन् प्रायः सर्वे कौरवाः त
पक्षपातिनः, पाण्डवानां अपि प्रायः सर्वे प्रियचिकीर्षवः नष्टीभूताः
एकस्मिन् शब्दे सर्वं भारतं नाशं प्राप्तवान्। महाभारतयुद्ध
कथा तु विशदरूपेण महाभारतग्रन्थे वर्णितं विद्यते। ये ज
युद्धस्य इतिहासं ज्ञातुं इच्छन्ति, ते तद्ग्रन्थ पठेयुः। परन्तु 
तु सत्यं, यत् महाभारतयुद्धानन्तरं भारतं पूर्णतया चूर्णीभूतं वि
च। एतादृशः विनाशः सञ्जातः सार्वत्रिकः, येन इदानीं याव
भारतं भूयः उत्थातुं न शक्नुयात्। युद्धानन्तरं भारतं छिन्नभि
जातं, विविध भागेषु विभाजितं अतिष्ठत्। तस्य भारतस्य सांस्कृति
साम्राज्यं अपि सर्वथा विनष्टं,क तदा तस्य उपनिवेशाः, अधीन-राजा
च। शनैः २ संस्कृतं विनष्टं, तथा बह्वयः क्षेत्रीयभाषाः (संस्कृत
एव भ्रंशरूपाणि) प्रादुर्भूताः, येन भारतैक्यं सर्वथा विनष्टं। परि
णामे वेदधर्मस्य स्थाने, बहवः सम्प्रदायाः, बौद्धादयः वाममार्ग
प्रादुर्भूताः। एतैः सर्वैः सम्प्रदायैः तथा अन्यैः देशसमाज-द्रोहिभि
राष्ट्रिय-संस्कृतसाहित्यं स्वार्थकारणैः दुष्टीकृतं क्षेपकादिभिः, 
भारतस्य 'सर्वस्वं' नष्टं! अन्ते विदेशीयाक्रामकाः भारते प्रवे
गताः, यैः भारतं पूर्णतया दासीकृतं सर्वथा विनष्टं, यस्य इतिहास
आधुनिकः प्राप्तेतिहासग्रन्थेषु वर्णितः।

महाभारतकालानन्तरं या दशा भारतस्य आसीत्, तथा

प्रभावः तस्याः संस्कृतभाषायाः संस्कृतसाहित्यस्य उपरि पतितः, तस्य वर्णनं संक्षेपेन अत्र क्रियते, येन पूर्णतया सिद्धं स्यात्, यत् संस्कृतपतनस्य कानि कानि कारणानि इति।

## महाभारतकालानन्तरं

महाभारत-युद्धानन्तरं तु इदं 'पतनं' पराकाष्ठां गतं। यतोहि ये के वेदज्ञाः, विद्वांसः, नयशास्त्रविदः तस्मिन् काले आसन्, तेषु बहवः मृताः। ये अवशिष्टाः यथा वेदव्यासादयः, तैः प्राणपणेन प्रयत्नः कृतः 'वेदादिज्ञानस्य' रक्षायै, मृतभारतीयसमाजे प्राणप्रतिष्ठापनाय। परन्तु मृतशरीरे कथं प्राणप्रतिष्ठा स्यात्? तथापि वेदव्यासादिवेदज्ञैः महापंडितैः 'भारतादिकं' रचितं, यत् अनन्तरं महाभारतं इति रूपे आनीतं तेषां शिष्यादिभिः गृहयुद्धस्य परिणाम-प्रदर्शनाय, सर्वेषां मानवानां शिक्षायै च। परन्तु भारतस्य भारतीयानां च पतनं न अवरुद्धं।

## संस्कृतभाषा-साहित्यादिकस्य दशा

यदा केषांचित् भाषाभाषिणां पतनं जायते तदा तु तेषां भाषायाः साहित्यस्य अपि पतनं अवश्यम्भावि। अन्यथा भवितुं न अर्हति, यथा लोके अवलोक्यते। उन्नतराष्ट्राणां भाषा साहित्यं च उन्नतं भवति, परन्तु अनोन्नत-राष्ट्राणां भाषा साहित्यं च अनुन्नतं भवति। कस्यचित् राष्ट्रस्य उन्नतेः अवनतेः, तस्य साहित्यं, भाषा च 'दर्पणः'। भाषा साहित्यं च 'मानं, निकषः, तुला वा', यदि राष्ट्रस्य तोलनं अभीष्टं। अस्माभिः पूर्वं निवेदितं यत् महाभारत-काले भारतीयानां महापतनं जातं आसीत् सर्वेषु क्षेत्रेषु, अतएव भाषा-साहित्यक्षेत्रेऽपि पतनं जातं। सर्वप्रथमं अस्मिन् काले प्राकृतभाषाणां प्रादुर्भावः जातः भारते, यतोहि अस्य कालस्य पूर्वं

तु केवलं संस्कृतभाषा भारतीयानां एकमात्र 'मातृ-राष्ट्र-राज-शि
भाषा' आसीत्। न्यूनातिन्यूनं इदं तु सत्यं एव, यत् तदा संस्कृतभा
याः जटिलीकरणं आरब्धं। बौद्धकाले संस्कृतभाषा साहित्यं च जटि
तरं जातं, अनन्तरं तु जटिलतमं, यथा अद्य अवलोक्यते। एते
सर्वेभ्यः कारणेभ्यः प्राकृतभाषाणां अभिवृद्धिः, संस्कृतभाषायाः
ह्रासः भारते जातः अर्थात् संस्कृतस्य एव अपभ्रंशरूपाणां बाहु
जातं। बौद्धकाले तु प्राकृतादि-भ्रंश-भाषाः भारते प्रचलिताः
संस्कृतं अपि आसीत् देशे, परन्तु अल्प-संख्याकानां 'मातृभाष
आसीत्। बौद्धकाले प्रायः पंडितानां, विदुषां च भाषा आ
संस्कृतं, सर्वसाधारणजनानां तु प्राकृतभाषाः भाषणादि-भाष
आसन्। स्वतः बुद्धमहाभागेन प्राकृतभाषायां प्रचारः कृतः, यतो
स वस्तुतः वेद-विरोधी जातः आसीत्। तदा कर्मकाण्डस्य प्राब
ल्यं आसीत् तथा यज्ञादिषु जीवादिहिंसा भवतिस्म, सर्वथा वे
विरुद्धा। यदि बुद्ध-महात्मना वेद-पठनस्य स्वतएव कष्टं
भवेत्, तदा तु वयं विश्वर्स्मः, यत् स वेदविरोधी न भवेत्। त
तु बौद्धकालस्य इतिहासः भिन्नः भवेत्। तेन बुद्धमहाभागेन केव
कर्मकाण्डिनां 'आचरणेन' एव भगवतः वेदस्य 'उपेक्षा त्यागः
कृतः'। इदं तु वस्तुतः उचितं नासीत्। वेदे तु कुत्र अपि न
विद्यते, यत् यज्ञादिषु जीव-हिंसा क्रियेत। यदि जनाः कथि
वेदधर्मावलम्बिनोऽपि धर्मविरुद्धं किमपि कुर्युः, तदा अत्र 'भगव
वेदस्य' कः दोषः? यदि कतिपय-बौद्धाः बौद्धसम्प्रदाय-शिक्षा
विरुद्धं किमपि कुर्युः, यथा कुर्वन्ति एव, तदा बौद्ध-सम्प्रदायस्य
बौद्ध सम्प्रदायि-ग्रन्थानां कः दोषः? परन्तु कार्मकाण्डिनां
अन्येषां पाखण्डिनां, वाममार्गिणां केवलं भ्रष्टाचरणं जीवादि

हिंसामयं' धर्मकृत्येषु अवलोक्य वेदाः त्याज्याः, तथा ईश्वरः नास्ति, आत्मा नास्ति, प्रकृतिः अपि नास्ति' इति घोषः तु कस्मैचित् महापुरुषाय अनुचितः, किं पुनः बुद्धमहाभागाय ? सुधारः तु उचितः, परन्तु आत्यन्तिक-नाशः 'सनातनधर्मस्य, ईश्वरधर्मस्य, आदि-धर्मस्य' कथं उचितः ? 'भ्रष्टाचारस्य' केवलं सदाचारः, इति तु उत्तरं नास्ति एकमात्रं, अन्यानि सर्वाणि सत्य-वस्तूनि नित्यानि विहाय ? 'सदाचारस्य' कः आधारः ? स्वत एव ईश्वरेण यः 'आधारः वेदरूपः' देवतासकाशात् सदाचारस्य दत्तः, स कथं परित्यक्तः ? ईश्वरः कः ? इति विषये अस्माभिः पूर्वं लिखितं । तस्मात् स्थानात् एव बौद्धैः ईश्वरस्य ज्ञानं प्राप्तव्यं । महाभारतकालानन्तरं नास्तिक-बौद्ध-सम्प्रदायः भारतस्य घोरतमस्य पतनस्य तथा दासतायाः अपि कारणं जातं इति सत्यं । संस्कृतभाषायाः अपि घोरपतनस्य बौद्धसम्प्रदायः एव कारणं अस्ति । बौद्धैः भगवतां वेदानां, संस्कृतभाषायाः, संस्कृतसाहित्यस्य, संस्कृतसंस्कृतेः' आत्य-न्तिक-नाशः कृतः इति सत्यं विस्मर्तुं नहि शक्यते । यद्यपि अहं मन्ये यत् संस्कृतभाषायाः सर्वथा त्यागः बौद्धानां कृते असम्भवः जातः, तथा बौद्ध-सम्प्रदायस्य बहवः ग्रन्थाः संस्कृते रचिताः, परन्तु तत्र अपि उद्देश्यं । आस्तिक-वेदधर्मस्य नाशः, तथा नास्तिक-बौद्ध-सम्प्रदायस्य अभिवृद्धिः, इत्येव आसीत् ।

## बौद्ध काले संस्कृतदशा

बौद्धकाले संस्कृतस्य स्थाने प्राकृतादि-भ्रंशरूपाणां प्रचारात् प्रायः संस्कृतं 'एका ग्रन्थीया भाषा संवृता' । तदा संस्कृतं वस्तुतः कतिपयजनानां भाषणभाषा आसीत् । अस्मात् कारणात् ये अल्प-संख्याकाः संस्कृतं वदन्तिस्म, तेषां कृते संस्कृतभाषा अवशिष्टा ।

प्राय: ग्रन्थगतं संस्कृतं कृत्रिमरूपेण अत्यन्तं जटिलं जातं बौद्धका
इति निष्कर्ष: वरीवर्ति।

## भ्रष्टीभूता स्मार्त-वर्णाश्रमव्यवस्था पतनकारणं

मनु सम्बन्धे कथ्यते यत्—

'यत् वै किञ्च मनु: अवदत् तत् भेषजं।'

तेन महामुनिना लिख्यते मनुस्मृतौ यत्–

कामात् मातापिता च एनं यदुत्पादयत: मिथ:,
सम्भूतिं तस्य तां विद्यात् यद्योनौ अभिजायते।
आचार्य: तु अस्य यां जातिं विधिवत् वेद पारग:,
उत्पादयति सावित्र्या सा सत्या सा अजरा अमरा।

(मनु० अध्या० २, श्लोक, ४७–४९)

अर्थ: तु स्पष्ट:, यत् शारीरिक-जन्म सर्वेषां मानवानां समान-रूपेण मातापिता-शकाशात् भवति, परन्तु 'ईश्वरीय-वेदज्ञानेन एव मानवस्य 'द्वितीय-जन्म' भवति 'द्विजत्वं' नाम। तद्दिनं 'दुर्दिनं' एव आसीत् यस्मिन् दिने 'जन्म' एव 'वर्गविभाजनकारणं' जातं। 'दुर्दिनं' तदाऽपि आसीत् यदा संस्कृतं एकवर्गस्य हस्ते गतं, अन्येषां वर्गाणां 'प्रमादात्, आलस्यात्, वेद,-पठनपाठन-त्यागात्'। इदं सर्वं सर्वथा 'वेद-विरुद्धं, स्मृति-विरुद्धं' स्वार्थकारणात् सञ्जातं, संचाल्यते च, भारत-दौर्भाग्यसम्वर्द्धनाय, भारतराष्ट्र-नाशाय, आर्यजाते: वेदधर्मस्य च संसारात् उत्पाटनाय।

महाभारतकालानन्तरं यदा 'वर्णाश्रम-व्यवस्था भग्नी-भूता, तदा सा व्यवस्था 'जन्मना जाति पंक्तिषु' परिवार्तिता। आश्रमधर्म-स्य विनष्टे जाते सति 'वर्णा:' स्वस्थाने न स्थिता:, तथा भ्रष्टरूपाणि

प्राचलन् भारतेवर्षे। विविध-वर्गेषु ईर्ष्या-द्वेषादि-कारणात्, स्वस्व-वर्गोन्नतिभावनाकारणात्, 'ब्राह्मण-युगं', 'क्षत्रिय-युगं' प्राचलन्। अद्य 'वैश्य युगं' विद्यते, अनन्तरं 'अवरज-युगं' अपि आगच्छेत् शीघ्रं। परन्तु वर्गाणां परस्परं विरोध-कारणात् ईर्ष्याद्वेषात् देशस्य धर्मस्य, संस्कृतभाषायाः हानिः तु जायते एव। अद्य भारतवर्षे जन्म-जातिपंक्तिविचारं विहाय किमपि कार्यं न भवति कस्मिंश्चित् क्षेत्रे, राजनीतिके, सामाजिके, धार्मिके च। अतः दृढतमस्य राष्ट्रस्य निर्माणं, शत्रूणां सर्वत्रः आक्रमणं वोढुं समर्थं (यथा चीनपाकस्थानस्य) कथं स्यात् इति सूर्यतुल्यं स्पष्टं ? महाभारतस्य परिणामस्वरूपे अयं एव 'दायः' भाग्ये आगतः भारतीयानां। स्मृतिप्रतिपादितमार्गे तु परिवर्तनं भवितुं अर्हति, यदि काऽपि व्यवस्था हानिकरी स्यात्, विशेषतया तदा, यदा, 'समग्रप्रतिपादितधर्मस्य' पालनं भवति एव नहि।

महाभारतकालानन्तरं सर्वप्रथमं भारतेवर्षे मानुषपूजाऽपि विविधरूपेषु प्रारब्धा, ईश्वरस्थाने, वाममार्गिभिः तथा नास्तिकादिभिः उत्तेजिता, या अद्यपर्यन्तं प्रचलति भारते, विश्वे च। सारांशः, यत् भारतीयानां चरित्रं सर्वतः सर्वथा च भ्रष्टं जातं, तथा तैः पूर्णतया वेद-विरुद्ध-मार्गः गृहीतः। वेदादिशास्त्राणां पठनपाठनं प्रायः परित्यक्तं, तथा प्राकृतादि-भाषासु रचित-ग्रन्थाः, वेद-विरुद्धाः इति स्वीकृताः। अनेन मार्गेण संस्कृतभाषा प्रायः विनष्टा भारतेवर्षे, तथा तस्याः साहित्यं अपि।

## वाममार्गिणां नास्तिकानां कुकृत्यानि

वाममार्गिभिः नास्तिकैः एतादृशः वेदविरुद्धप्रचारः लेखादिभिः भाषणादिभिः प्रारब्धः चार्वाकप्रमुखैः यथा—

'त्रयः वेदस्य कर्तारः भण्ड-धूर्त-पिशाचकाः'
यावत् जीवेत् सुखं जीवेत्, ऋणंकृत्वा घृतं पिबेत्,
भस्मीभूतस्य देहस्य, पुनरागमनं कुतः ।

( इति चारवाक-मतं )

वेदादिशास्त्राणां कूटमिश्रणेन दुष्टीकरणं तेषां प्रधानकार्य आसीत्, येन ते वाममार्गिणः शास्त्रेषु कूटमिश्रणैः सिद्धी-कुर्युः यत् वेदादिषु अपि तेषां वाममार्गस्य प्रमाणानि विद्यन्ते। एतैः वाममार्गिभिः पंचमकाराणां यथा मद्य-मांस-मैथुन-मत्स्य-मुद्राणां प्रचारः कृतः तथा मनुस्मृत्यादौ क्षेपकाः दत्ताः यथा—

मधुपर्के च यज्ञे च पितृदैवतकर्मणि,
अत्रैव पशवः हिंस्याः न अन्यत्र इति अब्रवीत् मनुः।

इत्यादि (मनु० अध्या० ५ श्लो० ४१)

संक्षेपे महाभारतस्य उत्तर-कालः तु सर्वथा अन्धकारमय अस्ति। तस्मिन् सम्बन्धे तु किमति न लिख्येत चेत्, तदा शोभनं स्यात्। अस्य कालस्य इतिहासलेखने तु वस्तुतः मम लेखनी 'कुण्ठिता' जायते, मम मनः मष्तिष्कं च भ्रमति इव, या दशा वीर-अर्जुनस्य जाताऽऽसीत्। पार्थस्य शब्देषु—

गांडीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते,
न च शक्नोमि अवास्थातुं भ्रमति इव च मे मनः।

( गीता, अध्या० १ श्लो० ३० )

मम लेखनी हस्तात् स्रंसते, त्वक् च परिदह्यते, न च शक्नोमि लेखितुं, भ्रमति इव च मे मनः। तथापि 'कर्त्तव्य-पालने' यथा गाण्डीवं अर्जुनेन प्रयुक्तं आसीत् भगवतः कृष्णस्य प्रबोधितेन, तथैव अहं अपि, लेखनी-संचालनं करोमि ईश्वर-प्रेरणया, येन

अहं कर्तव्य-विमुखः न भवेयं । अयं उत्तरकालः तु वस्तुतः अन्धकारमयः, यत्र तत्र विद्युत्प्रकाशं विहाय, यथा आदिशंकराचार्यस्य कार्य-कलापः वेद-धर्म-पुनस्संस्थापनाय । यदाकदा अस्मिन् अज्ञानान्धकार-महारात्रौ चन्द्रादयः प्रकाशंगताः, परन्तु भूयोऽपि अन्धकार-साम्राज्यं जातं । अयं इतिहासः तु वस्तुतः विरोधि-सम्प्रदायानां, वाममार्गिणां, नास्तिकानां, अघोरिणां, ईश्वरीय-वेदधर्मविरोधिनां विद्यते । प्रायः हिंसा, अन्यायः, अत्याचारः, कदाचारः, व्यभिचारः एतेषां सर्वेषां न्यूनाधिकमात्रानां 'एकमात्रधर्मः' आसीत् । यज्ञादिषु अपि 'जीवहिंसा' भवतिस्म । एतस्मिन् काले अस्माकं 'वेदाः, वेद धर्मश्च' निन्दितः, भ्रष्टीकृतः । प्रायः अस्माकं सर्वाणि शास्त्राणि, धर्मपुस्तकानि, अन्यत् संस्कृत-साहित्यं च 'क्षेपकादिभिः, परस्पर विरोधि-कथनैः कूटलेखैश्च' दूषितं । तदा तु काऽपि व्यवस्था नासीत् संरक्षणस्य, पुस्तक-मुद्रणादि-सौविध्यस्य । कथं वेदाः भ्रष्टी-कृताः एतैः अन्यैः ऋषि-महर्षि-नाम्नि, विस्तृतरूपेण अस्माभिः 'वेदः' इति भागे दास्यते । वेदानां व्याख्या-ग्रन्थाः ब्राह्मणादयः अपि कथं भ्रष्टी-कृताः इत्यपि तत्र दास्यते ।

## सर्वोपरि-संस्कृतपतनस्य कारणं वेद-त्यागः

यद्यपि वेदविषये सर्वं आवश्यकं 'वेद-भागे' दास्यते, तथापि संक्षेपे महाभारतयुद्धानन्तरं संस्कृतपतनस्य प्रधानकारणं अत्र दीयते । इदं कारणं न दीयेत चेत्, तदा अस्य अध्यायस्य एका प्रधान-न्यूनता गण्येत विद्वद्भिः, विचारशीलैः, तथा संस्कृतपतनेतिहासज्ञातृभिः । अतएव तस्य अपि उल्लेखः क्रियते ।

महाभारतयुद्धानन्तरं वेदपठनपाठनस्य सर्वा व्यवस्था भग्नीभूता, अतः लोकाः अपि भ्रष्टाः जाताः । तदानीतनः समाजः तु पतितः

भ्रष्टः वा आसीत् एव । भ्रष्टोऽपि समाजः दुष्कृत्यानां प्रमाणं स्व-धर्मग्रन्थेषु वाञ्छति, अतः प्रायः सदर्थस्य अनर्थः क्रियते, कूटमिश्रणानि क्रियन्ते । यतोहि स्वधर्मग्रन्थानां नाम्नि दुष्टकार्याणि अपि क्रियन्ते भ्रष्ट-समाजेन, अतएव समाजस्य सर्वे दोषाः धर्मग्रन्थेषु आरोप्यन्ते । ईश्वरः तु शुद्धः निर्भ्रांतः, अतः तस्य ज्ञानं 'वेदः नाम' निर्भ्रान्तः, परन्तु समाजस्य सर्वे दोषाः 'वेदे' आरोपिताः एतैः भ्रष्टसामाजिकैः ।

वेदज्ञानस्य अभावात् वेदविरुद्धमार्गाः प्रचालिताः जनैः अस्यां दशायां वर्णाश्रमव्यवस्था, वेदज्ञानाश्रिता सर्वथा भग्नीभूता शारीरिकजन्म एव मातापितासकाशात् 'द्विजत्वचिह्न' अभवत् 'वेद-ज्ञानाधारेद्विजत्वं' इति स्थाने । एतादृशैः पाखंडिभिः वेदज्ञान विरहितैः बहूनां कृते वेदस्य पठनपाठनं अपि निषिद्धं यथा—

'स्त्रीशूद्रद्विजबन्धूनां, त्रयी न श्रुतिगोचरा'

(भागवत पुराणं १।४।२५)

'स्त्रीशूद्रौ न अधीयाताम्'

वेदान्तदर्शनस्य १।३।३८। सूत्रस्य व्याख्या आद्यशङ्कराचार्य नाम्नि विद्यते (वयं विश्वस्मः, यत् आद्यशङ्कराचार्येण एतादृशी व्याख्या नहि कृता ।) अतः अत्र महाखेदेन अस्माभिः दीयते विद्वद्भिः विचारः कार्य्यः इति :—

'अथ अस्य ( शूद्रस्य ) वेदं उपश्रण्वतः

त्रपुजतुभ्यां श्रोत्रपरिपूर्णं, उच्चारणे जिह्वाछेदः,

धारणे हृदयविदारणं ( वधः कार्यः ) इत्यादि' ।

वयं मन्यामहे, यत् संसारे मानवेन मानवसमाजैः राष्ट्रैः वा मानवानां स्वजातीयानां ( यत्र पशुभिः अपि स्वजातीयपशुभिः सा

नहि क्रियते) उपरि घोरान्यायाः कृताः, यस्य लोकेतिहासः ज्वलत्प्रमाणं, परन्तु एतादृशः अन्यायः सर्वान् अन्यान् अतिशेते, यत्र ज्ञानमार्गः विशेषतया ईश्वरीयवेदज्ञानं वार्यते अन्येषां मानवानां कृते। वयं पठामः यत् यूरोपादिमहाद्वीपे वैज्ञानिकाः अग्नौ प्रज्वालिताः, यदि तैः किमपि कथित-बाइबिल-सम्प्रदाय-विरुद्धं कथितं यथा—

'पृथ्वी सूर्यमंडलस्य सर्वतः भ्रमणं करोति इत्यादि।'

इयं स्थितिः प्रायः १६ शताब्दीं यावत्, ऊर्ध्वं अपि प्रचलिता। अनन्तरं कुरान-सम्प्रदायस्य प्रादुर्भावः जातः बाइबिलाधारितः। केनापि वैज्ञानिकेन विदुषा वा किमपि कुरानविरुद्धं कथितं, तस्य वधः जातः। भारतस्य मुस्लिमशासनकालोऽपि अस्य प्रमाणं परन्तु मनुष्यस्वभावः प्रायः समानः सर्वस्मिन् लोके। अन्यायः घोरतमः अपि सर्वत्र संसारे जातः उच्च-नीच, धनिक-रंक, स्वधर्मीविधर्मीत्यादि-विचारान् आधारीकृत्य, परन्तु अस्माकं विचारे स अन्यायः सर्वान् अन्यान् अतिशेते, यत्र मानवेन मानवस्य ज्ञानमार्गः वार्यते। न इयं प्रहसनस्य वार्ता यदा वयं भारतस्य विषये इदं सर्वं लिखामः, यतोहि प्रायः सर्वेषां देशानां इतिहासः ईदृशः, यदि निष्पक्षतया पठ्येत। वयं तु अवलोकयामः यत्—

'मानवेन, मानवेन सह, कः अन्यायः
न कृतः लोके, कथित-बुद्धियुक्तेन ज्ञानवता ?'

अतः अस्माकं ऋषि-मुनिभिः वारं २ कथितं यत्—

'असतः मा सद्गमय'

'तमसः मा ज्योतिः गमय'



'मृत्योः मा अमृतं गमय'

सत्यं वद, धर्मं चर, सत्यात् न प्रमदितव्यं, धर्मात् न प्रमदितव्
स्वाध्यायात् न प्रमदितव्यं इत्यादि।

तथापि मानवः सत्यं नहि वदति, धर्मं नहि चरति, त
वेदान् नहि पठति। वैदिकसाहित्ये 'स्वाध्यायः' अस्य अर्थः भवं
वेदस्य पठनपाठनं अभ्यासश्च यथा—

स्वाध्यायेन व्रतैः होमैः त्रिविद्येन इज्यया सुतैः,
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।

(मनु० अध्या० २ श्लो० २८)

व्याख्याः—अत्र 'स्वाध्यायेन' इति शब्दस्य अर्थः 'वे
ध्यानेन' इति भवति। एवमेव द्विजानां वेदस्य अध्ययन कर्तव
यतोहि वेदज्ञानेन एव (गुरु मुखात् सरहस्येन) गुरुकुलावि
'द्विजत्वं' प्राप्नोति ब्रह्मचारी अन्तेवासी। अद्य ब्रह्मचर्याश्रमः सर्व
नष्टः, अतएव अन्ये आश्रमाः स्वस्थाने नहि विद्यन्ते, तथै
वर्णाः अपि। अस्मिन् श्लोके दीयते, यत् कथं इयं तनुः (शरी
'ब्राह्मी' इति क्रियते, वेदपठनेन, वेदज्ञानेन। मनुस्मृतौ अन
विद्यते यत्—

यः न अधीत्य द्विजः वेदः अन्यत्र कुरुते श्रमं,
स जीवन् एव 'शूद्रत्वं' आशु गच्छति सान्वयः।

(मनु० अध्या० २, श्लो० १

'शूद्रत्वं' नाम वेदज्ञानविहीनता इति भवति। एकस्मि
शारीरिक-जन्मनि द्वितीयं शारीरिक-जन्म भवितुं नहि अर्ह
मरणेन विना। अतः 'द्विजत्वं' द्वितीयजन्म, अस्य अर्थः भव
वेदज्ञानेन एव मानवस्य द्वितीय-जन्म 'द्विजत्वं' नाम।
संस्कृत कुत्र अपि नास्ति भारते, अतः अयं दुष्परिणामः।

## तदा क्व वेदाः वर्णाश्रमधर्माश्च ?

वेदाः संस्कृतभाषायां विद्यन्ते। यदि अद्य जनेषु कथित-द्विजेषु संस्कृतज्ञानं अपि नास्ति, तदा कथं तेषु वेद-ज्ञानं स्यात्, येन 'द्विजत्वं' वस्तुतः उत्पद्येत वेदधर्मावलम्बिषु ? अतः उचितं यत् इदानीं 'वर्णाश्रम-व्यवस्था' स्थगिता कृता स्यात् न्यूनातिन्यूनं तावत्कालपर्यन्तं यावत् सर्वेषु वेदधर्मावलम्बिषु स्त्री-पुरुषेषु संस्कृतज्ञानं न जायते, येन ते वेदानां पठने, अर्थज्ञाने च समर्थाः भवेयुः। वस्तुतः आर्यराज्यं अपि आवश्यकं वर्णाश्रमव्यवस्था–संचालने। जन्मतः तु वर्णाः भवितुं नहि अर्हन्ति शास्त्रानुसारं, परन्तु 'स्वेच्छाचारितया' किं अपि कर्तुं शक्यते मानवेन 'निहित-स्वार्थपरेण।'

## यावत् स्त्रीषु, मातृषु संस्कृतज्ञानं नास्ति

तावत् भूयोऽपि भारतेवर्षे संस्कृतं मातृभाषा भवितुं नहि अर्हति, यथा प्राचीनकाले आसीत्, यावत् स्त्रियः संस्कृतज्ञान-विहीनाः सन्ति। यस्याः भाषायाः पानं मातुः दुग्धेन सह क्रियते, सा मातृभाषा भवति। यदि अस्माकं गृहेषु संस्कृतस्य प्रवेशः न स्यात्, तथा अस्माकं मातॄणां सकाशात् अस्माकं बालकाः बालिकाः, संस्कृतं न आप्नुयुः, मातृभाषारूपेण, तावत् संस्कृतस्य भूयोऽपि सार्वत्रिकः प्रचारः भारते असम्भवः, क्व विश्वे। संस्कृतेन विना वेद ज्ञानं असम्भवं, यद्यपि वेदज्ञानाय लौकिक-संस्कृत-ज्ञानं पर्याप्तं नास्ति। वेदज्ञानार्थं इदं आवश्यकं यथा—

'छन्दः पादौ तु वेदस्य, हस्तौ कल्पः अथ पठ्यते,
ज्योतिषां अयनं चक्षुः, निरुक्तं श्रोत्रं उच्यते,

शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतं,
तस्मात् साङ्गं अधीत्य एव ब्रह्मलोके महीयते।

( पा० शि० ४१-४२ )

अर्थज्ञानेन बिना वेदस्य पठनं, वेदेन स्वतएव, तथा निरुक्त-
कारेण यास्कमुनिना निषिद्धं यथा—

ऋचः अक्षरे परमे व्योमन्, यस्मिन् देवाः अधिविश्वे निषेदुः
यः तत् न वेद किं ऋचा करिष्यति, ये इत्तत् विदुः इमे समासते

( ऋ० मं० १, सूक्त १६४ मंत्र ३९ )

यास्कमुनेः निरुक्तकारस्य व्याख्या इयं विद्यतेः—

'स्थाणुः अयं भारहारः किल अभूत् अधीत्य वेदं न विजा-
नाति यः अर्थं। यः अर्थज्ञः इत्सकलं भद्रं अश्नुते नाकं एति ज्ञान-
विधूतपाप्मा । यत् अगृहीतं अविज्ञातं निगदेन एव शब्द्यते
अननग्नौ इव शुष्कैधः न तत् प्रज्वलति कर्हिचित्।

( निरुक्त० अ० १, खं० १८ )

वेदस्य पठनपाठनं अर्थज्ञानसहितं तु सर्वथा नष्टं भारतवर्षे
ये केचित् कथित-वेदज्ञाः कथ्यन्ते देशे, ते प्रायः स्वरसहित-
वेदस्य पाठकाः एव, येषु अर्थज्ञानयोग्यता तु भवति एव नहि
अतः ते सर्वे अंगुलिगण्याः स्वरसहित-वेदपाठकाः कथित-वेदज्ञाः
वैदिकाः 'भारहाराः इव' वेदमन्त्रानुसारं यास्कव्याख्यानुसारं
विद्यन्ते। एतेषां अपि संख्या सर्वस्मिन् भारते शततः अधिका
न स्यात्। वेदार्थज्ञातारः वेदज्ञाः तु विरलाः एव भारते प्रायः
द्वित्रसंख्याकाः। अस्यां दशायां वेदधर्मः तथा वेदज्ञान-प्राप्त्यर्थं प्रच-
लिता स्मार्तवर्णाश्रमव्यवस्था कुत्र तिष्ठेत्? अतः वर्णाश्रमव्यव-
स्थायाः तावत्पर्यन्तं स्थगनं उचितं, यावत् अस्मासु सर्वेषु संस्कृ-

स्य, वेदस्य ज्ञानं न जायते, अन्यथा 'द्विजत्वं' एकं विडम्बनामात्रं स्यात् यथा—

उत्क्षिप्य टिट्टिभः पादौ आस्ते भङ्गभयात दिवः।
स्वचित्तकल्पितः गर्वः कस्य न अत्र अपि विद्यते।

(पंचतंत्र)

स्वेच्छाचारितया तु किमपि केनाऽपि मानवेन समाजेन वा कर्त्तुं शक्यते, परन्तु इदं 'शास्त्रानुसारं, वेदानुसारं' न स्यात्। अनेन भारते एकं 'सुदृढ़ं राष्ट्रं' अपि कदापि न स्यात्, यदि भारतीयाः जन्माधारेण उच्चनीचविचारगताः परस्परं ईर्ष्या-द्वेषान्विताः विद्यन्ते, परस्परं युद्धन्ते च।

यदि अस्मासु भारतीयेषु संस्कृतस्य ज्ञानं स्यात्, तथा अनन्तरं वेदशास्त्राणां ज्ञानं स्यात्, तदा अस्माकं सर्वे दोषाः दूरीभवेयुः, तथा भारतीयसमाजः भारतीयराष्ट्रं च एतादृशं जायेत यथा—

सेनापत्यं च राज्यं च दण्डनेतृत्वं एव च।
सर्वलोकाधिपत्यं च, वेदशास्त्रविद् अर्हति॥

(मनु० अध्या० १२ श्लो० १००)

अयं निष्पक्षेतिहासः संस्कृतपतनस्य तथा वेदज्ञानह्रासस्य, येन अस्माकं भारतीयसमाजस्य तथा व्यक्तीनां चरित्रादेः घोरतमं पतनं जातं, यथा अद्य अवलोक्यते। महाभारतानन्तरं अद्ययावत् अयं एव इतिहासः कारणानि च संस्कृतपतनस्य तथा वेदादिशास्त्रपतनस्य। अस्मिन् काले शास्त्राणि अपि भ्रष्टी-कृतानि, इति सत्यं पूर्वोक्तवेदविरुद्धमार्गिभिः।

वेदान् विहाय अन्यानि शास्त्राणि तथा प्रायः समस्तसंस्कृत-

साहित्यं कथं दुष्टीकृतं नष्टीकृतं च, तत्सर्वं कस्मिंश्चित् आगामि अध्याये दास्यते, यत्र संस्कृतसाहित्यस्य शोधविषये असा लेखिष्यते।

संस्कृतभाषायाः संस्कृतसाहित्यस्य दुष्टीकरणं (संस्कृतस्य भ्रं भाषाणां, तासु एव दुष्टसाहित्यस्य लेखनादिकारणात) महाभार कालानन्तरं यत् वाममार्गिभिः आरब्धं, तत् वेगेन बौद्धशासनका बौद्धगते भारते, प्राचलत्, अद्य पूर्णतां प्राप्तवान्। बौद्धसम्प्रदाय कारणात् बौद्धगतं भारतं विदेशीयाक्रामकाणां क्रीडास्थलं संवृ तथा अन्ते भारतं प्रायः द्विसहस्रवर्षाणि यावत् दासतापाशे निबद्धं

विदेशीय-मुस्लिम-शासकैः आक्रामकैः किं कृतं इति इतिहा सर्वेषां विदुषां प्रायः ज्ञातवृत्तः। एतैः आक्रामकैः लुण्ठकैः केवलं भारतीयधन-जन-सम्पत्तेः नाशः कृतः, अपितु धर्मे आघातः कृतः, तथा विपुलसंस्कृतसाहित्यं नष्टीकृतं। सहस्रा मन्दिराणि त्रुटितानि तथा सहस्रशः संस्कृतपुस्तकालयाः, ध साहित्य-विज्ञान-कलादिविषयकग्रन्थयुक्ताः, अग्नौ मासान् याव प्रज्वालिताः। मुस्लिमशासनकाले कतिपय-सज्जन-शासकाः अ आसन्, यैः भारतीयानां तोषाय तोष-नीतेः अवलम्बनं कृतं य अकबरादिभिः। ये भारतीयेषु देशहितैषिणः स्वातन्त्र्य-प्रियाः आस तैः एतस्मिन् दीर्घकाले स्वातन्त्र्य-युद्धं निरन्तरं सञ्चालितं, य अन्तः मुस्लिम-विदेशीयशासनस्य समूलोत्पाटने अभवत्, त अवशिष्टाः मुसल्मानाः भारतीयाः जाताः, यैः भारतं 'मा भूमिः' इति स्वीकृतं।

परन्तु भारत-दौर्भाग्यस्य इदानीं अपि अन्तः न अभव संस्कृतभाषायाः संस्कृतसाहित्यस्य नष्टी-भूतत्वात्, भारतै

वस्तुतः विनष्टं, अतः विभिन्नभागेषु विभाजित-भारतं, क्षेत्रीयभाषादिगतं, क्षेत्रीयभक्तियुक्तं, भूयोऽपि आंग्लादिशासकानां दासतापाशे निवद्धं, यस्य अन्तः १६४७ ई० वत्सरे अभवत्। आंग्लादिशासनकालेऽपि वहुसंस्कृत-साहित्यं विनष्टं, भारतात् बहिरपि नीतं, तथा आंग्लभाषायाः समग्रभारतस्य राष्ट्र-राज-शिक्षाभाषा-कारणात्, अवशिष्टं संस्कृतं तस्य साहित्यं च उपेक्षा-गर्ते अपतत्, सर्वथा ग्रन्थगतं जातं। अनेन मार्गेण भारतगौरवस्य, इतिहासस्य, भारतीयसंस्कृतेः मूलस्य संस्कृतस्य नष्टे जाते सति भारतस्य 'सर्वस्वं' नष्टं इति निर्विवाद-तथ्यं।

प्रधानमन्त्रिणा श्री जवाहरलालमहाभागेन संस्कृतभाषायाः तथा संस्कृतसाहित्यस्य महत्व-विषये सत्यं कथ्यते यत्

'यदि मत्तः पृष्टं स्यात् यत् भारतस्य
महीयान् निधिः कः ? तर्हि अहं वदिष्यामि
संस्कृतभाषा, तस्याः साहित्यं च।
संस्कृतभाषा अस्य देशस्य एका सजीव-परम्परा।
अतिखिद्यामहे वयं, यत् संस्कृतस्य गुणगाथां
गायन्तः अपि, तस्य मौखिकीं सेवां कुर्मः।' इत्यादि

परन्तु कष्टं! कष्टं! यत् अनेन प्रजातन्त्रीय-अधिनायकेन, यस्य वाक्यं भारताय 'वेदवाक्यं' इव तिष्ठति, किमपि उल्लेखनीयं नहि क्रियते, नहि स्व-सूक्ष्मदृष्ट्या तीक्ष्णबुद्ध्या अवलोक्यते, यत् संस्कृतेन एव भारत-गौरवं, भारतीयसंस्कृतिः, पञ्चशीलादिकं स्थातुं शक्नोति, तथा संस्कृतेन एव क्षेत्रीयभाषाणां समाधानं कर्त्तुं शक्यते, न अन्यथा। यस्मिन् भारते संस्कृत-सदृशी प्राचीनसमा समृद्धतमा भाषा स्यात्, तत्र 'राष्ट्र-राज-शिक्षाभाषात्वं'

इति चित्रं। संस्कृतं भारतस्य मातृ-राष्ट्र-राज-शिक्षाभाषा आसी
अनादिकालतः महाभारतपर्यन्तं, कथं न स्यात् भूयोऽपि, येन गृ
युद्धं, क्षेत्रीयभाषाधारणेन, समाप्तं स्यात्, तथा भारत भाग्यो
भवेत्। शासकैः राजनीतिज्ञैः, प्रान्तवादिभिः, विद्वद्भिः
गम्भीरतया विचारणीयं। एतैः सर्वैः भूयोऽपि 'महाभारतं यु
आनीयते देशे इति दुर्भाग्यं।

चतुर्थाध्याये अस्माभिः, दीयते, यत् ग्रन्थगत-मृतप्रा
संस्कृतस्य कथं उद्धारः ? के सुधाराः आवश्यकाः ?

---

# चतुर्थः अध्यायः

## ग्रन्थगतस्य मृतप्रायस्य संस्कृतस्य कथं उद्धारः ? के सुधाराः आवश्यकाः ?

यद्यपि भारतीय एवमेव लोकाय संस्कृतभाषायाः संस्कृतसाहित्यस्य च आवश्यकता विद्यते, येन अभ्युदय-निःश्रेयस-सिद्धिः स्यात्, परन्तु प्रश्नः तु अयं एव, यत् प्रथमं ग्रन्थगतस्य मृतप्रायस्य संस्कृतस्य कथं उद्धारः भवेत ? इदं सर्वथा सत्यं, यत् संस्कृतलिपिसदृशी, संस्कृतभाषासदृशी, स्वराधारिता वैज्ञानिकी च अन्या लिपिः भाषा च संसारे नास्ति, तथा सा लिपिः सा भाषा च संसारस्य लिपिः, भाषा च भवितुं अर्हति पूर्ववत्। संस्कृतव्याकरणं अद्वितीयं पूर्णं च इति विश्वविश्रुतं विद्यते। संस्कृत–साहित्यं अपि अद्वितीयं ज्ञानविज्ञानपूर्णं अर्थात् अभ्युदय-निःश्रेयसनिधानं अस्ति इति लोकविदितं। संस्कृतसाहित्ये एव एतादृशानि त्रिकालसत्यानि विद्यन्ते, यैः द्विविश्वयुद्धजर्जरितस्य भावितृतीययुद्धज्वरपीडितस्य विश्वस्य रोगशान्तिः, चिरशान्तिः च भवितुं अर्हति, परन्तु यावत् संस्कृतभाषा तस्याः साहित्यं च स्वस्थं, प्रकृतिगतं नास्ति, तावत् लोकोद्धारः असम्भवः। गतेषु अध्यायेषु अस्माभिः प्राचीनभारते विश्वे च संस्कृतस्य, संस्कृतसाहित्यस्य महत्वं, स्थानं च दत्तं, एवमेव एतेषां पतनस्य इतिहासः कारणानि च दत्तानि। प्रसङ्गानुसारं द्वितीयाध्याये इदं अपि दत्तं अस्ति, यत् संस्कृतलिपेः किं महत्वं तथा तस्यां के सुधाराः आवश्यकाः ?

अस्मिन् अध्याये अस्माभिः दीयते, यत् संस्कृतभाषायाः साहित्यस्य च कथं उद्धारः स्यात्, यतोहि तत्सर्वं अद्य ग्रन्थगतं मृतप्रायं च विद्यते ?

## उत्थानपतनं एकः नैसर्गिकः नियमः

गतपृष्ठेषु अस्माभिः इदं अपि स्पष्टीकृतं विविधैतिहासिक-प्रमाणैः यत् परिवर्तनि संसारे उत्थानपतनं एकः नैसर्गिकः नियमः, यः मानव-जीवनस्य सर्वेषु क्षेत्रेषु स्वकार्यं कर्त्तुं अवलोक्यते। यथा दिनं पुनः रात्रिः, रात्रिः पुनः दिनं इति चक्रवत् भ्रमत् अवलोक्यते केनाऽपि ज्ञानवता मानवेन, तथैव मानवस्य कस्यचित् समाजस्य राष्ट्रस्य वा उत्थानं पुनः पतनं, पतनं पुनः उत्थानं चक्रवत् सदैव अवलोक्यते संसारे। अयं एव नियमः मानवानां भाषायां साहित्ये च अपि लगति। कोऽपि अपवादः नास्ति संसारे अस्य नियमस्य, यतोहि अयं संसारः परिवर्तनशीलः। 'संसरति अस्मात्' इति संसारः 'गच्छति अस्मात्' इति जगत्, अतः क्षणे क्षणे लोके परिवर्तनं तु सिद्धं एव, अभिवृद्धये, अवनतये वा। कदाचित् स्वत एव मानवः एकः अपवादः, यदा तस्य मानवस्य मोक्षः स्यात्, अपितु समाजस्य राष्ट्रस्य क्व सामूहिकमोक्षः आत्मनि जगति ? भारतीयानां पतनकालः प्रायः द्विसहस्रवर्षात्मकः, उत्थानकालस्य महासागरे बिन्दुवत्। अतएव भारतीयैः नराश्यैः न भाव्यं। भूयोऽपि तेषां भाग्योदयः स्यात् इति सुनिश्चितं।

परन्तु इदं अपि सत्यं, यत् यादृशं उच्चं उत्थानं तादृशं निम्नं पतनं। यदि भारतं प्राचीनकाले उन्नतेः उच्चतमं शिखरं आप्तवान्, तदा अवनतेः निम्नतमं गर्तं अपि प्राप्तवान्। एतादृशी हीनावस्था कस्यचित् अपि देशस्य नहि विद्यते कदाचित्, यादृशी भारतस्य

विद्यते। महाखेदस्य वार्ता इयं, यतोहि भारतं मूर्धन्यतां भजतिस्म। भारतस्य अर्थात् भारतीयानां अयं स्वभावः यत् उन्नतेः चरमां सीमां भजन्ते, उत अवनतेः चरमां सीमां भजन्ते। मध्यमार्गः अवलम्ब्यते एव नहि देशेन आरम्भतः। कश्चित् विशेषः विद्यते भारतस्य उन्नतिकाले अवनतिकाले च। इदं एव अन्तरं भारते अन्येषु देशेषु। अयं भारतेतिहासः।

अतः भारतस्य पतनेतिहासे संस्कृतभाषायाः संस्कृतसाहित्यस्य पतनं अपि पराकाष्ठां गतं, येन उद्धारः प्रायः असम्भवः इव प्रतिभाति। अस्यां दशायां किं करणीयं भारतीयैः इति प्रश्नः पुरतः उपतिष्ठते।

## 'ग्रन्थगतं मृतप्रायं संस्कृतं' अस्य कोऽर्थः ?

अस्य अयं एव अर्थः, यत् कुत्र अपि भारतेवर्षे 'अमरभारती' संस्कृतं भारतीयानां मातृभाषा, भाषणादिभाषा नास्ति इदानीं। जीवित भाषा सा एव कथ्यते, या भाष्यते, दैनिकव्यवहारे आनीयते तद्भाषाभाषिभिः। इदं सत्यं यत् यत्र तत्र, सर्वस्मिन् भारते संस्कृतं पठ्यते, परन्तु कण्ठस्य उपरि तु आगच्छति एव नहि, भाष्यते एव नहि संस्कृतज्ञैः, येषु केचित् कथित-महापण्डिताः अपि विद्यन्ते। परन्तु कः उपयोगः संस्कृतपठनस्य यदि संस्कृतज्ञेषु अपि व्यवहारे नहि आनीयते ? स्वगृहेभ्यः तु सर्वथा बहिष्क्रियते संस्कृतं भारतीयैः, यतोहि वारितं संस्कृत-पठन-पाठनं स्त्रीभ्यः यथा—

स्त्रीशूद्रौ न अधीयाताम्'

• 'स्त्री शूद्रद्विजबन्धूनां, त्रयी न श्रुतिगोचरा'

धर्मप्रधानं भारतं, अतः यदि स्त्रीशूद्रद्विजबन्धुभ्यः वेदादिशास्त्रपठनस्य वारयिता, तदा का स्त्री माता वा संस्कृतं पठेत् ? कः लाभः

संस्कृतपठने तासां, यदि तासां वेदपठने अधिकारः नास्ति, यःवे
अखिलः 'धर्ममूलं'। यथा पुरुषाणां कृते धर्मस्य आवश्यकता तथै
स्त्रीणां कृतेऽपि विद्यते। किं स्त्रीभ्यः धर्मस्य आवश्यकता उपयो-
गिता वा नास्ति? 'वेदः' धर्मस्य आदिस्रोतः, आदिकारणं आदि
प्रमाणं विद्यते। वेदे, ईश्वरीयज्ञाने, मानवाधिकारः, 'जन्मसिद्धा
धिकारः', कोऽपि पुरुषः स्यात् स्त्री वा इति व्यर्थः भेदः। अत
भारतीयस्त्रीसमाजतः संस्कृतज्ञानं प्रायः सर्वथा पलायितं। परि-
णामे, अद्य कस्यचित् अपि भारतीयस्य मातृभाषा नास्ति संस्कृत
यथा पूर्वं सर्वेषां आसीत्। यावत् भूयोऽपि संस्कृतं भारतस्य स्त्रीण
भाषा नहि जायते तावत् कथं तत् मातृभाषा भाषणादिभाषा स्या
भारते? अतएव संस्कृतज्ञैः भारतीयैः स्वमातृषु, स्वसृषु संस्कृतज्ञान
देयं, येन संस्कृतस्य उन्नतिः सम्भवेत्।

वेदेषु बह्वीनां स्त्रीणां नामानि पठ्यन्ते, याः वेदज्ञानसम्पन्ना
आसन् अर्थात् यासां विशेषज्ञानं आसीत्। परन्तु यदि पुरुषै
स्वार्थकारणात् मिथ्या गर्वकारणात् वा वेदादिपठनं स्त्रीभ्यः वारि
तदा तेषु अपि अद्य वेदज्ञानं सरहस्यं नहिं अवलोक्यते। यदा धर्म
प्रेरणा नष्टीभूता या वेद-पठनेन मिलतिस्म, तदा संस्कृतपठनपा
अपि अवरुद्धं मातृणां भारतीयस्त्रीणां।

अस्मात् कारणात् संस्कृतं, महासमृद्धं मोहन्नतं अपि
भारतीयैः उपेक्षितं, संस्कृतग्रन्थेषु जीवितं विद्यते, अतः ग्रन्था
मृतप्रायं संस्कृतं इति तथ्यं। ग्रन्थगतं संस्कृतं अव्यवहारात् कुण्ठि
विद्यते यथा दीर्घकालपर्यन्तं अप्रयुक्तं शस्त्रं कुण्ठितं जायते, ब
बद्धजलं दुर्गन्धादियुतं जायते। निरन्तरप्रयोगेण कस्यचित् भाषा
उन्नतिः भवति यथा वहं जलं निर्मलं शुद्धं च भवति इति प्रत्यक्षं।

प्रथमं भारतीयस्त्रीणां अपि भाषा संस्कृतं आसीत् इति इति-हाससिद्धं, परन्तु शनैः शनैः वेदज्ञान-संस्कृतज्ञानराहित्यात्, ताभ्यः वेद-संस्कृत-पठनपाठनवारणात्, मातृष संस्कृतभाषा सर्वास्मिन् भारते, विश्वे च, प्राकृतभाषासु परिवर्तिता। अयं एव इतिहासः भारते विश्वे च विविध-प्राकृतभाषाणां प्रादुर्भावस्य। प्राकृतभाषा-शब्दस्य अर्थः एव विद्यते, 'संस्कृतभाषायाः भ्रंशरूपं' इति। अन्यः अर्थः नास्ति अस्य। संस्कृतकोषः केनाऽपि संशयापन्नेन अवलोकनीयः भ्रमस्य दूरीकरणाय। परन्तु कतिपयजनाः कथयन्ति, प्रायः नास्तिकाः विकासवादिनः, यत् सर्वप्रथमं मानवस्य भाषा प्राकृतभाषा आसीत् व्याकरणरहिता असंबद्धा, या शनैः शनैः संस्कृतव्याकरणादिनिर्माणेन 'संस्कृतभाषा' नाम जाता। परन्तु संस्कृतभाषा तु आदिभाषा विद्यते, या सृष्टिकालारम्भे प्रादुर्भूता वेदभाषारूपे। तदा कथ सृष्टिरचनाकालतः अपि पूर्वं काचित् प्राकृत-भाषा स्यात? यदा सृष्टिः उत्पन्ना, तस्मिन् काले एव वेद-भाषा उत्पन्ना संस्कृत नाम। अतः प्राकृतभाषायाः पूर्वस्थितिः एका मिथ्याकल्पना, वन्ध्या पुत्रवत्, आकाशकुसुमवत्।

स्पष्टं, यत् यावत् अस्माकं मातृवर्गे संस्कृतज्ञानं न जायते पूर्ववत्, तावत् संस्कृतं मातृभाषा कदापि न स्यात् भारतीयानां। मातुः दुग्धपानेन सह संस्कृतभाषापानं आवश्यकं मातृभाषात्वाय। मातृभाषा अर्थात् मातुः भाषा इति अर्थः सुस्पष्टः विवादरहितश्च। अतः अस्माकं प्रश्नः, यत् भारतीयाः वास्तविकरूपेण संस्कृतस्य मातृभाषात्वं इच्छन्ति न वा? यदि इच्छन्ति तदा मातृवर्गे संस्कृतज्ञानं अनिवार्यं। मातृवर्गे, लौकिकसंस्कृतज्ञाने कस्यचित् अपि भारतीयस्य विरोधः न स्यात्, यतोहि अत्र कथित–धर्मस्य स्व-

कल्पितस्य ( सर्वथा वेदविरुद्धस्य ) प्रश्नः न उपतिष्ठते । पर
अस्माकं वेदधर्मानुसारं वेदज्ञानेन अर्थात् ईश्वरज्ञानेन एव, य
तेन ईश्वरेण देवतासकाशात् सर्गादौ दीयते, 'मानव-मोक्षः' भवति
किं अस्माकं मातरः न मोक्षाधिकारिण्यः ? कथं अस्माभिः स्वा
र्थिभिः कृतघ्नैः स्वमातरः 'मोक्षेण' बलात् वंचिताः क्रियन्ते ? कि
ताः मातरः शरीरात् स्त्रियः,प्रकृतिनियमात् वा, न 'आत्मानः' पुरुष
तुल्याः ? मोक्षः तु 'आत्मनः' जायते न शरीरस्य इति सत्यं । य
आत्मा अद्य स्त्रीशरीरे, श्वः पुरुषशरीरेऽपि स्यात् । अतः क्व
'स्त्री-आत्मनि' 'पुरुष-आत्मनः' अयं घोरतमः अन्यायः ? कि
स्वमातृणां अयं आदरः ? यासां वयं पुत्राः (मिथ्या गर्वान्विताः)।
कथं ताभिः सह अयं दुर्व्यवहारः ? किं ईश्वरः सर्वेषां मानवानां
पुरुषस्त्रीणां 'पिता माता च' अस्माकं कुकृत्येन प्रसन्नः स्यात्।
अस्माभिः मातृवर्गेण सह अन्यायः कृतः भारतस्य दुर्भाग्योदये
पतनकाले च, परन्तु इदानीं तत्पापस्य प्रायश्चित्तं कार्यं । किं अन्येषु
सम्प्रदायेषु ईसायि-मुसलमान-बौद्धादिषु एतादृशः अन्यायः मातृ-
वर्गे अवलोक्यते ? तत्र सम्प्रदायग्रन्थानां, कस्याश्चित् भाषायाः च
पठनपाठनं न वारितं यथा अस्माकं कथित-प्रचलित-धर्मे वेद-
संस्कृतादि-पठनं वारितं मातृभ्यः । न अयं वेदधर्मः कदापि । अस्माकं
अज्ञानं मिथ्यागर्वः च अत्र कारणं ।

## ग्रन्थगतस्य संस्कृतस्य उदाहरणद्वयं

कादम्बरीतः एकं उद्धरणं दीयते ।

( पृष्ठ संख्या २१४ तः २१९ पर्यन्तं )

"प्रभातायां च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः पित्रा-

भिनवमृगया कौतुकाकृष्यमाणहृदयो भगवत्यनुदितएव सहस्ररश्मा-

वारुह्येन्द्रायुधमग्रतो, 'वालेप्रप्रमाणाऽनाकषर्यद्भिश्चामरीकरशृङ्ग-लाभिः कौलेयकाञ्जरद्व्याघ्रचर्मशवलवसन कञ्चुकधारिभिरनक-वर्णपट्ट चीरिकोद्वद्धमौलिभिरुपचितश्मश्रुगहन–मुखैरेकवर्णावसक्त-हेमतालापुटैरावद्धनिविड–कद्यैरनवरतश्रमोपचितोरुपिण्डकैः कोद-ण्डपाणिभिः श्वपोषकैरनवरतकृतकोलाहलैः प्रधवद्भिर्दिगुणीक्रिय-माणमनोत्साहो बहुगजतुरंगपदातिपरिवृतो वनं ययौ। तत्र चा-कर्णान्ताकृष्टमुक्तर्विकचकुवलयपलाशकान्तिभिर्भल्लैर्मदकलकल-कुम्भ भित्तिभिदुरैश्च नाराचैश्चापटङ्कारभयचकितवनदेवताधीक्षवीक्षितो वनवराहान् केशरिणः शरभांश्चामराननेकुरङ्गकांश्च सहस्रशो जघान। अन्यांश्च जीवत एव महाप्राणतया स्फुरतया जग्राह। समारूढे च मध्यमह्नः सवितरि वनात् स्नानोत्थितेनेव श्रमसलिल-विन्दुवर्षमनवरमुज्झता मुहुर्मुहुर्दशनविघट्टनैः खणखणायितखर-खलीनेन श्रमशिथिलमुख विगलित फेनिलरुधिरलवेन पर्याणपट्टका-नुसरणोत्थितफेनराजिना कर्णावतंसोकृतमुत्फुल्लकुसुमशवलमलि-पटलझङ्कार—रवमुखरं वनगमनचिह्नं पल्लवस्तवकमुद्वहतेन्द्रायुधे-नोह्यमानः समुद्गतस्वेदतयाऽन्तरार्द्रीकृत मण्डलेन मृगरुधिरलव-शतशवलेन वारवाणेन द्विगुणतरमुपजातकान्तिः अनेकरूपानुसर-णसंभ्रमपरिभ्रष्टच्छत्रधरतया छत्रीकृतेन नवपल्लवेन निवार्यमाणा-तपः, विविधवनलता कुसुमरेणुधूसरो वसन्त इव विग्रहवान्, अश्व-खुररजोमलिनललाटाभिव्यक्तावदातस्वदलेखः, दूरविच्छिन्नेन पदातिपरिजनेन शून्यीकृतपुरोभागः, प्रजवितुरङ्गमाधिरूढैरल्पा-वशिष्टैः सदराजपुत्रैः 'एव मृगपतिः, एवं वराह, एवं महिषः, एवं शरभः, एवं हरिणः इति तमेव मृगया वृत्तान्तमुच्चारयन् स्वभवन-



माजगाम। उत्तीर्य च तुरङ्गमात् ससंभ्रमप्रधावितपरिजनोपनीत

उपविश्यासने वारवाणमवतार्य अपनीय चाशेषं तुरङ्गमाधिरोहि-णोचितं वेषपरिग्रहमितस्ततः प्रचलिततालवृन्तपवनापनीयमान-श्रमो मुहूर्तं विशश्राम। विश्रम्य च मणिरजतकनककलशशत-सनाथामन्तर्विन्यस्तकाञ्चनपीठां स्नानभूमिमगात्। निवर्तिताभि-षेकव्यापारस्य च विविक्तवसनपरिमृष्टवपुषः स्वच्छदुकूलपल्लवा-कलितमौलेर्गृहीतवाससः कृतदेवार्चनस्याङ्गरागभूमौ समुपविष्टस्य राज्ञा विसर्जिता महाप्रतीहारमधिष्ठिता राजकुलपरिचारिकाः कुल-वर्धनासनाथाश्च विलासवतीदास्यः सर्वान्तःपुरप्रेषिताश्चान्तःपुर-परिचारिकाः पटलकविनिहितानि विविधान्याभरणानि माल्यान्य-ङ्गरागान्वासांसि चादाय पुरतस्तस्योपतस्थुरुपनिन्युश्च। यथाक्रम-मादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनमुपरचिताङ्गरागो दत्वा च समीपवर्तिभ्यो यथार्हमाभरणवसनाङ्गरागकुसुमानि विविधमणिभाजन सहस्रसारं शारदमनवरतलमिव स्फुरित तार-गणमाहारमण्डपमगच्छत्। तत्र च द्विगुणितकुशासनोपविष्टसमी-पोपविष्टेन तद्गुणोपवर्णनपरेण वैशम्पायनेन यथार्हं भूमिभागोप-विशितेन राजपुत्रलोकेन 'इदमस्मै दीयताम्' 'इदमस्मै दीयताम्' इति प्रसादविशेषदर्शन—संवर्धितसेवारसेन च सहाहारविधिमकरोत्। उपस्पृश्य च गृहीत—ताम्बूलस्तस्मिन् मुहूर्तमिव स्थित्वेन्द्रायुध-समीपमगमत्। तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालाप-कथाः कृत्वा सत्यप्याज्ञाप्रतीक्षणोन्मुखे पार्श्वपरिवर्तिनि परिजने तद्गुणहृतहृदयः स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य निर्गत्य राजकुलमयासीत्। तेनैव च क्रमेणावलोक्य राजानमागत्य निशामनैषीत्।



द्वितीयं उद्धरणं गीतातः (शांकरभाष्यं) दीयते—

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥

व्याख्या—न शोच्या अशोच्याः शोचितुमनर्हाः भीष्मद्रोणादयस्तानशोच्यानेव त्वमन्वशोचः एतानुदिश्य शोकं कृतवानसि। ननु स्वजनमरणे सर्वेषां शोको जायत एव कथमुच्यत एतानन्वशोचस्त्वमिति, कुतो वा म्रियमाणानामेतेषामशोच्यत्वमिति चेत्त्वमत्र प्रष्टव्यः, किं भीष्मद्रोणादिशब्दवाच्यार्थमुद्दिश्य शोच्यते उत लक्ष्यार्थमिति। आद्ये भीष्मादिसब्दवाच्यार्थस्यासद्वृत्तत्वमवेक्ष्य शोच्यते किंवा तन्नाशमुद्दिश्य शोच्यते इति। नाद्यः। ते महानुभावा इति त्वयैव तन्महत्वप्रतिपादनात्। न द्वितीयः। तदसम्भवात्। 'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना' इति शरीरस्य मृत्युग्रस्तत्वश्रवणात् 'दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः' इति देहस्य नश्वरत्वश्रवणात् सर्वदा म्रियमाणप्राणिसंदर्शनाच्च प्रत्यक्षादिप्रमाणैरेव ध्रुवमृत्युकस्य देहादेः शोच्यत्वं न संभवति। न प्रथमे द्वितीयः। आत्माऽजत्वान्न जायते जननाभावान्न म्रियते मरणाभावान्नित्यः 'अजो नित्यः शाश्वतः' इति 'नित्यो नित्यानाम्' इतिलक्ष्यार्थस्यात्मनो नित्यत्वश्रवणान्नित्यस्य सदाप्तस्यात्मनः शोच्यत्वाऽनुपपत्तेः। नहि बुद्धिमतां नित्यः पदार्थः शोच्यो भवति नाप्यनित्यश्च। यत एवं वाच्यार्थस्य लक्ष्यार्थस्य चोभयोरशोच्यत्वे सिद्धे त्वमशोच्यानेव शोच्यत्वबुद्ध्या गूढवदनुशोचसि। नैतन्मात्रमेव करोषि, अपितु प्रज्ञावादांश्च भाषसे सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्राज्ञाः पण्डितास्तेषां शास्त्रमभिव्याप्ताः वादा अवादास्तान् प्रज्ञावादान् 'कुलक्षये प्रणश्यन्ति कुलधर्माः' इति, 'उत्सन्न कुलधर्माणाम्' इति,

'कथं भीष्ममहं संख्ये' इत्यादीनि प्रौढवचनान्यपि भाषसे। यदशोच्यकथनं, यच्च शास्त्रार्थप्रकटनपाण्डित्यं तदेतद् द्वयं तेजस्तिमिरवत्परस्परविरुद्धं नैकत्र स्थातुमर्हति। अतो भवान् मूढ एव भवति न तु पण्डितः। तर्ह्येवं समये पण्डिताः कथं वर्तन्त इत्याह-गतासूनिति। केवलं मूढाः ममैते पुत्रादयो मृता इति गतासूनेवानुशोचन्ति न त्वगतासून्। शास्त्रज्ञास्तु ममैते पुत्रादयो मूढा दुर्भगा दुर्वृत्ता जाता इत्यगतासूनेवानुशोचन्ति न तु गतासून्। पण्डितास्तु गतासूनगतासूंश्च पुत्रादीन्नानुशोचन्ति। गतासूनामगतासूनामप्युभयेषामविद्याकार्यत्वेनस्वप्नार्थवदसत्त्वादुभयत्र—ब्रह्मैव पश्यन्ति त एव हि पण्डिताः ये त्वसत्त्यक्त्वा सदेव गृह्णन्ति। सदा सर्वत्र ब्रह्मदर्शनं हि पाण्डित्यम्। 'ब्राह्मणः पाण्डित्यं निर्विद्य' इति श्रुतेः। अत उक्तलक्षणाभावात् त्वं मूढ एव न तु पण्डित इत्यर्थः ॥११॥

व्याख्या १—अत्र उद्धरणद्वयं दीयते। एकं कादम्बरीतः द्वितीयं गीतायाः शाङ्करभाष्यतः (शङ्करानन्दीव्याख्या) 'कादम्बरी' उद्धरणात् इदं सहजतया सिद्धं भविष्यति यत्कीदृशी कठिनतमा भाषा लिखिता तस्याः लेखकेन। एतादृशी कठिनभाषा संस्कृतस्य साधारणजनानां च हिताय न विद्यते। तत्र केवलं 'दुर्बोधत्वं गुणः' पाण्डित्यपदर्शनाय। कतिपयपण्डिताः तां कादम्बरीं बुद्ध्येरन् परं सामान्यपुरुषाणां कृते तु तस्याः ज्ञानं दुर्लभं। वस्तुतः पण्डिताः अपि कथयन्ति यत् स्थले स्थले 'कादम्बरी' तेषां कृतेऽपि कठिना दुर्बोधा, तदा का कथा बालकानां विद्यार्थिनां च ? अत्र पाण्डित्यं तुम्बुरमालायां अवलोक्यते। दीर्घसमासा अत्र विद्यन्ते, तथा



उपमादियुतानि वाक्यानि अवलोक्यन्ते, यानि प्रायः एकैकपृष्ठे

समायान्ति। कदापि कदापि वाक्यस्य विविधपदानां सम्बन्ध: सुस्पष्ट: न भवति दुर्बोधत्वात्। कदापि कदापि इदं अपि न ज्ञायते, यत् क्रिया कुत्र विद्यते तथा तस्या: कर्त्ता क: अस्ति, कर्म किं अस्ति, इत्यादय: दोषा: गुणा: वा सर्वत्र प्राप्यन्ते। एतादृश्या: कठिनताया: अन्यत् अपि कारणं अक्षि-लक्ष्यीभवति। वाक्येषु सन्धिप्रयोग: भाषा-काठिन्यं वर्द्धयति। पूर्वं निवेदितं अस्माभि: यत् भाषा सुबोधाय भवति न तु दुर्बोधाय, दुर्बोधाय भवेत् चेत् तदा मौनं वरं। वस्तुत: भाषा विचारविनिमयाय भवति। यदि एतादृशी भाषा स्यात्, येन विचारविनिमय: कठिन: असम्भव: वा स्यात्, तदा अस्या: भाषाया: क: लाभ: ? प्रथमं तु यदा पदानां अर्थ: सुस्पष्ट: न भवति तदा कथं वाक्यस्य ? दीर्घसमासा: सन्धियुतानि पदानि दुर्बोधाय एव भवन्ति। यदि पदानां अर्थ: स्फुट: न सञ्जायेत तदा वाक्यस्य अर्थ: कथं स्पष्ट: भवितुं अर्हति। प्रथमं तु पदानां पदच्छेद: अङ्कगणितस्य रेखागणितस्य वा एक: जटिलतर: प्रश्न: विद्यते। वस्तुत: विचारस्य मूल्यं न तु भाषाया:। ज्ञानविज्ञानं किं ? अस्य उत्तरं अस्ति 'सुविचारा:'। यदि लेखकस्य 'सुविचारा:' 'सद्विचारा:' वा सुस्पष्टा: न स्यु: तदा क: लाभ: लेखनस्य ? अतएव कादम्बरीत: अयं उपदेश: मिलति यत् समासा: सरलतरा: स्यु:, एवमेव वाक्यानि अपि। वाक्यस्य विविधपदेषु सन्धि: कदापि न स्यात्। अनेन मार्गेण सारल्यं आगन्तुं शक्नोति ग्रन्थगते संस्कृते अन्यथा नहि।

व्याख्या २—गीताया: शाङ्करभाष्यविषये अहं केवलं इदं निवेदयामि यत् भाष्यं मूलगीतात: कठिनं विद्यते। तदा क: लाभ: एतादृश्या: व्याख्याया: ? तत् भाष्यं पाण्डित्यपूर्णं भवेत् पर सामान्य-

जनानां किं हितं ? अतएव सरलतमेन संस्कृतेन भवितव्यं येन आशयः सुस्पष्टः भवेत् । मूलग्रन्थतः टीका तु सरलतरा भवितव्या । परं अत्र इदं न अवलोक्यते । मूल-श्लोकः वस्तुतः कठिनः नास्ति । गीतायाः विचाराः 'गम्भीराः' परं भाषा सरला सुबोधा च । तस्य ग्रन्थस्य अयं महागुणः । परं तस्य श्लोकस्य टीका अवलोकनीया । तत्र पाण्डित्यं तु प्रचुर-मात्रायां अवलोक्यते परं अर्थ-सारल्यं न दृश्यते । वस्तुतः टीकां पठित्वा कश्चित् जनः संशये पतितुं शक्नोति । तां पठित्वा अनेके संशयाः हृदये उत्पन्नाः भवन्ति येषां निवारणं तत्र न भवति। मूलश्लोकस्य अयं पदच्छेदः 'त्वं अशोच्यान् अनुअशोचः (त्वं) प्रज्ञावादान् च भाषसे । पण्डिताः गतासून् अगतासून् च न अनु-शोचन्ति ।' सर्वं सुस्पष्टं एव ।

व्याख्या ३—कादम्बरीतः उद्धरणं पठित्वा कश्चित् श्रो... ज्ञातुं शक्नोति यत् तत्र दीर्घतमाः समासाः विद्यन्ते, येषां अर्थकरणं अपि दुष्करं । यत्र समासाः न तिष्ठन्ति तत्र वाक्यपदेषु संहिता कृता, येन वर्णनातीतं काठिन्यं उत्पादितं । अनेन प्रथमं तु दीर्घ-कालः पदच्छेदे व्ययितः भवति, तदुपरि सन्धौ अर्थात् "स्वरसंहि-तायां" एवमेव "हलक्षराणां संयोगे" पदेषु विविधस्वराणां तथा हलक्षराणां सम्यक् ज्ञानं न जायते । यथा 'आ' 'अ' 'अ' 'आ' वा 'इ' 'ई' 'ई' 'ई' वा एवमेव अन्येषां वर्णानां संहितीकरणे एकरूप-त्वात् इदं ज्ञातं न भवति यत् कस्मिन् पदे कः वर्णः अस्ति । इ... सर्वं तु सुस्पष्टं एव, सर्वे विद्वांसः सरलतया ज्ञातुं शक्नुवन्ति । प...

अहं कतिपयानि उद्धरणानि अपि ददामि । गीताश्लोकस्य व्याख्याया... 'न शोच्याः अशोच्याः शोचितुमनर्हाः...' अत्र वस्तुतः 'शोच्याः...'

( पु० बहुवचनं ) पदं विद्यते, परं सन्धिकारणात् अत्र 'शोच्या' पदं दत्तं। 'शोच्या' शब्दः स्त्रीलिङ्गः (एकवचनं) अपि भवितुं अर्हति यथा 'इयं स्थितिः शोच्या'। अत्र एकं वाक्यं दीयते 'ननु स्वजन-मरणे सर्वेषां शोको जायते—एव कथमुच्यत एतानन्वशोचस्त्व-मिति'। अस्मिन् वाक्ये, विविधपदानि विरूपतां गतानि सन्ति। 'शोकः, जायते, उच्यते, अनुअशोचः पदानि सन्धिकारणात् 'शोको जायत, उच्यत, अन्वशोचः सन्धौ भविष्यन्ति। यत्र बुधाः, पण्डिताः अपि त्रुटिं कुर्वन्ति, तत्र का कथा बालकानां प्रारम्भिक-विद्यार्थिनां ? ते कथं शोको, शोकः, जायते, जायत, उच्यते उच्यत, अन्वशोचस्, अनु अशोचः इत्यादिषु पदेषु भेदं कर्त्तुं शक्नुवन्ति। द्वितीयं 'लघुत्वं' अपि सन्धौ सर्वत्र न आगच्छति। यथा 'शोकः' लघुत्वं प्रकटयति नतु 'शोको' दीर्घस्वरकारणात्। द्वितीयं 'शोको' पदं नास्ति, शोकः अस्ति। एकपदे तु सन्धिः, संयोगः वा भवेत्, परं एकवाक्यस्य विविधपदेषु सन्धिः संयोगः सर्वथा अनर्थकरः व्याकरणासम्मतः। वाक्येषु यदि विविध-पदानि विरूपतां ग्रहीष्यन्ति तदा 'शुद्धोच्चारणं' अपि भवितुं न अर्हति। उद्धरणद्वयं अत्र प्रमाणं।

संस्कृतपदानां वैज्ञानिकीरचना, अतः पदरचने सन्धिसंयो-गस्य आवश्यकता, अन्यथा कदापि पदरचना न सम्भवेत्। समासेऽपि पदत्वं आनीयते, अतः तत्र अपि सन्धिसंयोगस्य प्रयोजनं विद्यते।

## ग्रन्थगतस्य मृतप्रायस्य संस्कृतस्य उद्धार—विचाराः

प्रकृतेः नियमानुसारं यस्य उन्नतिः तस्य अवनतिः, यस्य अवनतिः तस्य उन्नतिः उद्धारः वा अवलोक्यते मानवैः लोके। येन

नैसर्गिकनियमानुसारेण संस्कृतस्य अपि सुदिनानि आगता
संस्कृतस्य अयं उद्धारविचारः शनैः शनैः दृढतां गतः प्रायः गता
वर्षेषु । प्रायः गतैकसहस्रवर्षाणि यावत् काऽपि राष्ट्रभाषा ना
भारतीयानां विदेशीयशासकानां भाषाः विहाय, याः समये स
परिवर्त्तनं आप्नुवन् । भारतीयराष्ट्रभाषायाः अभावात् भारते
नष्टीभूतं, तथा विविधक्षेत्रीयभाषाः ( संस्कृतस्य अंशरूपाणि )
भूताः परस्परं सम्बन्धरहिताः । संस्कृतलिपेः स्थाने क्षेत्रीयभाषा
मानिभिः विविधलिपयः निर्मिताः स्वस्वक्षेत्रीयभाषाणां । परि
भारतं विभाजितं परः सहस्रभागेषु । तदा भारतं 'प्राचीनः लो
मुकुटः' क्रीडास्थलं जातं आक्रामकाणां । एतेषु विदेशीयशास
अन्ते आगताः आंग्लशासकाः व्यापारिणः, यैः प्रथमं घोरात्या
कृतः भारतीयेषु भारतलुण्ठनाय स्वव्यापारवर्द्धनाय, इंगलेण्डदे
साम्राज्यस्थापनाय । ते सफलीभूताः अस्मिन्कार्ये, परन्तु तैः शा
अपि स्थापिता देशे तथा आंग्लभाषा राष्ट्रराजशिक्षाभाषा कृ
सर्वस्मिन् भारते । शनैः शनैः भारतीयेषु एकत्वभावः प्रादुर्भू
यः अन्ते 'भारतीयस्वातन्त्र्यलाभे १९४७ ई० वत्सरे' एकं म
साधनं संवृत्तं । एतैः शासकैः सभ्यलुण्ठकैः, महाक्रूरैः अ
( भारताय स्वातन्त्र्यदाने ) बहवः सुधाराः अपि कृताः, स्वा
वशीभूतैः, परन्तु लाभः तु भारताय जातः एव । तस्मिन् काले मु
णालयाः अपि स्थापिताः देशे, येन प्रकाशन-सौविध्यं सम्पन्न
देशे गमनागमनं अपि सुलभं जातं, यतोहि धूम्रयानानि प्रचालि
तानि शासकैः । एतैः सर्वैः आधुनिक-साधनैः भारतैक्य
भावना भूयोऽपि भारतीयेषु दृढीभूता, तथा भारतीयैः पुनः भार
क्यसम्पादनाय भारतीयसंस्कृतेः उत्थानाय संस्कृतस्य संस्कृतसा

स्यस्य च उन्नतये प्रयत्नः प्रारब्धः। एतेषु अंगुलिगण्येषु भारतीयेषु सुधारकेषु एकः अन्यतमः संस्कृतविद्वान् आसीत्, यः केवलं संस्कृतं भूयोऽपि भारतेवर्षे मातृराष्ट्रराजशिक्षाभाषारूपेण अवलोकयितुं इच्छतिस्म। तस्य महाभागस्य नाम आसीत् महर्षि दयानन्दः। तस्य जीवनोद्देश्यस्य पूर्तिः हिन्दीभाषया न स्यात् लक्षवर्षेषु अपि इति ज्ञातव्यं सर्वैः।

## पुनः वेदधर्मसंस्थापकः महर्षिदयानन्दः

महर्षिदयानन्दस्य "विशिष्टजन्म" महायोगिराजकृष्णस्य शब्देषु जगत्प्रसिद्धेषु, सत्येषु अपि यथा—

यदा यदा हि धर्मस्य, ग्लानिः भवति भारत,
अभ्युत्थानं अधर्मस्य, तदा आत्मानं सृजामि अहं,
परित्राणाय साधूनां, विनाशाय च दुष्कृतां,
धर्मसंस्थापनार्थाय संभवामि युगे युगे।

( भगवद्गीता )

वेदधर्मस्य पुनः संस्थापनार्थं विक्रमीयसम्वत्सरे १८८१ नामके १८२४ ईस्वीये जातं। यदा यदा महापुरुषाणां महायोगिनां देवतानां अर्थात् मुक्तानां आत्मनां जन्म भवति स्वेच्छया ईश्वर-प्रेरणया वा विशिष्टकार्यं उद्दिश्य, लोक-कल्याणार्थं, 'अवतरण, अवतारः वा' कथ्यते बुधैः। अस्यां विशिष्टसंज्ञायां भगवतः दया-नन्दस्य अपि 'विशिष्टजन्म' आगच्छति, यतोहि तेन ईश्वरधर्मस्य वेदधर्मस्य पुनः संस्थापनं कृतं। 'यदि नास्तिकः बुद्धः, एकः महा-पुरुषः', यस्य ईश्वरे, आत्मनि च कोऽपि विश्वासः नासीत्, अवतारेषु गणितः भवितुं अर्हति, तदा कथं न भगवान् दयानन्दः, आस्तिक-शिरोमणिः, एकमात्रवैदिकः, अवतारः ? तस्य महा-

भागस्य अपि नाम अवतारेषु गणयितुं शक्यते भारतीयैः कृतज्ञ
प्रकाशनार्थं। अतः मन्ये अहं, यत् तस्य महाभागस्य अवत
जातः अर्थात् विशिष्टजन्म जातं लोकोद्धारार्थं। स दयान
केवलं 'ऋषिः' एव नासीत्, वेदस्य सत्यव्याख्याकरणात्, अपि
अधिकोऽपि आसीत्, यतः तेन युगान्तरं आनीतं लोके। स को
मुक्तात्मा आसीत् यः ईश्वरप्रेरणीया प्रादुर्भूतः भारते। अत्र
देवताः प्रादुर्भवन्ति न अन्यत्र। ईश्वरः निखिलब्रह्माण्डरचयि
स्वरचनासु व्यापकः तथा 'अजन्मा अनन्तश्च' यथा

एतावान् अस्य महिमा ज्यायान् च पुरुषः,
पादः अस्य विश्वाभूतानि, त्रिपात् अस्य अमृतं दिवि।
(यजु०)

सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात्,
स भूमिं सर्वतः स्पृत्वा, अति अतिष्ठत् दशांगुलं। (यजु०

स परि अगात् शुक्रं अकायं अव्रणं अस्नाविरं शुद्धं अपापविद्धं
कविः मनीषी परिभूः स्वयंभूः याथातथ्यतः अर्थान् व्यदधात्
शाश्वतीभ्यः समाभ्यः। (यजु०

अनन्तः अकायः (अजन्मा) ईश्वरः कुत्र नास्ति जगति, के
तस्य ईश्वरस्य 'विशिष्ट-जन्म अवतारः नाम' स्यात्? ईश्वर
जगति शेते व्यापकरूपेण उत यस्मिन् अनन्ते ईश्वरे सान्तजग
(ईश्वरस्य रचना) शेते। अतः वेदेऽपि ईश्वरस्य 'पुरुष
वर्णनं। परन्तु अस्य अयं अर्थः नास्ति, यत् स ईश्वरः 'चर्म-स्नायु
रक्तादिसहितः कोऽपि शरीरधारी पुरुषः।' येन ईश्वरेण पादहस्त
दिरहितेन अस्य निखिलब्रह्माण्डस्य रचना क्रियते 'कश्चित् जन्म वि
अवतारः नाम' तस्य कथं 'अवतारः स्यात् क्षुद्राणां रावणकंसादीन

मारणाय । रावणाः कंसाः तु सदैव तिष्ठन्ति लोके हिटलरादिरूपेषु । अनेन तु ईश्वरस्य वर्षे वर्षे दिनेदिने अवतारः आवश्यकः येन दुष्टानां नाशः साधूनां रक्षणं च स्यात् । किं इदानीं एव रावणाः कंसाः भौतिक-वैज्ञानिकानां रूपेषु अन्यायि-शासकरूपेषु नहि विद्यन्ते, ये 'विश्वनाशं' ईहन्ते । ऐतिहासिकरावणं कंसं च, एते 'आधुनिकाः रावणाः कंसाः' अतिशेरते । अतः अद्य कथं न ईश्वरस्य अवतारः भवति? अस्माकं, महापुरुषाणां, जगत्स्रष्टुः ईश्वरस्य, 'निन्दा' न स्यात् इति अस्माकं उद्देश्यं । अन्यथा अस्माकं न्यूना श्रद्धा नास्ति भगवति रामे कृष्णे च ! अहं न तान् महाभागान् पूजयामि केवलं, 'मुक्तमहापुरुषान् 'देवताः इति नाम', अपितु अनुकरोमि अपि । किं भगवतः रामस्य भगवतः कृष्णस्य मातृ-भाषणादिभाषा संस्कृतं नासीत्, तथा ते वेदज्ञाः वेदाचारसमन्विताः न आसन् ? भगवतः कृष्णस्य विषये कथ्यते यथा

वेद–वेदाङ्ग–विज्ञानं बलं चाऽपि अधिकं तथा,<br>
नृणां लोके हि कः अन्यदस्ति विशिष्टः केशवात् ऋते ।

'वीरपूजा, गुणपूजा' तु उचिता, परन्तु तदधिकं तु 'निन्दा' एव ।

परन्तु ये भारतीयाः रामं कृष्णं च 'ईश्वरावतारः' इति मन्यन्ते वेदविरुद्धं, ते मन्येरन्, कः विवादः ? तथापि मानवानां अनुकरणाय वेदधर्मसंस्थापनाय ईश्वरावतारः तेषां कथनानुसारं भवति । तदा कथं न ते अनुकुर्वन्ति भगवन्तं रामं कृष्णं च, येषां मातृभाषा संस्कृतं देववाणी आसीत् ? कथं न एतेषां भारतीयानां संस्कृत मातृभाषा अद्य, ये भगवतः रामस्य कृष्णस्य च भक्ताः ? सर्वप्रथमं कर्तव्यं तेषां भक्तानां संस्कृतशिक्षणग्रहणं, येन ते वाल्मीकिरामायणं श्रीमद्भगवद्गीतां च बुध्येरन्, तथा भगवतः रामस्य

कृष्णस्य च जीवनस्य शिक्षाः अनुकुर्वीरन्। अनेन मार्गेण कल्
स्यात् भक्तानां। तदा 'वेदः' ईश्वरस्य ज्ञानं ( रामस्य कृष्णस्य
मतानुसारं ) तस्य अध्ययनं पठनपाठनं च कथं नहि क्रियते भक्तै
इमे प्रश्नाः संस्कृतस्य वेदस्य च उद्धारार्थं अस्माभिः सनातनध
वलम्बिभिः सह क्रियन्ते, येषां 'भगवान् रामः कृष्णः च ईश्व
इति विश्वासः।

## महर्षिदयानन्दस्य आर्यसमाजः

महर्षिदयानन्दस्य अनुयायिनां वेदेषु पूर्णास्था तथा वैदिक
महर्षिप्रतिपादते, विश्वासः विद्यते। आर्यसमाजसदस्याः प्र
१० लक्षतः अधिकाः स्युः देशे विदेशेषु। कथं न तैः सर्वैः सद
सर्वप्रथमं संस्कृतस्य, अनन्तरं वेदस्य ( चतुर्वेदानां ) अध्य
क्रियते महर्षेः आदेशानुसारं, यः आदेशः आर्यसमाजस्य तृती
नियमे विद्यते यथा :—

'वेदः सत्यविद्यानां पुस्तकं अस्ति। वेदस्य पठनपाठनं
श्रवणं श्रावणं सर्वेषां आर्याणां परमधर्मः अस्ति।'

वेदस्य पठनपाठनं श्रवणं श्रावणं संस्कृतज्ञानेन विना वेदभाषाज्ञानं
विना कथं सम्भवेत्? यदि सहस्रेषु सदस्येषु एकः संस्कृतज्ञः,
किं भवति? वेदज्ञाः (चतुर्वेदेषु पारङ्गताः) तु मिलन्ति एव
अद्य भारते, कथितवेदधर्मावलम्बिषु, सनातनधर्मावलम्बिषु, आ
समाजसदस्येषु।

## सुस्पष्टं इदं सर्वं

एतादृशी दुःस्थितिः तिरोहिता नास्ति कस्यचित् ज्ञानवत
एतैः प्रायः सर्वैः वेदधर्मावलम्बिभिः संस्कृतस्य वेदस्य च प्रचा

नहि क्रियते भारते विश्वे च, प्रथमं स्वत एव देववाण्याः त

वेदस्य ज्ञानं प्राप्य। इदं ज्ञातं भवेत् एतै: सर्वैः, यत् अस्माकं धर्मानुसारं वर्णाश्रमव्यवस्था नहि प्रचलति वेदज्ञानेन विना, आर्य्यराज्येन विना। अत: वर्णाश्रमगर्व: कथित-द्विजत्वगर्व: व्यर्थ: वेदेन विना अद्य भारते वेदधर्मावलम्बिषु, विशेषतया आर्यसमाजसदस्येषु दयानन्दस्य अनुयायिषु।

अत: भगवान् दयानन्द: प्रथम: क्रान्तिकारी विद्वान् योगी च आसीत् अस्मिन् युगे, येन संस्कृतस्य वेदस्य च स्वाचरणेन प्रचार: प्रसारश्च कृत:। तस्य अभीष्टं आसीत्, यत् संस्कृतं मातृभाषा, पुन: राष्ट्रादिभाषा स्यात् भारतस्य पूर्ववत्। इदं सर्वं तस्य पठनपाठनपद्धत्या स्पष्टीभवति, या तेन स्थाने स्थाने विशदरूपेण दत्ता, यथा सत्यार्थप्रकाशे तृतीयसमुल्लासे, तथा ऋग्वेदादिभाष्यभूमिकायां। आरम्भत: अन्तपर्यन्तं तेन संस्कृतस्य संस्कृतग्रन्थानां वेदानां च पठनपाठनं कर्त्तव्यत्वेन समर्थितं गुरुकुलेषु। तेनलिख्यते-

'इमं मन्त्रंपत्नी पठेत्'

इति सम्बन्धे हेतु: दीयते यथा

'............यदि स्त्रिय: वेदादिशास्त्रं तथा संस्कृतं न जानीयु:, तदा मन्त्राणां शुद्धोच्चारणं तथा संस्कृतभाषणं कथं कुर्यु:? अनेन सिद्ध्यति, यत् संस्कृतभाषा एव मातृभाषा महर्षि दयानन्दस्य अभीष्टं आसीत्। अत: या मातृभाषा सा राष्ट्रादिभाषा भवेत् स्वत एव भारते इति अभिमतं दयानन्दस्य।

ये आर्यसमाजसदस्या: कथयन्ति, यत् हिन्दी राष्ट्रभाषा महर्षिदयानन्दस्य अभीष्टं आसीत्, तथा आन्दोलनं कुर्वन्ति हिन्दीपक्षे संस्कृतं उपेक्ष्य, ते सत्यं न कथयन्ति, उचितं नहि कुर्वन्ति। 'हिन्दी राष्ट्रभाषा स्यात्' इति महर्षि दयानन्देन कुत्र अपि नहि लिखितं।

अत: हिन्दीपक्षे प्रयास: व्यर्थ: महर्षिदयानन्दस्य नास्ति । 
'निन्दा' एव तस्य महर्षे: । तदा हिन्दीप्रचारेण 'वेद-प्राप्ति:' कदा
न स्यात्, यतोहि वेदादय: संस्कृते विद्यन्ते, न हिन्द्यां, न आं
भाषायां, अन्यस्यां वा । आर्य्याणां भाषा तु सदैव संस्कृतं आसी
भूयोऽपि कार्य्यं, यदि सार्वत्रिक-वेदज्ञानं अभीष्टं । बहुसंख्या
भारतीया: वेदधर्मावलम्बिन: अत: वेदानां शास्त्राणां भाषा संस्कृ
'राष्ट्रभाषा' स्यात् इति उचितं, येन ऋषि-मुनीनां ज्ञानं ईश्वरज्ञानं
प्राप्तं स्यात् लोककल्याणाय भारतहिताय, क्षेत्रीयभाषाणां पर
द्वेषादिशमनाय, अन्ते शाश्वतसुखाय च । क्षेत्रीयप्राकृतभाषा
संस्कृतस्य एव भ्रंशरूपाणां कथं संस्कृतज्ञै: अहमहमकिया प्रचा
क्रियते इति सप्तमाश्चर्यं लोकस्य । भारतीयसंविधानस्य १४ क्षेत्री
भाषा: ( वस्तुत: अनन्ताश्च ) असमृद्धा: अनुन्नता: भारतना
अलं इति सूर्यवत् स्पष्टं । अत: भारतीया: ईश्वरीय-वेदस्य संस्कृत
च शरणं गच्छेयु: इति निष्कर्ष: पूर्वकथनस्य, येन भारत
विश्वकल्याणं च स्यात् ।

महर्षिदयानन्दस्य जीवनं आदर्श:, अतएव तं आदर्शं सं
तज्ञा: अनुकुर्यु: । स महानुभाव: धारावाहिसंस्कृतं वदतिस्म
यद्यपि मध्यकालीनां पंडितानां लेखनशैलीं तेन अनुसृता, तथा
तस्य संस्कृतं सरलं अस्ति अव्यावहारिकपद-दीर्घसमासादि-रहि
हितं । भाषणं तु तस्य सदैव सरलं सुबोधं स्फुटं च आसीत् इ
श्रूयते । अत: अयं सुधार: महर्षिणा प्रचलित-संस्कृते (ग्रन्थ
कृत:, येन संस्कृतं भूयोऽपि भाषणादिभाषा भवेत् । सर्वप्रथमं
महाभागेन 'संस्कृतवाक्यप्रबोध:' इति ग्रन्थ: रचित:, येन बाल
बालिका: छात्रा: आरम्भत: संस्कृतं वदेयु: । तेन महाभा

विवशीभूतेन कतिपयग्रन्था: सत्यार्थप्रकाशाद्य:... संस्कृतभाषायां... (हिन्दी भाषा नाम) रचिता:, अत: स 'हिन्दी राष्ट्रभाषा' इच्छातिस्म इति कथनं तु कल्पनामात्रं, महर्षे: 'निन्दामात्रं' इति। तथापि केनाऽपि क्षेत्रीयभाषावादिना संस्कृतविरोधिना हिन्दी-भाषाया: वंगादिभाषाणां वा पक्ष: ग्रहीतुं शक्यते महर्षे: नाम्ना विना। तथैव आद्यशङ्कराचार्यस्य महाभागस्य अनुयायिभि: वेदान्तिभि: हिन्द्यादि-क्षेत्रीय भाषाणां प्रचार: प्रसारश्च क्रियते, यदा केवलं संस्कृतं आद्यशङ्कराचार्यस्य मातृभाषा भाषणादिभाषा आसीत्। आद्यशङ्कराचार्यस्य काले तु बहूनां कुलानां संस्कृतं मातृभाषा आसीत् भारतेवर्षे, न तथा महर्षिदयानन्दस्य काले। अत: महर्षि-दयानन्दस्य वैशिष्ट्यं विद्यते इदानीं।

### द्वितीय: क्रान्तिकारी संस्कृतविद्वान्
### पं० दामोदर सातवलेकर:

अयं क्रान्तिकारी विद्वान् ६५ वर्ष देशीय: महर्षिदयानन्दस्य परम्परां अनुसृतवान्, यतोहि स पूर्वं आर्यसमाजसदस्योऽपि आसीत्, परन्तु पश्चात् मतभेदकारणात् आर्यसमाज: परित्यक्त:। इदानीं स्वतन्त्र: संस्कृत-प्रचारक: लेखकश्च। अयं उभयपक्षीय: विद्वान् प्राचीनेषु प्रतिगामिषु मूर्धन्य:, तथा प्रगतिशीलेषु अपि प्राय: अग्रणी। परन्तु प्रश्न: अयं य: अर्जुनेन कृत: यथा:—

संन्यासं कर्मणां कृष्ण, पुन: योगं च शंससि,
यत्श्रेय: एतयो: एकं, तत् मे ब्रूहि सुनिश्चितं।

श्री भगवान् उवाच

संन्यास: कर्मयोगश्च नि:श्रेयसकरौ उभौ,
तयो: तु कर्मसंन्यासात् कर्मयोग: विशिष्यते।

स महानुभावः कदापि २ कादम्बरीवत् संस्कृतभाषां लिखति दीर्घ-समासबहुलां, नियमरूपेण सर्वेषु वाक्यपदेषु सन्धिसंयोग-युक्तां, पठने कठिनतरां यथा अस्माभिः तस्य महाभागस्य 'सामवेदः' इति नामके ग्रन्थे 'भूमिकायां' अवलोक्यते। अत्र स मध्यकालीन पंडितान् अनुकरोति, येषां लेखानां उदाहरणद्वयं अस्माभिः अस्मिन् अध्याये दत्तं अर्थात् कादम्बरीतः तथा श्रीमद्भगवद्गीतायाः शांकरभाष्यतः। अतः अस्मिन् सम्बन्धे अन्यस्य उदाहरणस्य प्रयोजनं नास्ति। अतः स महानुभावः मध्यकालीनानां पंडितानां अपि प्रातिनिध्यं करोति, येषां विषये स एव पं० श्रीपाद दामोदर सातवलेकरः ममग्रन्थस्य 'कीदृशं संस्कृतम् ?' इति नामकस्य भूमिकायां' लिखति यत् :—

'.........सर्वेषां मध्यकालीनानां संस्कृतस्य काठिन्यं विवर्धिषूणां, काठिन्यं एव पांडित्यं इति मन्यमानानां पंडितब्रुवाणां पापक्षालनार्थं एतत् महत् प्रायश्चित्तं एव श्यामकुमाराचार्यैः कृतं इति अहं मन्ये। अतः ते सर्वेषां अस्माकं संस्कृतस्य समुन्नत्यर्थं यतमानानां हार्दिकीं प्रशंसां अर्हन्ति, यतः तैःनिष्कंटकीकृतः संस्कृत-भाषायाः मार्गः...............'

अतः स एतादृशः क्रान्तिकारी विद्वान् यः मध्यकालीनानां आधुनिकानां च प्रातिनिध्यं करोति यथावसरं। परन्तु अयं प्रश्नः तु उपतिष्ठते, यत् का लेखनशैली सरला सुबोधा च, इति तेन महाभागेन स्वत एव निर्णेतव्यं। अर्जुनस्य प्रश्नस्य उत्तरं तु भगवता कृष्णेन सुनिश्चितरूपेण प्रदत्तं यत् :—



'......कर्मयोगः विशिष्यते इति'

परन्तु लेखनशैलीद्वये (मध्यकालीनानां संस्कृतलेखनशैली, मम संस्कृतलेखनशैली च, या मया आधुनिके काले सप्रमाणं प्रयुक्ता स्वग्रन्थे 'कीदृशं संस्कृतम् ? इति नामके) का शैली सरला सुबोधा च, येन संस्कृते (पठने भाषणे) सरलं सम्पद्येत, तथा भारतस्य मातृराष्ट्र-राजशिक्षाभाषा भवेत् पूर्ववत्, विश्वे च विश्वभाषा, यत् अस्य महाभागस्य अपि अभीष्टं। तेन स्वतएव प्रशंसिता मम शैली, तथा मध्यकालीनानां निन्दिता, पूर्वोद्धरणेन स्पष्टं।

इदं तु निर्विवादं, यत् पं० सातवलेकर: एक: महापंडित:, परन्तु यत्कार्यं तेन महाभागेन वेदस्य अन्येषां संस्कृतग्रन्थानां वा क्रियते, तत्सर्वं प्राय: हिन्दी-मराठी-गुजरातीत्यादिप्राकृतभाषासु व्याख्यादिभि: क्रियते, येन संस्कृतस्थाने प्राकृतभाषाणां, संस्कृतस्य एव भ्रंशरूपाणां उपकार: प्रसारश्च भवति। प्राकृतभाषासु लेखनेन, संस्कृतग्रन्थानां तासु अनुवादेन, संस्कृतं तु पठति एव नहि कोऽपि। येजना: यां प्राकृतभाषां जानन्ति, तां एव पठन्ति एतादृशेषु ग्रन्थेषु संस्कृतं विहाय। अत: सादरं निवेद्यते अयं शतवर्षदेशीय: महापंडित:, केवलं 'आधुनिकसंस्कृते' लेखनाय, यस्य प्रयोग: तेन क्रियते मम पूर्वोक्तग्रन्थस्य भूमिकायां। एतादृशी भाषा तेन पूर्वं अपि प्रयुक्ता स्वग्रन्थेषु। अन्ते वयं कामयामहे यत् अयं महापंडित: पर:शतानि वर्षाणि यावत् जीवेत्, भारतकल्याणाय विश्व-ल्याणाय च।

पं० मथुरानाथ शास्त्री, कविशिरोमणि, जयपुरं

तथा

डा० कुनहनराजा ऐम० ए० डी० फिल, संस्कृताध्यक्ष,

आन्ध्र-विश्वविद्यालय:



कविशिरोमणि पं० मथुरानाथ शास्त्री, 'भारती' सम्पादक:

जयपुरं, भारतस्य एकः सुप्रसिद्धः संस्कृतविद्वान् अस्ति। एवं
डा० कुनहनराजाऽपि भारतस्य एकः सुप्रसिद्धविद्वान् विद्यते
इमे वस्तुतः मध्यकालीनानां पंडितानां कथित-प्राचीनानां च प्रति
निध्यं कुर्वन्ति। पं० मथुरानाथशास्त्रिमहाभागेन एकः अत्यन्त
महत्त्वपूर्णः लेखः लिखितः, 'वर्त्तमानयुगस्य अपेक्षा च संस्कृतभा
च' प्राचीनपंडितानां सुप्रसिद्धसंस्कृतपत्रे 'संस्कृतरत्नाकरे
प्रकाशितश्च, यः अक्षरशः अत्र दास्यते। अनेन महाभागेन अन्ये
विदुषां अपि मतानि दत्त्वा प्रबलप्रमाणैः सिद्धीक्रियते, यत् युगा
नुरोधात् प्रचलितसंस्कृते सुधारः आवश्यकः। अस्य लेखस्य विषये
संस्कृतरत्नाकर-सम्पादकेन, सुप्रसिद्धविदुषा पं० केदारनाथ
महाभागेन एका टिप्पणी दीयते तद्यथा :—

'अखिलभारतविख्यातैः संस्कृतसाहित्यमर्मज्ञैः विद्वत्तल्लजैः श्रीभट्टमथुरानाथशास्त्रिभिः लेखेऽस्मिन् नितरां उपयुक्तः सर्वप्रथमं सर्वाधिकं च कर्त्तव्यः प्रस्तावः समुपस्थापितः। एतेषां विचाराः सर्वथा सम्मेलनसम्मताः सन्ति (अ० भा० संस्कृतसाहित्यसम्मेलनं प्राचीनपंडितानां सुप्रसिद्ध-संस्था तथा 'संस्कृतरत्नाकरः' तस्याः मुखपत्रं)। भट्टमहोदयाः सम्मेलनस्य स्तम्भस्वरूपाः तस्य हितैषिणः संस्कृतरत्नाकरस्य चिरसम्पादकाश्च। अत्र विषये संस्कृतपत्रसम्पादकैः समुत्साहिभिः संस्कृतप्रणयिभिश्च विमर्शः विधेयः।'

डा० कुनहनराजामहाभागेन एकः सर्वाधिकः महत्वपूर्णः लेख
प्रकाशितः अद्यारपुस्तकालयस्य मुखपत्रे 'ब्रह्मविद्या' इति नामके
तस्य लेखस्य शीर्षकं विद्यते 'संस्कृतस्य भविष्यत्' स लेखो
अत्र दीयते, येन सर्वे संस्कृतज्ञाः प्रबोधिताः स्युः तन्मतेन।

सर्वे भारतीयसंस्कृतविद्वांसः, प्रायः विदेशीयाः अपि, जानन्ति, यत् मया सर्वप्रथमं व्याकरणप्रमाणैः वैज्ञानिकरीत्या च एकस्याः नवीनविचारधारायाः सूत्रपातः कृतः स्वग्रन्थे 'कीदृशं संस्कृतम् ?' इति नामके। तत्र मया 'आधुनिकसंस्कृतस्य' आधारः दीयते, येन भावि-विशालसंस्कृतभवनस्य दृढ़तमस्य आधुनिकवैज्ञानिकयुगानुसारं निर्माणं सम्भवेत्। संस्कृतस्य प्राचीनाधारः तु एतादृशः जर्जरितः विद्यते, यत् तस्य उपरि कस्यचित् अपि भवनस्य निर्माणं भवितुं नहि अर्हति। सौभाग्यं मम, यत् तस्मिन् ग्रन्थे उपस्थापिताः प्रस्तावाः, प्रायः सर्वे, एतैः स्तम्भभूतैः प्राचीनपंडितैः समर्थ्यन्ते। यदि 'संस्कृतरत्नाकर' सम्पादकेन लिख्यते, यत् 'एतेषां विचाराः सर्वथा सम्मेलनसम्मताः सन्ति', तदा तु 'राज्यमुद्रावत्' मम प्रस्तावेषु प्राचीनपंडितानां 'मुद्रा' लगिता। अद्य मम प्रस्तावाः स्थिराः जाताः, तथा इयं नवीना विचारधारा, वस्तुतः प्राचीनतमा, वैदिकयुगबद्धमूला, ऋषि-मुनिप्रतिपादिता 'स्थायित्वं' पुनः आप्तवती भारतकल्याणाय विश्वलाभाय। पं० श्रीपाददामोदर सातवलेकर महाभागस्य शब्देषु कदाचित्

'.........निष्कण्टकीकृतः संस्कृतभाषायाः मार्गः'

महाप्रशंसायुतानि इमानि वचनानि, येषां पात्रं कदाचित् अहं नास्मि। तथापि अहं प्रयतिष्ये, यत् 'संस्कृतस्य मार्गं निष्कण्टकं कुर्यां।' के ते मम प्रस्तावाः, तथा के के सुधाराः आवश्यकाः तत्सर्वं मया विशदरूपेण दास्यते पञ्चमाध्याये। यस्मात् कालात् मया स ग्रन्थः 'कीदृशं संस्कृतम् ?' नामकः प्रकाशितः, तस्मात् कालात् बहवः पंडिताः प्रगतिशीलाः, लेखक-प्रमुखतः, तां सरलतमां लेखनशैलीं आधारीकृत्य, या मया स्वग्रन्थे दत्ता, नवीनसंस्कृतसाहित्यरचनां

कुर्वन्ति। अस्मिन् ग्रन्थे कदाचित् मया 'आधुनिक-संस्कृत अन्तिमं रूपं' दीयते, यत् त्रिकालेषु तिष्ठेत्

यावत् गङ्गा च गोदा च,
तावत् एव हि आधुनिकसंस्कृतं।'

संस्कृतं वेदभाषा वा सृष्टिभाषा, आदिभाषा, नित्या च, अ कदापि नष्टा न स्यात् भूतलात्, यावत् जगत्, नः विश्वासः। य संस्कृतं भारतीयानां प्रमादात् भारते, तस्य उद्गमस्थले, न तिष्ठे तदा विदेशेषु स्थास्यति, तथा वेदोऽपि, यः ईश्वरीयज्ञानं।

इदानीं लेख-द्वयं अर्थात् एकः लेखः पं० मथुरानाथशा महाभागस्य तथा द्वितीयः डा० कुनहनराजा महाभागस्य दी सर्वेषां ज्ञानाय :—

## (१) वर्तमान युगस्य अपेक्षा च संस्कृत भाषा च

(कवि शिरोमणिः—भट्ट मथुरानाथ शास्त्री, भारती—सम्पादक)

आङ्गलशासनारम्भे राजनीतिनिपुणैः पाश्चात्यैः केनचि अभिसन्धिना सा इयं संस्कृतभाषा न अभूत् चूर्णिता। प्रत्युत गु परीक्षकैः कतिपयैः पाश्चात्त्यविद्वद्भिः संस्कृतस्य भूयस्सु अ सेवा वा समादरः वा व्यधीयत इति वक्तव्यं भवेत्। ततः पाश्चा त्यानां भारतात् बहिष्करण-सिंहनादः प्रवर्तितः गान्धिमहात्मप्र तिभिः महाभागैः। भगवद् अनुग्रहात् वैदेशिक राष्ट्राणां राजनैति विषमपरिस्थितिवशात् च, भारतस्य स्वतन्त्रता समघोष्यत सर्वतः किन्तु संस्कृतभाषायाः भाग्ये स्वाधीनताकृतं सौभाग्यं न अद्यापि प्रादुर्भूतं इति वक्तव्यं भवेत् वर्तमानसमये भारतस्य प्रतिप्रान्तं ए संस्कृतभाषायाः विषये अतिशयोक्तिकथा: श्रूयन्ते। "सा इयं राष्ट्र भाषा जायतां" इति अपि कोणात् उत्थितः मधुरवादः कर्णयो

अभ्युपैति । कांग्रेसीयाः शासकाः अपि बहुसंख्यकप्रजानां परितोषाय, भारतीयानां ऋषीणां भूमौ वयं स्थिताः इति अनुरोधेन, मतदातृभ्यः धार्मिकलोकेभ्यः पूर्वं एवंविधं आश्वासनं प्रदत्तं इति, लज्जया वा, संस्कृतस्य सम्बन्धे अनुकूलान् उपन्यासान् प्रकाशयन्ति। किन्तु शासकमञ्चात् संस्कृतोद्धारकथा कार्यरूपे न कथञ्चित् अपि परिणता इति प्रत्यक्षं इदं संस्कृतक्षेत्रे कार्यं कुर्वतां नूनं ?

संस्कृतपठन–पाठनयोः प्रचार-प्रश्ने समुत्थिते तु मर्मविदां बहूनां एव मुखात् सा इयं कथा श्रूयते, यत् अवश्यं संस्कृतभाषा भारतस्य कृते उपयोगिनी पारिभाषिकशब्द-निर्माणादि-कृते भारतीयैः शरणीकरणीया च, तथापि वर्तमानकाले सा लोकानां कृते क्लिष्टा। तस्यां व्याकरणस्य या मार्मिकता सा अवश्यं तस्याः स्वरूपोचिता, अन्यान्यव्याकरणेषु दुर्लभा। किन्तु भाषान्तरपरिशीलनात् सर्वत्र सरलतां अन्वेषयतां कोमलमस्तिष्काणां वर्तमानकालिकलोकानां कृते वस्तुतः एव सा कठिना सिध्यति। प्राचीनकाले व्याकरणस्य सूक्ष्मताः सौष्ठवार्थं अवश्यं प्राचलन् भाषायां। किन्तु यदि वर्तमानकाले संस्कृतभाषायाः प्रचारः सर्वेषु लोकेषु प्रसारश्च काम्यते; तर्हि कानिचित् सौकर्याणि प्रचारणीयानि स्युः।

संस्कृतक्षेत्रे ये किल कार्यं कुर्वन्ति संस्कृतभाषया सह प्रणयं वहन्तः ये हि तस्याः साहित्यं अनुशीलयन्ति, अन्येषां अग्रे प्रशंसन्ति च, वर्तमानशासने महान्तं अधिकारं आरूढाः ये हि संस्कृतभाषायाः पक्षपोषकाः, येषां हस्ते शिक्षा-सूत्रं परम्परया अपि सम्बद्धं, येषां सकाशात् संस्कृत-सेवकाः तां इमां प्रति आशां धारयन्ति, यत् एते अधिकारे आरूढाः संप्रेर्य संस्कृतस्य हितं जातु साधयिष्यन्ति,



ये च प्रान्ते प्रान्ते परिभ्रम्य शिक्षाकार्ये रुचिं वहन्तः संस्कृतं मन्द-

मन्देन अपि स्वरेण श्लाघन्ते, एवंविधाः सर्वे अपि महाभागाः सम्प्रति संस्कृतस्य कठिनतां सूचयन्ति। भारते तस्याः परितः प्रचाराय सारल्यस्य संयोगं, व्याकरणनियमेषु काञ्चित् सुविधां, व्यवहारिक शब्दानां वृद्धिं च अपि आवश्यकीं मन्यन्ते—

सरदार के० एम० पणिक्करमहाभागः लखनऊनगरे 'संस्कृत परिषदः' समुद्घाटनावसरे महता सम्भारेण साधितवान्—"व्याकरणे या दृढ़ता पुरा प्राचीनपण्डितैः प्रभूततया प्राचार्यत, सा सम्प्रति भृशं शिथिलीकरणीया, चेत् संस्कृतप्रचारः काम्यते।"

के० एम्० मुंशीमहाभागः संस्कृतसेवकानां सुपरिचितः एव येन हि सौराष्ट्रप्रान्ते सोमनाथमन्दिरे 'संस्कृत-विश्वपरिषदः' संस्थापनं विहितं। स हि कतिवारान् सूचयामास यद् व्याकरण नियमेषु सौकर्यं किंचित् विधेयं इति।

अतीताः कथाः कामं पुरतः क्रियन्तां; किन्तु सम्प्रति वर्तमान-वर्षे एव अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य सभापति-मञ्चात् चिन्तामणि द्वारिकानाथदेशमुखमहाभागेन भारतराजधान्यां देहल्यां प्रौढतमभाषया संकलिते निजभाषणे सूचितं यत् पाण्डित्या-डम्बरदर्शनार्थं समासबाहुल्यं सर्वथा परिहार्यं ( पैरा० १४ )। रामायणमहाभारतादीनि सरलसंस्कृतसंदृब्धानि, ततः तानि विहाय किं इति दण्डि-बाणभारविप्रभृतीनां क्लिष्टेषु काव्येषु एता-वानाग्रहः ? ( पैरा १७ )। संस्कृतव्याकरणाभिमतेषु विविधेषु भूत-भविष्यदादि-कालेषु बहवः विना आयासं अपहातुं शक्यन्ते। एवमेव बहवःविभक्तिप्रकाराः अनावश्यकाः। बहुत्र 'अपाणिनीयं' अपा-णिनीयं', इति सुप्रयुक्तेषु पाण्डित्यदर्पावहेला प्रयुज्यते। एतत्सुतरां अनुचितं ( पैरा० १६ )।

श्रीमता इन्द्रविद्यावाचस्पतिमहाभागेन तु 'वर्तमानभारते संस्कृतभाषायाः स्थानं' इति नामकं पुस्तकं एव पृथक् प्रकाशितं तत्र—

"संस्कृतभाषां न्यूनाधिकरूपेण सर्वे भारतीयाः जानीयुः इति अभीष्टं चेत्, तदर्थं एते उपायाः अनुष्ठेयाः"–इति आरभ्य–"संस्कृतज्ञैः लेखनेभाषणे च अत्यन्तसरला सुबोध्या च भाषा प्रयोक्तव्या। तदर्थं प्रचलिताः शब्दाः एव प्रयोक्तव्याः। यथासंभवं समस्तानां शब्दानां प्रयोगाः त्याज्याः। असमस्तेषु पदेषु यथा संभवं सन्धिः न विधेयः। यथा 'महिलाआगच्छति,' अत्र 'महिलागच्छति' इति संधिं कृत्वा दुर्बोधता न करणीया।

एतत् एव किं, अखिलभारतीयविद्याकेन्द्रात् श्रीवाराणस्याः काशिकराजकीयसंस्कृतमहाविद्यालयस्य मुखपत्रिका 'सरस्वती सुषमा', या हि राजकीयतन्त्रेण संप्रकाशते, तयाऽपि 'विशिष्टाङ्के' (आश्विन–पौषौ २००६ सं०) सा इयं आवश्यकता प्रवलरूपेण सूचिता। सर्वतः पूर्वं मुखभागे एव डा० भगवान्दासमहाभागस्य लेखोऽस्ति। यस्य हि प्रारम्भः एव वाक्येन अनेन भवति यत्— "संस्कृतभाषायाः प्रचारः साधारण-जनतायां अभिलषितः चेत् तस्याः व्याकरणं सरलीकर्तव्यं। "अङ्क–अंकयोः, पञ्च–पंचयोः, दण्ड–दंडयोः, मन्द–मंदयोः, कम्प–कंपयोः, उच्चारणे न कः अपि भेदः श्रोत्रेण बुध्यते। अतएव अनुनासिक-वर्णानां स्थाने पूर्ववर्ण-शिरः स्थितः बिन्दुः एव अलं लिप्यां' इति अनुमोदनीयं।

भूतत्रयबोधनाय लङ् एव अलं। भविष्यद्द्वयबोधनाय लृट् एव, तथा लिङ्लोः विधिलिङः एव। कर्मवाच्यवाक्येषु तु आत्मने-

पदप्रयोगः उचितः एव। किन्तु परस्मैपद-आत्मनेपदविवेकः (अर्थात्

अनयोः भेदे आग्रहः) त्याज्यः। एवं लिङ्गभेदेऽपि न आग्रहणीयं तद्धितानां च शब्दबहुलसमासानां च प्रयोगः यथाशक्ति वर्जनीयः। लेखेषु सन्धयः विच्छेद्याः। अपाणिनीयाः प्रयोगाः इतिहास-पुराणादिषु आर्षग्रन्थेषु बहुशः प्राप्यन्ते, तेषां अनुकरणं इदानीं अपि न आक्षेप्यं।"

लेखे अस्मिन् 'रेखा लिख्यां', शब्दाः पृथक् लिख्याः 'ऋ' स्थाने 'र' प्रयुज्यते तत् मर्षणीयं।" इत्यादीनि अपि सन्ति किन्तु व्याकरणतः न अतिविरुद्धा या मन्त्रणा सारल्यार्थं अत्र सूचिता सा सद्भिः विचारणीया नूनं। वर्तमानकालेन प्रयोगप्रवाहस्य परिस्थितिः अपि अन्यथा परिकल्पिता। मार्मिकैः कवेः निगूढस्थले आत्मनेपदपरस्मैपदयोः नपुंसक-पुंलिङ्गयोः व्यत्यासः (उल्लङ्घनं) प्रायः बहुत्र अवलोक्यते सौकर्यार्थं सन्धीनां अकारणं बहुभिः एव प्रवर्तितं (व्याकरणग्रन्थेषु अपि सा विवक्षा अपेक्ष्या इत्यादिना सुविधायाः मार्गः प्रदर्शितोऽस्ति) संख्यावाचकशब्दानां संज्ञायां एव समासः भवेत्, अन्यथा तु विग्रहः (असमस्तं पदं प्रयोज्यं) स्यात्' अयं नियमः बहोः कालात् शिथिलीभूतः "द्वित्रवर्षेभ्यः स अयं नियमः प्रचलितः", पञ्चवर्षेभ्यः संस्कृतछात्र संख्यान्यूनीभूता, "सप्तवर्षैःआचार्यपरीक्षान्तं अध्ययनं सम्भवति 'परीक्षोत्तीर्णस्य मे व्यतिगतानि विंशतिवर्षाणि', इत्यादयः प्रयोगाः व्याकरणमर्मविदां पण्डितानां अपि लेखनीतः निर्गच्छन्ति। अनद्यतने एव भूते लङ् प्रयोक्तव्यः, अद्यतने तु सामान्यभूतः लुङ् इत्यादि संरक्षा मार्मिकाणां अपि वैयाकरणानां प्रयोगवाहे न दृष्टा। "उभयप्रदिष्ट धातुषु कर्तृगामिनि फले आत्मनेपदं, परगामिनि परस्मैपदं" अयं विचारः वैयाकरणपुङ्गवानां अपि गोष्ठ्यां न अपेक्षि

सम्प्रति। कामं अत्र सूक्ष्मसमवेक्षणं अपि अकारि। ये केचित् अंगुलिगणनीयाः पण्डितविशेषाः, तेषां अपि "अमुकस्य नैरुज्यार्थं त्र्यक्षरमृत्युञ्जयमन्त्रजपं अहं करिष्ये" इति संकल्पे एव आत्मनेपद-परस्मैपदयोः भेद-विभेदः विलोकितः।

पञ्चाम्बुप्रदेशीयैः शिक्षाकार्यकर्तृभिः सारल्यं उपलक्ष्य बहुभ्यः वर्षेभ्यः पूर्वतः एव 'लट्-लृट्-लङ्-लिङ्' "इति चत्वारः एव लकाराः (वर्तमान-भविष्यत्-भूतकालार्थं प्रेरणा-सम्भावनाद्यर्थं च) स्वीकृताः, अन्ये गलहस्तिताः। शब्दयोः मिथः सन्धिः उल्लंघितः। स अयं प्रवाहः प्रवाहस्वाभाव्यात् अन्यान्यप्रदेशेषु अपि तडिद्वेगेन संप्रवृत्तः। बहुप्रदेशीयेषु पाठ्यपुस्तकेषु तत् इदं प्रत्यक्षीक्रियतां। एवंविधसौकर्यविचारेण सह स्वतन्त्रजीवानां, अन्यानि अपि प्रारब्धानि स्वातन्त्र्याणि। ततः च भारतस्य सर्वेषु अपि प्रान्तेषु संस्कृतभाषां इमां प्रचुरं प्रचरन्ती विलोकयितुं इच्छतां संस्कृतसेविनां केषांचित् स अयं विचारः प्रादुरभूतः यत् पण्डित-समाजः एव यदि सर्वं पूर्वापरं संस्कृतस्य अभ्युदयं विचार्य संस्कृतभाषायाः संव्यवहारे सारल्योपायान् प्रचारयेत् तर्हि सम्यक् भवेत्। अनर्गलं स्वातन्त्र्ये संप्रवृत्ते तु सुस्पष्टं अव्यवस्था प्रादुर्भवेत्।

दक्षिणभारते ( मद्रासप्रान्ते ) अन्यान्यप्रदेशापेक्षया संस्कृत भाषायाः भूयान् प्रचारः, उच्चारणादिषु शुद्धता समवेक्ष्यते। संस्कृतभाषासम्बन्धिषु बहुषु विषयेषु तत्-प्रदेशीयविदुषां मुखं ईक्षन्ते अन्यान्यप्रदेशीयाः विद्वांसः। उत्तरप्रदेशे स अयं विचारः साम्प्रतं प्रवृत्तः। किन्तु दक्षिणपथे सारल्यविचारः कतिपयवर्षेभ्यः पूर्वतः एव पण्डितसमाजे प्रावर्तत। 'ब्रह्मविद्या' नामके 'आड्यारलाइब्रेरी' मुखपत्रे "संस्कृतग्रन्थविघटनं" इति शीर्षकः निबन्धः सी० कुन्हन

राजा एम० ए० डी० फिल० महोदयस्य प्रकाशितः अभूत् पुग
महाभागः अयं राजस्थाननिवासिनां अपि न अपरिचितः किय
कालात् पूर्वं अयं महाभागः अनेकानेकदुर्लभग्रन्थरत्नपूर्णस्य रा
हर्म्यपुस्तकालयस्य सूच्यादिनिर्माणव्यवस्थार्थं जयपुरनगरे स
गमत्। अस्तु, व्याकरणसम्बन्धी विषयः सुललितेषु पद्येषु निबद्ध
किन्तु आद्यन्तयोः वक्तव्यं आङ्गलभाषया प्रोदीरितं इति त
संस्कृतेन अनूद्य संस्कृतपण्डितानां सारल्यविचारे सौकार्योपस्था
नार्थं अधः समुद्ध्रियते।

डा० कुनहन राजा ऐम० ए, डी० फिल;
संस्कृताध्यक्ष, आन्ध्रविश्वविद्यालय, महाभागस्य
लेखः

## (२) संस्कृतग्रन्थिविघटनं

भारते भाषायाः प्रश्नः अद्य परां काष्ठां प्राप्तः। आंग्लभा
या अद्ययावत् भारतस्य राज्यभाषाऽऽसीत्, सा विजेतृणां कारण
आसीत्। भारते सा सर्वजन-व्यवहारभाषा, संलापयोगिनी का
नासीत्। परन्तु विजितत्वात् अस्माभिः सा राजकीयकार्येषु व्य
वहार्या अभवत्। अद्य विजेतारःगताः। ततश्च का अस्मा
भाषा स्यात् इति प्रश्नः महत्त्वं आपन्नः, अद्य एतद्विषये भूय
मतभेदः। तत्र च विभिन्नभाषाणां कृते लोकानां श्रद्धा। अस्मि
मतभेदे च भावावेशः एव मुख्यं कारणं, न तु विवेकः। म
संस्कृतभाषायाः पक्षपातः सदैव कृतः। परं तां राष्ट्रभाषां निर्मा
इतरथा वा मया केवलं भावावेशकारणात् न पक्षपातः कृतः
संस्कृतं यदा भारते सार्वजनिक शिक्षा योग्या भाषा स्यात् इति श्र
कतिपयाः आपत्तयः क्रियन्ते। "संस्कृतं अतिकठिनाभाषा, संस्कृ

मृतभाषा, यदि इयं सार्वजनिक-शिक्षायां अनिवार्या क्रियेत, तर्हि सार्वजनिकी अवनतिः भविष्यति। केवलं इयं भूतकालस्य भाषाऽस्ति।" इत्यादयः। अस्मिन् निबन्धे अहं संस्कृतभाषायाः प्रायोगिकानि काठिन्यानि सरली-कर्त्तुं कांश्चित् परिष्कारान् (सुधारान्) प्रस्तौमि। प्रत्येकं भाषा कानिचन कठिनानि, कानिचित् च सरलानि तत्त्वानि रक्षति। उपायाः सन्ति, यैः भाषाणां कठिनताः दूरीकर्त्तुं शक्याः, सरलतानां च लाभः प्राप्तुं शक्यः। अहं वाञ्छामि यत् अद्य संस्कृतभाषा युगस्य अनुरूपा निर्मीयेत। युगस्य इच्छानुसारं तस्याः सरलं स्वरूपं सम्मुखी-क्रियेत। तत्र च कठिनानां प्रयोगाणां अपसारणाय सरलकरणाय च उपायाः आश्रीयेरन्। संस्कृते व्याकरण-प्रयुक्तं काठिन्यं अवश्यं विद्यते। तत्र केषांचन नियमानां शिथिली-करणं आवश्यकं स्यात्। लौकिकीनां अन्यासां भाषाणां च शब्दाः स्वातन्त्र्येण संस्कृते ग्राह्याः निर्मेयाः वा। मया अस्मिन् प्रस्तावे अस्माकं प्राचीनानां शास्त्रकाराणां पद्धतिः एव आश्रिता। विचारार्थं इदं अहं प्रस्तौमि इति—

संस्कृतस्य व्याकरणं दृढ़बद्धं पुरा कृतं,
काठिन्यभीताः अपावर्तन्ते अद्य जनाः ततः।
एनं ग्रन्थिं श्लथीकर्त्तुं उपादेयः परिश्रमः,
संस्कृताभिमुखान् बालान् पुनः च आक्रष्टुं इच्छुभिः।
पूर्वाचार्यैः शास्त्रक्लृप्तात् अद्य व्याकरणाध्वनः,
बहूनां पण्डितानां तु व्यतियानं न सम्मतं।
अचिरात् आर्षमार्गस्य उच्छेदः वा स्यात् उत अधुना,
ईषत् व्यतिक्रमः कार्यः अस्माभिः तस्य एव रक्षणे।
इति एवं विषयग्रस्ते विदुषां अपि चेतसि,
संमोहस्य विमर्दाय विचारः क्रियते मया।

स्खलितानि एव भाषाणां वृद्धिं कुर्वन्ति भूरिशः,
इदानीं व्यतियानं यत्, तत् पश्चात् नियमः भवेत्।
धातूनां तावत् उभयपदिनां कर्तृगे सति
फले, प्रयोगः विहितः सूत्रेण हि आत्मनेपदे।
एतादृशः तु नियमः प्रयोगे न उपलभ्यते,
तथैव लिङ्गेषु अपि अस्ति विहितेभ्यः व्यतिक्रमः।
एवमेव समासेषु यङ् लुंगादिषु अपि क्वचित्,
तद्धितेषु कृदन्तेषु दृश्यते विधिभञ्जनं।
लङ् अनद्यतने लिट् च परोक्षे सूत्रसम्मतौ,
नियमः अयं प्रयोगेषु न तु प्रायेण दृश्यते।
नपुंसके पुंसि वा किं त्रिदिवेति पदं भवेत्,
वेदे नपुंसकं दृष्टं पुल्लिङ्गं अमरोदितं।
अगार शब्दः अमरेण नपुंसकं उदीरितं,
लुप्तागारौ इति मनौ पुलिङ्गः अपि प्रयुज्यते।
रामायणे भारते च कालिदास कृतिषु अपि,
अपाणिनीयाः वर्त्तन्ते प्रयोगाः विविधाः तथा।
उत्सृष्टसूत्राः सन्ति एव प्रयोगाः आर्षसंज्ञकाः,
संमताः शास्त्रकाराणां साधवः स्वीकृताः ततः।
कर्मणि अदृष्टैकफले शास्त्रं एव प्रयोजकं,
दृष्टे फले तु अनुभवः अपि अस्ति कर्मनियामकः।
शास्त्रं वस्तुस्थितिं ब्रूते प्रायेण विषये निजे,
प्राक् कालेषु उपलब्धां वा तत्तत्कालेषु लक्षितां।
वृद्धौ सत्यां केचित् अंशाः, चीयन्ते अन्ये तु केचन,
भवन्ति उपचिताः च, अनुवर्त्तन्ते स्थायिनः अपरे।

अयं स्वभावः लोके अस्मिन् विषयान् अखिलान् अपि,
परिगृह्णाति, नैवं स्यात् संस्कृतस्य अपवादतः ।
ईकारान्तः रात्रिशब्दः प्रायः वेदेषु दृश्यते,
देवासः इति देवेभिः, इति रूपे च पाक्षिके ।
गमध्यै गन्तवै च इति रूपाणि विविधानि अपि,
दृश्यन्ते वेदसूक्तेषु कृदन्तानि इतराणि च ।
नष्टानि एतानि रूपाणि पश्चात्कालीनसंस्कृते,
रूपाणि नूतनानि अन्यानि आविर्भूतानि कानिचित् ।
कालिदासादि कालेषु प्रसिद्धानि पदानि च,
लुप्यन्ते चेत् प्रयोगेषु अर्वाक् काले का क्षतिः भवेत् ।
रूपाणि नूतनानि एवं उदियुः चेत् प्रयुक्तिषु,
पूर्वग्रन्थेषु अदृष्टानि किं तत् प्रक्षोभकारणं ।
कस्य वा अंशस्य अपचयात् रूपहानिः भविष्यति,
भाषायाः कस्य वा नाशः संवृद्धौ वा पर्यवस्यति ।
अत्र कर्त्तुं नैव शक्या क्लृप्तिः शास्त्रेण केनचित्,
शरणं केवलं तत्र कवयः अन्ये च पण्डिताः ।
विशेषेण विशेष्याणां क्रियाकर्त्रोः च सर्वदा,
वचनादिषु एकरूप्यं रक्षणीयं प्रयत्नतः ।
संस्कृतं भाविकाले अपि लभते यदि पोषणं,
स्वातन्त्र्यं बहुशः अस्माभिः कल्पनीयं प्रयुक्तिषु ।
ईदृशः च उद्यमः द्वेधा निर्वर्त्त्यः संस्कृते अधुना,
संचयात् सुग्रहांशानां भ्रंशे लोचनमीलनात् ।
शर्ववर्मा वोपदेवः च आचार्यः शाकटायनः,

हेमचन्द्रः च भिन्नानि शब्दशास्त्राणि चक्रिरे ।

रूपावतारे कौमुद्याः युगले प्रक्रियामुखे,
सर्वस्वे च परित्यक्तः सूत्राणां आदिमः क्रमः।
पाणिन्युपज्ञे शास्त्रे ये ग्रन्थयः क्लेशहेतवः,
तेषां विश्लथनाय एवं आचार्याणां परिश्रमः।
आचार्यपारम्पर्यस्य रक्षायां दीक्षिताः वयं,
किमर्थं वा विषीदामः ग्रन्थिसंततिवेष्टिताः।
शब्दाः सामान्यविधिभिः निष्पन्नाः सन्ति भूरिशः,
प्रायेण च एते भाषायां बालानां अपि सुग्रहाः।
'अस्मत्' शब्दः तथा 'युष्मत्' शब्दः सदृशरूपिणौ,
रूपाणि यत्तदादीनां समानानि एव कृत्स्नशः।
प्रायेण अजन्तरूपाणि सामान्यविधिगोचराः,
हलन्तरूपवत् क्लेशं ग्रहणे जनयन्ति न।
अकारन्ताः तत्रशब्दाः पुंसि आदन्ताः तथा स्त्रियां,
'तद्' आदयः सर्वनामशब्दाः प्रायः सरूपकाः।
इकारान्तः तथा च उकारान्तः पुंसि एकरूपिणौ,
ईकारान्तः स्त्रियां ऊकारान्तः च अपि तथाविधौ।
रूपं नपुंसके प्रायः पुँल्लिङ्गं अनुवर्त्तते,
तृतीयातः, द्वितीया च सदा प्रथमया समा।
लिंगभेदात् रूपभेदः हलन्तेषु न दृश्यते,
विविधानां हलन्तानां रूपे सूक्ष्माः मिथः भिदाः।
तिङन्तेषु अपि लट् लङ् च लोट् लिङ् लृट् न दुर्ग्रहाः,
प्रथमे पुरुषे लिट् च प्रारिप्सूनां न दुर्ग्रहः।
तथैव आद्यं विकरणं चतुर्थं षष्ठं एव च,
दशमं रूपनिष्पत्तौ ललितं हि एषु संमतं।

लृङ्लुटौ विरलौ दृष्टौ लुङ् च प्रायेण वर्ज्यते,
एवं सामान्यतः सिद्धाः शब्दाः न उद्वेगहेतवः ।
प्रायः तिङन्तरूपाणि उत्सृजन्तः च कृदाश्रयाः,
प्रयोगान् सुगमान् कर्त्तुं बालानां शक्नुमः वयं ।
पुराणानि इतिहासाः च पञ्चतन्त्रं कथाः तथा,
काव्यानि कालिदासादिकवीनां एवमादिषु ।
सामान्यविधिनिष्पन्नाः ललिताः सुगमाः अपि,
शब्दाः एव उपलभ्यन्ते न च ते श्रमकारिणः ।
एकस्य अर्थस्य पर्यायेषु अनेकेषु, उपलभ्यते,
छित्राणां एव सत्कारः, काव्येषु, अन्ये तु न आदृताः ।
यावतां एव रूपाणां प्रायेण अवगमात् भवेत्,
उद्वेगकारणं नैव बालानां ग्रन्थशीलनं ।
उच्चित्य उच्चित्य तावन्ति विहाय अन्यानि यत्नतः,
लघुव्याकरणं किञ्चित् निर्मातुं शक्यते बुधैः ।
अक्लिष्टमार्गेण अनेन भाषा-द्वार-प्रवेशिताः,
क्रमेण बालाः व्युत्पन्नाः भविष्यन्ति श्रमं विना ।
सामान्यतः परिचये लब्धे तेषां च संस्कृते,
पश्चात् विशेषरूपाणां ग्रहणं स्यात् न दुष्करं ।
आत्यन्तिकक्लेशहीना भाषा काऽपि न विद्यते,
स्वभावतः न वा काऽपि आपाततः क्लेशसंकुला ।
क्लेशः केषुचित् अंशेषु लालित्यं इतरेषु च,
सर्वासां एव भाषाणां औत्सर्गिकः क्रमः ।
उक्ता इह सरला रीतिः प्राक्तनग्रन्थशीलने,

प्रयोगे संस्कृतस्य अस्ति वाच्यं किञ्चित् ततोऽधिकं ।

अपहानाय पीड़ानां कल्प्यन्ते नियमाः सदा,
ये अस्मान् वध्यन्ति नियमाः ते क्षेप्तव्याः सुदूरतः।
येषां भङ्गात् न अर्थसन्देहः, दृष्टाः सार्वात्रिकाः च ये,
तादृशेषु एव नियमेषु अस्तु भक्तिः अचञ्चला।
आत्मनेपदेत्यादि–विभागे दशधा स्थिते,
भेदे विकरणानां च तथा कृत्—तद्धितेषु च।
सनाद्यन्तेषु रूपेषु स्त्रीप्रत्ययविधिषु अपि।
कारकाणां विशेषोक्तौ समासान्तेषु सन्धिषु।
अस्पष्टलिङ्गभेदेषु सूक्ष्मेषु अन्येषु कुत्रचित्,
यदि भ्रंशाः प्रयोगेषु, मील्यतां लोचने तदा।
स्वैरं एव अन्यभाषाभ्यः, स्वीकार्या अन्यपदावलिः,
यथायोग्यं च विपरिणता संस्कृत–वाङ्मये।
नूतनानां आशयानां अक्लेशेन प्रकाशने,
कालेषु एषु अवतीर्णानां एषा एका सरला गतिः।
भाषायाः ग्रन्थिविश्लेषे निगलानां च मोचने,
पूरणे वाङ्मयस्य अपि सन्ति एवंविविधाः क्रमाः।
द्वारं समूलं अपमार्जितकण्टकं चेत्,
पादद्वयात् विगलिता यदि शृङ्खला चेत्।
सम्पूरितं नवपदैः अपि वाङ्मयं चेत्,
स्यात् संस्कृतं च, निखिलैः उपभोगयोग्यं।

---

एकं अन्यत् महत्वपूर्णं मतं
पं० स० ना० कुलकर्णी महाभागस्य



यथा कविशिरोमणि पं० मथुरानाथ शास्त्री जयपुरनिवासी

अस्माकं पूर्वपरिचितः विद्वान्, तथैव पं० सा० ना० कुलकर्णी अपि अस्ति। पं० मथुरानाथशास्त्री इदानीं यावत् मध्यकालीनां पंडितानां लेखनशैलीं अनुसरतिस्म। सौभाग्यं भारतीयानां संस्कृतज्ञानां तथा भारतस्य, विश्वस्य अपि, यत् अस्मिन् महाभागे एतादृशं महत् परिवर्तनं सञ्जातं, येन प्रेरितः स एतादृशं महत्वपूर्णं लेखं लिखितवान् स्वपत्रे 'भारती' इति नामके। अयं महाभागः उत्तर-भारतीय—पंडितेषु एकः सुप्रसिद्ध-विद्वान्, यत् 'संस्कृतरत्नाकर' सम्पादकमहाभागस्य टिप्पणीतः स्पष्टी-भयति। स उत्तरभारतस्य प्रातिनिध्यं करोति। एवमेव डा० कुनहन राजा दक्षिण-भारतस्य एकः महाविद्वान्। स दक्षिणभारतस्य सहजतया प्रातिनिध्यं करोति। तथैव पं० स० ना० कुलकर्णी महाभागः महाराष्ट्रस्य तथा पश्चिमभारतस्य प्रातिनिध्यं करोति। पूर्वीयभारते वङ्गादि-प्रदेशेषु तु इदानीं यावत् अन्धकारः इव प्रतिभाति, यतोहि तत्रत्याः पंडिताः कदाचित् विचारयन्ति एव नहि, यत् केन मार्गेण संस्कृतभाषायाः संस्कृतसाहित्यस्य च उद्धारः कार्य्यः। वङ्गप्रदेशेन भारतस्य 'राष्ट्र-गीतं' जगत्प्रसिद्धं 'वन्देमातरम्' इतिनाम दत्तं आसीत्, येन प्रेरिताः भारतीयाः 'स्वातन्त्र्यं' अपि प्राप्तवन्तः, परन्तु स प्रदेशः असमादयश्च भाषाधारेण 'महाभारते', कौरवपांडवाः इव, प्रवृत्ताः अवलोक्यन्ते भारतनाशाय। तेषु 'चिन्ता' नास्ति, यत् कथं संस्कृतस्य संस्कृतसाहित्यस्य च उद्धारः कार्य्यः, येन 'अमरभारती' संस्कृतं भूयोऽपि भारतस्य मातृ-राष्ट्र-राज-शिक्षाभाषा भूत्वा सर्वकालाय क्षेत्रीयभाषा-समस्यायाः समाधानं कुर्यात्। सूर्यदेवस्य सर्वप्रथमं प्रकाशगते भागे अयं अज्ञानान्धकारः इति चित्रं। कदापि ? विद्युत्प्रकाशवत् तत्र अपि प्रकाशः जायते, यथा वङ्गप्रदेशीयानां कालि-

काता-नगरे १६५८ ई० वत्सरे 'अखिल-भारतीय-संस्कृत-राष्ट्र-भाष
सम्मेलनस्य' आयोजनं, यत्र इदं निर्णीतं, यत् संस्कृतं भारत
'राष्ट्र-भाषा' स्यात् ।

परन्तु प्रायः असम-वङ्गादिपूर्वीयप्रान्तेषु प्रान्तीयताभाव
प्रामुख्यं भजते, अतः तत्रत्याः जनाः केवलं प्रान्तीयभाषादि-प्रश्ने
सदैव व्यस्ताः तिष्ठन्ति ।

विशेषचिन्तायाः अयं विषयः, यत् प्रायः वङ्गादिप्रदेशे
संस्कृतग्रन्थानां लेखनं प्रकाशनं च वङ्गभाषामाध्यमेन क्रियते,
संस्कृतोच्चारणे महान् भेदः अवलोक्यते । कारणं तु
यत् वङ्गलिपेः संस्कृतलिपितः उच्चारणभेदात् संस्कृतोच्चारे
अवश्यमेव भेदः भवेत् । यदि लिपिद्वये कोऽपि भेदः न स्या
अक्षराणां, आहोस्वित् उच्चारणस्य, तदा पृथक् वङ्गादिलि
किं प्रयोजनं ? वयं अवलोकयामः यत् दक्षिणभारतस्य कति
पयप्रदेशेषु संस्कृतग्रन्थानां प्रकाशनं तत्तत्प्रदेशीयभाषासु क्रिय
क्षेत्रीयभाषाप्रभावेन । इयं परिपाटी अराष्ट्रिया तथा महाहानिकार
यतोहि अनया संस्कृतस्य 'भारतीयस्वरूपं' नश्येत् । भारतव्या
संस्कृतज्ञानं अपि अवरुद्धं तिष्ठेत्, प्रदेशीय-भाषासु संस्कृतग्र
लेखनात् । लिपिभेदः, उच्चारणभेदः, व्याकरणादिभेदः अल्पक
उत्पन्नीभवेत् संस्कृतस्य समूलनाशाय । द्वितीयं संस्कृतस्य लेखनं
केवलं संस्कृतलिपौ एव भवितुं अर्हति यथा पूर्वं निवेदितं । दौर्भा
भारतस्य, यत् अद्य विशुद्ध-भारतीयाः नहि निवसन्ति देशे, अपि
प्रान्तवादिनः, प्रदेशवादिनः, क्षेत्रवादिनः विद्यन्ते, येषां कृते क्षेत्री
भाषाः, क्षेत्रीयलिपयः 'सर्वस्वं' इति प्रतीयते । 'भारतीया भा
भारतीया लिपिः' तु एतेषां घोरप्रान्तवादिनां कृते काऽपि विद

एव नहि! विदेशीया आंग्लभाषा तेषां 'द्वितीयं सर्वस्वं' येन मोहिताः ते किमपि 'भारतीयं' नहि अवलोकयन्ति भारते, इमे कथित-भारतीयाः, देशहितैषिणः नेतारश्च। एतेषु कथित-भारतीयेषु इयं अपि बुद्धिः सद्बुद्धि वा नास्ति, यत् ते सर्वासां क्षेत्रीय-भाषाणां 'एकां संस्कृतलिपिं' स्वीकुर्युः, येन भारतीयसंविधाने गणितासु प्रायः १६ क्षेत्रीयभाषासु साम्यं सम्पद्येत, येन परस्परं ज्ञानप्रसारः, परस्परं विचार-विनिमयः सुलभः स्यात्। यदि कथित-भारतीयाः वस्तुतः राष्ट्रवादिनः, निखिलभारतस्य शुभचिन्तकाः, तदा न्यूनातिन्यूनं एका लिपिः तु भवेत् एव सर्वासां क्षेत्रीयभाषाणां, संस्कृतस्य एव अंशरूपाणां। देववाण्या सह कथं एतादृशः ईर्ष्या-द्वेषः, यस्यां सर्वः भारतीयधर्मः, भगवतः वेदान् आरम्भ विद्यते, तथा यस्य अध्यात्मवादेन एव भारतगौरवं संसारे तिष्ठति। कष्टं, कष्टं, यत् अस्माकं शत्रुभिः, आंग्लादिभिः विदेशीयैः स्वार्थिभिः, इतिहासादि-ग्रन्थेषु लिखितं, यत् 'भारतं न एकः देशः, अपितु एकः उपमहाद्वीपः, यत्र बहूनि राष्ट्राणि, बह्वयःजातयः, असंख्यभाषाः विद्यन्ते' इति 'वेदवाक्यं' इव स्वीकृतं एतादृशैः भारतीयैः आंग्ल-भाषा-सभ्यतादि-विमोहितैः, संस्कृतज्ञानविरहितैश्च। अस्माकं देशस्य आंग्लसभ्यताविमोहितानां, भारतीय-संस्कृतिज्ञानविरहितानां अज्ञा-नस्य पराकाष्ठा इयं।

विरलाः, पं० मथुरानाथशास्त्री, डा० कुनहन राजा, पं० स० ना० कुलकर्णी सदृशाः, ये अस्यां विपरीतपरिस्थितौ चिन्तयन्ति, यत् संस्कृतभाषायां के सुधाराः आवश्यकाः, येन सा 'अमरभारती संस्कृतं नाम' भूयोऽपि जीवेत् लोके अस्माकं भारतीयानां, भारतस्य च गौरवाय। तेषां सुधार-प्रस्तावाः पुरतः विद्यन्ते, काञ्चित्

व्याख्यां न अपेक्षन्ते। पं० स० ना० कुलकर्णी महोदयस्य सुधा
प्रस्तावाः अधः दीयन्ते। एतेषु सुधारप्रस्तावेषु प्रायः तत्सर्वं विद्यं
यत् मया एतेषां सर्वेषां संस्कृत-सुधारकाणां पूर्वं, सर्वप्रथमं
लिखितं स्वग्रन्थे 'कीदृशं संस्कृतम् ? इति नामके १६४६ ई० वर्षे
प्रकाशते। एतेषां महापण्डितानां समर्थनेन मम पक्षः प्रबलतर
जातः। कदाचित् 'युगान्तरं आनीतं' मम ग्रन्थेन संस्कृत-संसा
प्रकाशनकालात् अद्य यावत्। विद्वांसः अत्र प्रमाणं।

यथा पूर्वं निवेदितं 'कीदृशं संस्कृतम् ?' ग्रन्थे मया 'आधुनिक
संस्कृतस्य' एकः दृढाधारः दत्तः। तद्ग्रन्थः मया प्रायः ८ वर्षाणि
भावत् अनुसंधानं कृत्वा लिखितः प्रकाशितश्च। अस्मिन् ग्रन्थे म
'आधुनिक-संस्कृतस्य अन्तिमं रूपं' दीयते, येन संस्कृतं सद्यः 'भा
राष्ट्र-राज-शिक्षाभाषा' भवेत् भारते पूर्ववत्। अत्र अपि विद्वां
प्रमाणं। अस्य ग्रन्थस्य विषयेऽपि मया प्रायः १० वर्षाणि याव
अनुसंधानं कृतं।

पं० स० ना० कुलकर्णी महाभागस्य प्रस्तावाः।

## संस्कृत-भाषायाः सुलभीकरणं

साधारणं-जनानां सुख-बोधाय संस्कृत-भाषा सुलभा करणीया
यदा भाषायां सामान्य-जनानां प्रवेशः भवेत्, तदा संस्कृतभाषाय
यथार्थं रूपं तैः लीलया ज्ञातं भवेत्। अनेन हेतुना कास्च
सूचनाः विचार-शीलानां संस्कृत-पण्डितानां पुरतः विमर्शा
स्थाप्यन्ते। एतासु सूचनासु प्रथमा सूचना द्वितीया च सूचना श
विमर्शं अर्हति :—

(१) आत्मने-पदस्य उपयोगः वर्जनीयः। कर्मणि प्रयोगस्य कृ
केवलं स रक्षणीयः। ये धातवः उभयपदिनः सन्ति ते

परस्मैपदीनि रूपाणि केवलं प्रयोक्तव्यानि। यथा नी, वह, कृ, चि इत्यादि। केचन धातवः केवलं आत्मनेपदिनः भवन्ति। एते धातवः परस्मैपदिनः मन्तव्याः प्रयोक्तव्याः च यथा सह्, बाध, इत्यादि।

(२) द्विवचनस्य कृते बहुवचनस्य प्रयोगः करणीयः, यथा राम-लक्ष्मणौ इति अस्मिन् स्थाने राम-लक्ष्मणाः। राम-लक्ष्मणाः गताः गच्छति वा। 'द्वयं' इति अस्य उपयोगः द्विवचनस्य कृते यत्र कर्तुं शक्यते तत्र अवश्यं करणीयः, यथा 'बालौ आगतौ'='बालद्वयं आगतं।'

(३) सरल-सुलभ-सन्धीनां एव उपयोगः, न तु क्लिष्टानां। तच्छास्त्रं (तत्+शास्त्रं); तस्मै इह, तस्मायिह (तस्मै+इह), इत्यादि। एकाक्षर-शब्दस्य सन्धिः बह्वक्षर-शब्देन सह यथेच्छं साधनीयः। यथा नास्ति (न+अस्ति) कोऽपि (कः+अपि), पुनश्च (पुनः+च)। वाक्ये त्रयः शब्दाः सन्धिना एकत्र न सन्धेयाः।

(४) हलन्त-शब्दस्य सन्धिः परस्तात् आगतेन स्वरादिशब्देन सह न करणीयः। यथा कलेवरमस्ति (कलेवरं+अस्ति)।

(५) क्रिया-पद-रूपाणां स्थाने निष्ठाप्रत्ययान्तानां रूपाणां अधिकांशेन उपयोगः करणीयः। यथा शरणं अगच्छन्= शरणं गताः।

(६) समासे शब्द-त्रयात् अधिकानां शब्दानां समासः न करणीयः। सामासिकशब्देषु पदयोः मध्ये पृथग्भाव-बोधकं चिन्हं '—' स्थापनीयं। यथा समर-भीमः, भुवन-त्रय-तिलकः।



(७) प्रदीर्घ-वाक्यानां उपयोगः न करणीयः। त्रिभ्यः क्रियापद-

रूपेभ्यः अधिकानां क्रियापदानां उपयोगः एकस्मिन् एव वा
मा भवतु।

(८) क्लिष्टानां पाण्डित्य-प्रदर्शकानां शब्दानां स्थाने सुलभानां, स
साधारणजनैः वारं वारं उपयोज्यमानानां शब्दानां प्रयो
करणीयः। निश्चप्रचं (निश्चितं), अकूपारः (समुद्रः)।

(९) अपरिचित-शब्दस्य स्थाने परिचितशब्दस्य प्रयोगः ग्राह्य
कीलालं (जलं), धुनी (नदी)।

(१०) अधो-लिखितानां लकाराणां एव उपयोगः करणीयः ल
(वर्तमाने) नयति, लङ् (भूते) अनयत्, लृट् (भविष्य
नेष्यति, लोट् (आज्ञायां) नय, लिङ् (विधौ) नयेत्, लृ
(संकेते) अनेष्यत्।

यत् यत् अर्थ-ग्रहणं कठिनीकरोति तत् तत् लेखने भाषणे
परिहर्तव्यं। एष सर्व-साधारणः नियमः। एवं निय
मनसि कृत्वा यत् भाषा-लालित्यं साधयितुं शक्यं,
अवश्यं साधनीयं। परन्तु भाषा-लालित्यस्य कृते अ
नियमस्य उल्लंघनं कृत्वा भाषा-सुख-बोधस्य बलिः न देयः
सुखबोधः भवति भाषायाः आत्मा, लालित्यं अलंकार
पाण्डित्यं तु स्व-सुख-पूर्त्यै कृतः अत्याचारः। (
ना० कुलकर्णी)।

अनेन पं० कुलकर्णी महाभागेन नागपुरनिवासिना न केव
संस्कृतविषये सुधार-प्रस्तावाः दत्ताः, अपितु 'सरल-सुबोध-वा
साहित्यं' अपि रचितं प्रकाशितं च, यत्सर्वं केनाऽपि प्राप्तुं शक्य
'संस्कृत-भवितव्यम्' इति साप्ताहिकसंस्कृतपत्रस्य कार्यालयात्
नागपुरं इति स्थानात्। इदं संस्कृत-पत्रं 'आधुनिक-संस्कृत-रीत्या

प्रकाश्यते । मम 'कीदृशं संस्कृतम्' इति ग्रन्थस्य प्रकाशनान्तरं 'बहूनि संस्कृत-पत्राणि साप्ताहिकादीनि' प्रकाशतां गतानि, एवमेव नवीन-संस्कृत-साहित्यं अपि, यस्मिन् सम्बन्धे अहं आगामिनि अध्याये यथास्थानं निवेदयिष्यामि ।

यद्यपि एतेषां त्रयाणां सुधारकाणां मतेषु यत्र तत्र भेदः विद्यते । (स्वाभाविकं इदं सर्वं) तथापि बहु-साम्यं विद्यते । प्रायः क्रान्तिकारि-प्रस्तावाः इमे सन्ति । परन्तु संस्कृतव्याकरणस्य काऽपि हानिः न स्यात्, यथा डा० कुनहनराजा महाभागेन स्व-पद्येषु स्पष्टीकृतं । 'किमपि स्वैरं' मया रचितं तस्यमहाभागस्य शब्देषु । यत्किञ्चित् तत्र गद्यं पद्यं विद्यते, तत् मया सर्वं 'सन्धि-रहितं कृतं, येन सुलभं स्यात् सर्वेषां संस्कृतज्ञानां । सर्वस्मिन् ग्रन्थे मया अनेन प्रकारेण क्रियते सुबोधाय भाषा-सारल्याय ।

चतुर्थाध्याये मया स्व-प्रस्तावाः संस्कृतस्य सुधार-विषये दीयन्ते । अहं न केवलं प्रस्तौमि, अपितु तदनुसारं लेखनं अपि करोमि । अयं ग्रन्थः प्रमाणं ।

---

# पंचमः अध्यायः

## संस्कृतभाषायाः सुधारविषये मम प्रस्तावाः

गताध्याये मया लिखितं, यत् मया १६४६ ई० संवत्सरे ए
ग्रन्थः "कीदृशं संस्कृतम् ?" इति नाम रचितः प्रकाशितश्च। अ
ग्रन्थः मया प्रायः ८--१० वर्षाणां अनुसन्धानन्तरं प्रकाशि
भारतस्य प्रायः सर्वैः सुप्रसिद्धपंडितैः सह सम्यक् विचार्य। म
अस्मिन् ग्रन्थे तेषां बहूनां पंडितानां मतानि दत्तानि सन्ति, यैः स
अयं विषयः विचारपथे आनीतः। अस्य ग्रन्थस्य प्रधानविष
विद्यते, यत् केन मार्गेण संस्कृतभाषायां सारल्यं सुबोधत्वं च आ
येत, येन सा भाषा अस्य देशस्य 'मातृ-राष्ट्र-राज-शिक्षाभाषा भवे
पूर्ववत्, विश्वे च विश्वभाषा'। मया गतेषु अध्यायेषु अतक
प्रमाणैः सिद्धीकृतं, यत् संस्कृतभाषा एव सृष्टिकालात् आरभ्य म
भारतकालपर्यन्तं देशे आसीत्। अस्मिन् विषये पिष्टपेषणस्य भू
भूयः आवश्यकता नास्ति। इदं सर्वं तत्रैव पठनीयं।

अस्माकं निश्चितं मतं अस्ति, यत् संस्कृतभाषा महावैज्ञानि
पूर्णा, महोन्नता, महासमृद्धा च विद्यते, यादृशी काऽपि भाषा संसा
नास्ति, तथैव संस्कृतिलिपिः संस्कृतसाहित्यं च। केनाऽ
विदुषा इदं ज्ञातुं शक्यते, यदि स निष्पक्षः स्यात्। पक्षपातकारण
तु किमपि वस्तु, अमूल्यं अनुत्तमं अपि, हीनतमं सिद्धीक्रिये
यथा कोऽपि पक्षपाती भाषाज्ञानविहीनः वा 'अमूल्यं अनुत्तमं
शब्दद्वयस्य अर्थस्य अनर्थं कुर्यात्। स्वभावात् प्रकृतितः संस्कृ

भाषा स्वस्था, परन्तु अस्माभिः स्वार्थिभिः भ्रष्टैः वेदादिशास्त्रज्ञान-विरहितैः रुग्णीकृता, मृतशय्यायां बलात् शायिता। अधिकमांसादि-वर्द्धनं यत् प्रायः सार्धपंचसहस्रवर्षेषु संस्कृतभाषायां महाभारतकाला-नन्तरं जातं, तत्सर्वं मया अस्मिन् ग्रन्थे 'शल्यक्रियया' दूरीकृतं, येन तां 'अमरभारतीं देववाणीं संस्कृतभाषां नाम' पूर्णस्वस्थां अव-लोकयितुं कोऽपि शक्नोति। कायाकल्पः कृतः मम क्षुद्रचिकित्सकेन विदुषां वशम्वदेन।

## का सा शल्यक्रिया चिकित्सा वा प्रस्तावरूपा ?

सौभाग्यं मम, यत् अस्य ग्रन्थस्य प्रकाशनानन्तरं एव, देशे विदेशेषु अपि,प्रस्तावानां अनुसारेण संस्कृतभाषायां सुधारः आरब्धः, यः ग्रन्थस्य प्रायः एकादशवर्षीयजीवनकाले 'स्थायित्व' आप्तवान्। आशासे, यत् अयं सुधारः दिने दिने दृढतरः भविष्यति, येन संस्कृतभाषा अविलम्बेन 'स्वस्थान' आप्स्यति भारतवर्षे विश्वे च, नः पूर्णविश्वासः। प्रमाणं इदं, यत् किञ्चित्कालानन्तरं एव बहूनि पुस्तकानि साप्ताहिकादीनि संस्कृतपत्राणि निस्सृतानि, यानि 'प्रायः आधुनिक-संस्कृतभाषायां' आसन्, सन्ति च, यत् 'उद्देश्यं'अस्माकं अस्य ग्रन्थस्य विद्यते। मया अत्र 'आधुनिक-संस्कृतस्य' 'आधारः' दीयते, येन भाविसंस्कृतभवनस्य निर्माणं सुदृढतमं विनाशरहितं च स्यात् त्रिकालेषु। परन्तु अस्माकं विश्वासः, यत् इदं एव रूपं संस्कृतस्य, यत् अस्मिन् ग्रन्थे विद्यते सुधारैः सह, प्राचीनतमे वैदिकयुगे, अनन्तरं अपि आसीत्, यदा संस्कृतं अस्य देशस्य-अन्येषां च मातृ-राष्ट्र-राज-शिक्षाभाषा आसीत्। काऽपि जीवित-भाषा या भाष्यते जनैः, यया साहित्यं रच्यते, जटिलजटिला दुर्बोधा च भवितुं नहि अर्हति यथा अद्यतनीया संस्कृतभाषा अवलोक्यते

ग्रन्थगता मृतप्राया च। अतः मम कार्यं तु केवलं इदं एव, यत् स
तद् वैदिककालस्य, अनु च, संस्कृत-भाषारूपं 'अन्वेषितं' सर्वप्र
प्रायः दशवर्षाणां अनवरतप्रयत्नेन, परिश्रमेण। मम पूर्णविश्वा
यत् वैदिकभाषायुगानन्तरं अपि एतादृशी संस्कृत-भाषा अन
कालपर्यन्तं भारते विश्वे च आसीत् मातृ-राष्ट्रादिभाषारूपे। इत्थे
पौरुषं मम, यत् अन्येषां अन्वेषकाणां अनुसन्धानकर्तॄणां प्रा
विद्यते सर्वेपुक्षेत्रेषु। उदाहरणार्थं भौतिकवैज्ञानिकानां अन्वेष
कार्यं अवलोकनीयं। ईश्वरस्य सृष्टौ सर्वाणि वस्तूनि प्राकृ
दशायां मिलन्ति। तेषां पौरुषं तु इदं एव, यत्ते तानि वस्तूनि अन्
ष्य संशोध्य च संसारस्य आत्यन्तिकविनाशाय अणुयन्त्रादी
निर्माणपथे आनयन्ति। अतः गर्वः मिथ्या, तथा ईश्वरस्य सत्ता
अविश्वासः मिथ्या, यतोहि प्रायः इमे भौतिकवैज्ञानिकाः नास्तिक
भवन्ति, यथा अद्य अवलोक्यते। अतः ईश्वरस्य लोकस्य नाशा
ते उद्युक्ताः सन्ति सर्वैः लोकैः सह। यदि सर्वेषां मानवा
नाशः स्यात्, तदा क तेषां अपि जीवनं, विज्ञानं च। न केवल
एतत्, अपितु रूसादयः देशाः अर्थात् प्रायः सर्वे कथित-साम्य
वादिनः नास्तिकाः जाताः सन्ति, तथा सर्वं पौरुषं तेषां एव,
ईश्वरस्य, इति उद्घोषयन्ति। अयं एव मार्गः नाशस्य, यत् एते
पूर्ववर्तिभिः रावणादिभिः अधिकवैभवसम्पन्नैः गृहीतः आसीत्
परिणामे ते सर्वे नाशं गताः, अन्येऽपि तेषां अनुगामिनः नाशमा
गच्छेयुः, इति त्रिकालसत्यं। अतएव अनुसन्धानस्य अन्वेषण
गर्वः मिथ्या इति शिक्षा।

अत एव मया तु कोऽपि मिथ्या गर्वः नहि क्रियते, अपि
कृतज्ञः अहं ईश्वरं सर्वज्ञं सर्वशक्तिमन्तं प्रति, तथा संस्कृतविदु

प्रति, येषां सर्वेषां कृपया अहं संस्कृतस्य आत्यन्तिोद्धाराय समर्थः जातः । केवलं अन्तरं इदं, यत् अहं रचनात्मकं कार्यं करोमि, तथा इमे वैज्ञानिकाः अद्य नाशकार्यं कुर्वन्ति । अस्य कथनस्य अद्य महती आवश्यकता विद्यते, यतोहि दलद्वयं एकं अमेरिकाप्रमुखतः द्वितीयं रूसप्रमुखतः युद्धाय सन्नद्धं तिष्ठति, कौरवाः पाण्डवाः इव, लोकनाशाय । इमे सर्वे पूर्वलोकेतिहासेन शिक्षा गृह्णीयुः इति विनम्रनिवेदनं लेखकस्य, येन लोकनाशः मा भवेत् इति हार्दिकं । हिटलरेण अपि जर्मनविश्वसाम्राज्यं उत लोकनाशः विचारितः आसीत्, परन्तु येन केन प्रकारेण विश्वनाशः न जातः, अतः

'भगवता विधात्रा यदेव विधीयते तत्सर्वं एव शुभाय'

इति मत्वा, लोकनाशस्य, परिणामे, वेद-वेदवाण्याः संस्कृतस्य च नाशचिन्तां विहाय 'स्वर्णं इव संस्कृतं भूयोऽपि नवपात्रेषु ददामि', येन वेदादिशास्त्ररक्षया विश्वरक्षा सम्भवेत्, यस्य नाशाय भौतिक–नास्तिक–वीराः उद्यताः सन्ति । वयं लोकरक्षकाः वेद-धर्मावलम्बिनः, इमे वैज्ञानिकाः, प्रायः नास्तिकाः, लोकनाशकाः, अतः अवलोकनीयं के विजयिनः भवन्ति, वयं, ते वा ?

"सत्यं एव विजयते, वेदः एव विजयते,
वेदवाणी एव विजयते, ईश्वरः एव विजयते"

इति मनसि निधाय तान् प्रस्तावान् महत्त्वतारतम्येन संस्कृत-संसारस्य पुरतः संस्थापयामि । इमे वस्तुतः 'केवलं प्रस्तावाः' नहि विद्यन्ते, अपितु प्रायः सर्वैः विद्वद्भिः 'स्वीकृताः' अपि विद्यन्ते, विशेषतसा तैः, येषां अयं विश्वासः, यत् संस्कृतमेव अस्य देशस्य 'मातृ-राष्ट्र-राज-शिक्षाभाषा' स्यात् पूर्ववत्, विश्वे च विश्वभाषा । गताध्यायस्य त्रिपण्डितान्, पं० मथुरानाथशास्त्रि, डा० कुनहन-

राजा, पं० स० ना० कुलकर्णी,इति एतान्, तेषां सर्वेषां संस्कृत
षिणां ( मध्यकालीनानां, कथितप्राचीनानां अपि ) 'प्रतिनि
उपलक्षणमात्रेण इति मत्वा, ये संस्कृतस्य राष्ट्रभाषादिकं काम
अहं सिद्धीकरोमि, यत् मम पूर्वप्रस्तावाः अद्य पूर्णरूपेण स्वी
गतैकादशवर्षेषु, इति आश्चर्यजनकं सौभाग्यं मम। इदं प्रती
यत् संस्कृतसंसार-वातावरणं पूर्वतः अनुकूलं आसीत्, तथा
तिस्म, यत् मम सदृशोऽपि क्षुद्रपण्डितः 'सुधार-प्रस्तावान्' कुर्या
तथा स संस्कृतसंसारः तान् सहर्षं स्वीकुर्यात्।

(१) प्रथमः, प्रस्तावः 'वाक्यपदेषु सन्धिराहित्यं' इति

वाक्यस्य पदेषु 'सन्धिः संयोगश्च' कदापि भवितुं नहि अ
'नियमरूपेण' इति मम सर्वप्रथमं अत्यन्तमहत्त्वपूर्णं च अनुसन्ध
यत् अन्यान् सर्वान् सुधारप्रस्तावान् अतिशेते। प्राचीनग्रन्
इदानीं यावत् प्रकाशितेषु 'नियमरूपेण' सर्वेषु वाक्यपदेषु स
कृतः विद्यते, येन कृतिमकाठिन्यं जटिलता च आनीता संस्कृते,
बालकाः भीताः संस्कृतं पठन्ति एव नहि विद्यालय-महाविद्याल
विश्वविद्यालयेषु कतिपयान् विहाय। यदि छात्राः न प
संस्कृतं, तदा कथं संस्कृतज्ञानां सृष्टिः स्यात् भविष्यत्काले
सूर्यवत् स्पष्टं। इदं कार्यं मध्यकालीनैः पण्डितैः कृतं हस्तलि
ग्रन्थेषु।

## संस्कृतव्याकरणं

संस्कृतव्याकरणे सन्धि-संयोग-नियमाः मुख्यतया सं
पदनिर्माणाय, रचनायै च दीयन्ते, यतोहि तान् विहाय
पदरचना स्यात् प्रातिपदिकरूपेषु ? यतोहि प्रातिपदिके प्रातिप
केषु वा विभक्त्यादिभिः, अन्यैः प्रत्ययैश्च 'पदत्वं' आनीयते

यदि इमे सन्धिसंभोग-नियमाः न भवेयुः, तदा कथं पदरचना स्यात् संस्कृतभाषायां इति स्पष्टं केनाऽपि व्याकरणज्ञानवता। संस्कृत-लिपिः वैज्ञानिकी स्वराधारिता, तथा निर्मिता संस्कृतभाषा महा-वैज्ञानिकी, तया भाषया निर्मितं संस्कृतसाहित्यं महावैज्ञानिकं। अतः संस्कृतव्याकरण अपि महावैज्ञानिकं पूर्णं च। यदि स्वर-व्यञ्जन-सन्धिसंयोग-नियमाः न भवेयुः व्याकरणे, तदा पदरचना, अनन्तरं भाषारचना, तत्पश्चात् साहित्यरचना असम्भवा स्यात् संस्कृते। इमे सर्वे नियमाः पदरचनायै एव विद्यन्ते यथा

'घेर्ङिति' ७।३।१११

इति सूत्रबलात् 'घिसंज्ञकस्य ङिति सुपि गुणः' हर्+ए+ए

एचोऽयवायावः' ६।१।७८

इति सूत्रबलात् हर्+अय्+ए='हरये' चतुर्थी-विभक्तौ एक-वचनं संस्कृतपदं सिद्धं स्यात्। यदि पदरचनाविषयकाः नियमाः न स्युः संस्कृतव्याकरणे, तदा चतुर्थ-विभक्तौ 'हरये' इति कथं भवेत् ? इमे सर्वे सन्धिसंयोगनियमाः प्रधानतया पदरचनायै विद्यन्ते इति मम अनुसंधानपौरुषं। यत्र व्याकरणस्य अभीष्टं, यत् पदेषु सन्धिः कृतः स्यात् वैकल्पिकरूपेण तत्र नियमः दीयते यथा

'एङः पदान्तादपि' ६।१।१०६

इति सूत्रबलात् 'हरे+अव (पदद्वयं पृथक् २)=हरेऽव' इति अपि भवितुं अर्हति। परन्तु एतादृशी स्थितिः नास्ति, यत् सर्वैः अन्यैः पंडितैः कथ्यते, यत् स सन्धिः (मां क्षुद्रपंडितं विहाय)

'सर्वत्र सर्वासु दशासु विवक्षां अपेक्षते संस्कृतवाक्ये'

यतोहि एतादृशं कथनं व्याकरणविरुद्धं स्यात्, व्याकरणे



एतादृशस्य नियमस्य अभावात्। यदा पृष्टः म० म० पंडितराज पं०

श्रीगोपाल शास्त्री, सभापति, काशी-पण्डित-सभा, मां उत्तर
यत्

'कुत्र अपि नास्ति नियमः, यत् वाक्येषु सन्धिः आवश्य
मम प्रश्नः आसीत्, यत् संस्कृतव्याकरणे एतादृशं कि
सूत्रं विद्यते, येन इदं सिद्धं स्यात्, यत् वाक्यपदेषु सन्धिः संयो
विवक्षां अपेक्षते सामान्यरूपेण। तस्य महाभागस्य उत्तरं अ
प्रश्नस्य, उपरि दीयते।

**एकः अज्ञातश्लोकः, साम्प्रतिक-समासलेखनविधिः**

एकः श्लोकः पठ्यते 'नियमरूपेण वाक्यपदेषु सन्धिसंयो
कर्तृभि, यः अयं

'सन्धिः एकपदे नित्यः, नित्यः धततूपसर्गयोः,
सूत्रेषु अपि नित्यः, स च अन्यत्र विभाषितः।

कोऽपि अज्ञातनिर्माता अस्य श्लोकस्य विद्यते, तथा
श्लोकः कस्यचित् अपि प्रामाणिकग्रन्थस्य व्याकरणस्य वा 'अ
नास्ति। मन्येत चेत् 'प्रमाणं' अस्य श्लोकस्य अज्ञातस्य, तथापि

'सन्धिः एकपदे नित्यः, नित्यः धातूपसर्गयोः'

इति अस्माकं पक्षः, यतोहि अनेन मार्गेण 'पदत्वं' आनी
प्रातिपदिकेषु धातुषु। समासेषु अपि सन्धिः नित्यः, यतोहि
विविधप्रातिपदिकेषु 'पदत्वं' आनीयते, यद्यपि एतादृशः नियमः
साधीयान्, शिथिलीभूतः अद्य अवलोक्यते संस्कृतपठनपा
सौविध्याय। इदं कार्यं समासेषु प्राचीनैः पण्डितैः अपि क्रियते
आधुनिकैः सुधारवादिभिः यथा 'संस्कृत-भवितव्यम्' साप्ताहि
संस्कृतपत्रे ३०।८।५८ ईस्वीये विद्यते :—



'राजनीतिक-आकांक्षया' इत्यादि

इदं पत्रं 'आधुनिक-संस्कृते' प्रकाश्यते, यस्य 'चिह्न' इदं यत्

'संस्कृतव्याकरणानुसारं संस्कृतपदस्य
यत् रूपं भवति तदेव प्रयुज्यते स्वरूपे,
पदेषु सन्धिसंयोगराहित्येन' इति।

( मम पूर्वतः एव पत्तः )

अनेन महत् सौविध्यं सम्पद्यते संस्कृतभाषायाः पठनपाठने अवबोधने च। अयं एव अस्माकं लेखनपरिपाट्याः सारः, यद्यपि कतिपय-सुधाराः अन्येऽपि आवश्यकाः, येन संस्कृतं पूर्णतया 'आधुनिकं' स्यात्। यथास्थानं तेषां सुधाराणां अपि उल्लेखः करिष्यते। परन्तु अस्माकं 'निश्चितमतं' यत् कोऽपि अन्यः सुधारः क्रियेत न वा, अनेन प्रकारेण संस्कृतलेखनेन एव, संस्कृत अद्य भारतस्य 'मातृ-राष्ट्र-राज-शिक्षाभाषा' स्यात्, यदि अस्माकं भारतीयगणराज्यं 'वस्तुतः भारतीयं भूत्वा' विदेशीयां आंग्लभाषां देशतः बहिष्कृत्य तां 'अमरभारतीं संस्कृतं नाम' तस्याः 'जन्म-सिद्धाधिकारे, स्वस्थाने वा' संस्थापयेत्। का नाम क्षेत्रीयाभाषाः हिन्दीभाषादयः, प्राकृताः, संस्कृतस्य एव भ्रंशरूपाः, याः आंग्ल-भाषायाः स्थान-ग्रहणे समर्थाः समग्रभारते ? 'अमरभारती संस्कृतं' एव एका भारतीया भाषा, या समग्रभारते आंग्लभाषायाः स्थानग्रहणे पूर्णतया समर्था, यतोहि तत्स्थानं तस्याः अनादिकालतः, न केवलं भारतेवर्षे, अपितु विश्वेऽपि आसीत्। अन्ते सत्यस्य एव विजयः स्यात् नः विश्वासः। अस्माभि 'कीदृशं संस्कृतम् ?' इति ग्रन्थस्य प्रथमपृष्ठे दत्तं, यत् 'वाक्यपदेषु सन्धिरहितं संस्कृतं अद्य एव राष्ट्र-भाषा जनताभाषा च भवितुं अर्हति पूर्ववत्।' यादृशी भाषा, पदेषु सन्धिरहिता ( पदानां संस्कृतव्याकरणानुसारं स्वरूपं लेखनं )

प्रयुज्यते अस्माभि तस्मिन् ग्रन्थे, अस्मिन् ग्रन्थे च, सा एव भा
सद्यः अस्माकं देशस्य. राष्ट्र-राज-शिक्षाभाषा स्यात् आंग्लभाषा
स्थाने। अन्ये सुधाराः यद्यपि भाषायां आवश्यकाः, तस्याः आधु
निकीकरणाय, येन सा भाषा आधुनिक-वैज्ञानिकयुगस्य भारवह
पूर्णतया समर्था स्यात्, परन्तु ते सुधाराः शनैः शनैः कर्त्तुं शक्यन्ते
स्वत एव आगमिष्यन्ति च, यदा संस्कृतं व्यवहारभाषा जायते
न्यूनातिन्यूनं अस्माभिः सर्वैः संस्कृतज्ञैः 'प्रतिज्ञा' कार्य्या, व
परस्परं संस्कृतेन एव व्यवहरिष्यन्ति, तथा स्वगृहेषु अपि एता
संस्कृतं अद्यतः व्यवहारपथे आनयिष्यन्ति, येन अस्माकं मातरः स्त्रि
सर्वाः बालकबालिकाः भाषणमात्रेण, संस्कृतस्य श्रवणमात्रेण संस्कृ
तज्ञाः भवेयुः। सर्वाः क्षेत्रीयभाषाः प्राकृताः संस्कृतभ्रंशरूपाः शनैःशनै
विशुद्धसंस्कृते परिवर्त्तिताः स्युः, इति 'चरमं उद्देश्यं' हृदि निधाय
कार्यं तु अत्यन्तं सरलं यदि 'शुभनिश्चयः' कृतः स्यात्। अस्या
लेखनपरिपाट्याः महत्वं महत्, या अस्माभिः स्वग्रन्थेषु सर्वप्रथ
प्रमाणसहिता प्रदत्ता, अतः इदं आवश्यकं निवेदनं। इयं एव लेखन
परिपाटी आधुनिकैः प्रगतिशीलैः पण्डितैः अद्य निसंकोचं प्रयुज्यते
ग्रन्थादिषु, अतः कथं न प्राचीनैः स्वलेखेषु स्वग्रन्थेषु स्वीकार्य
अविलम्बेन, यतोहि राष्ट्रभाषा प्रश्नः भूयोऽपि उत्तिष्ठेत् १६६५ ई
वत्सरे। अभ्यन्तरे सस्कृतं 'पूर्णतया आधुनिकं' कृतं स्यात् 'राष्ट्र
राज-शिक्षाभाषायाः' भारवहने, येन अयं आक्षेपः न स्यात् तदा
'यत् संस्कृतं न व्यवहार-वस्तु भारते संस्कृतज्ञेषु अपि'। लज्जा अनु
भूयते अस्माभिः यदा अयं 'सत्यः दोषः' अस्मासु कथितसंस्कृत
ज्ञेषु आरोप्यते। सर्वप्रथमं सर्वेष विद्यालय-महाविद्यालय-विश्व



विद्यालयेषु संस्कृतमाध्यमेन एवसंस्कृतपठनपाठनस्य प्रणाली प्रचा

लिता स्यात्, तथा सर्वे संस्कृतछात्राः अध्यापकप्राध्यापकाश्च अनिवार्यरूपेण परस्परं संस्कृते वदेयुः। अयं एव मार्गः, प्रायः शेषपञ्चवर्षेषु, संस्कृतस्य जनताभाषाकरणे विद्यते। अतः संस्कृतज्ञाः कटिबद्धाः स्युः आत्मकर्त्तव्यपालने, अन्यथा अन्येषु दोषारोपणं व्यर्थं।

## प्राचीनपंडिताः किं कुर्वन्ति साम्प्रतं ?

तैः अपि शनैः शनैः संस्कृतभाषायां सुधारः क्रियते। समासाः ये 'पदानि' विद्यन्ते, तेषां लेखनं प्राचीनैः अपि साम्प्रतं अनेन प्रकारेण क्रियते यथा तेषां सुप्रसिद्ध-संस्कृतपत्रे 'संस्कृतरत्नाकर' नामके अवलोक्यते ( सौरपौषः, २०१२, १० संख्या १७ वर्षे ) :—

'मूलचन्द खैरायतीराम—अनुसन्धान-मन्दिर-स्थापनं'

'कार्यालय–अधिकारि–कार्यकर्तॄणां.......................'

सौविध्याय इदं कार्यं अद्य प्राचीनैः अपि क्रियते, यद्यपि व्याकरणानुसारं समासेषु 'सन्धिः नित्यः इति नियमः', यतोहि अत्र विविधप्रातिपदिकेषु 'पदत्वं' आनीयते। समासविषयः इच्छाधीनः, अतः समासः क्रियेत न वा। अतएव अद्य बुधैः कथ्यते, यत् दीर्घसमासाः न कार्य्याः, तथा क्रियेरन् चेत्, तदा प्रथक् २ शब्ददानं उचितं, येषु मध्ये 'एतादृशं रेखाचिह्नं'—दीयेत यथा पूर्वोदाहरणेषु विद्यते। इयं दीर्घसमासानां लेखनस्य परिपाटी साध्वी, विशेषतया, यत्र विशेष-नाम-स्थान-वाचक-प्रातिपादिकानि विद्यन्ते, येषु समासः इष्यते। भ्रमः न स्यात् समासे इति कारणात् प्राचीनैः अपि अनेन प्रकारेण लेखनं क्रियते साम्प्रतं।

## (२) लौकिकसंस्कृततः द्विवचनस्य निस्सारणं

### सर्वासु संज्ञासु, क्रियासु अर्थात् समग्रसंस्कृतपदेषु



अस्मिन् विषये अधिककथनस्य आवश्यकता नास्ति, यतोहि

लौकिकसंस्कृते द्विवचनस्य प्रयोगः अत्यन्तस्वल्पः अर्थात् केवल यत्र तत्र भवति। प्राचीनसंस्कृतसाहित्येऽपि प्रयोगः स्वल्पः। व्याकरणे एतादृशः विधिः विद्यते, यत् यत्र द्विवचनस्य प्रकटीकरणं उचितं, तदा अनेन प्रकारेण कर्त्तुं शक्यते, कांऽपि भाषाहानिं विना यथा—

(अ) बालकौ अगच्छतां उत बालकौ गतौ इति स्थाने बालकद्वयं अगच्छत् गतं वा इति पूर्णतया साधुप्रयोगः।

(आ) रामकृष्णौ अगच्छतां उत रामकृष्णौ गतौ इति स्थाने रामः कृष्णः च अगच्छत् गतः वा इति पूर्णतया साधुप्रयोगः।

(इ) परन्तु यत्र विशेषनामसंज्ञा विद्यते यथा 'रामकृष्णौ' इति तत्र 'रामकृष्णाः अगच्छन्, गताः वा' इति सुधार-प्रयोगः साधीयान्, यथा पं० स० ना० कुलकर्णी महा-भागेन दीयते।" इदं अस्माकं अपि मतं। विकल्पे 'राम-कृष्ण-द्वयं' इति मन्येत, मध्ये रेखा-चिह्न-सहितं, येन इदं स्पष्टं स्यात्, यत् राम-कृष्ण-जनद्वयं विद्यते।

व्याख्या:—संसारस्य प्रायः ९९ प्रतिशतं भाषासु 'द्विवचनं नहि' भवति, यतोहि 'एकवचनं, बहुवचनं वा' इति स्वाभाविक-व्याकरण-नियमः तासां भाषाणां व्याकरणानां। लौकिक-संस्कृतं 'एकः अप-वादः' मा भवेत् इति सर्वथा उचितं युक्तियुक्तं च। अनेन भाषायां महत् सौविध्यं सम्पद्येत, तथा विद्यार्थिनां पठनपाठनं महासरलं स्यात्! अनेन मार्गेण प्रायः १० लक्षद्विवचनीयपदानां न्यूनता स्यात् लौकिकसंस्कृतभाषायां। कीदृशः महान् लाभः अत्र इति स्पष्टं।

## (३) चतुर्लकाराः लौकिक-संस्कृते पर्याप्ताः

अयं अपि अस्माकं पक्षः आसीत्, यत् केवलं चतुर्लकाराः लट् (वर्तमानकाले) लृट् (भविष्यत्काले) लङ् (भूतकाले) तथा लिङ् (विध्यादिषु अर्थात् आज्ञादिषु) लौकिकसंस्कृते पर्याप्ताः। अयं प्रस्तावः अपि प्रायः स्वीकृतः एव, यथा पं० मथुरानाथ शास्त्रिणा स्वत एव लिख्यते, यत् पंचापादिप्रदेशेषु केवलं इमे चतुर्लकाराः पाठ्यपुस्तकेषु प्रयुज्यन्ते। अस्माभि स्वग्रन्थे 'कीदृशं संस्कृतम्?' इति नामके अनेकानि प्रमाणानि दत्तानि सन्ति, यत् 'अद्यतन-अनद्यतन-भेदः' लकारेषु, एवमेव 'परोक्ष-अपरोक्ष-भेदः' अस्वाभाविकः, अयुक्तियुक्तश्च। तत्रैव इदं सर्वं पठनीयं पाठकैः। इदं प्रतीयते, यत् पाणिनि-मुनिना समग्रभारतस्य विविधलकाराः दत्ताः स्वव्याकरणे 'अष्टाध्यायी' इति नामके, ये विविधभागेषु भूत-भविष्यतादिकालेषु प्रज्युन्तेस्म तत्तत्प्रदेशीयजनैः। इदं तु इतिहासप्रसिद्धं यत् पाणिनिमुनिना भारतपर्यटनं कृतं आसीत्, स्वव्याकरणरचनात् पूर्वं, येन स स्वत एव जानीयात् भारतस्य विविधप्रदेशेषु संस्कृत-भाषायाः स्थितिः, प्रयोगादयश्च। अयं तु इतिहासः एव, यत् 'अष्टाध्यायी' व्याकरणग्रन्थः महाभारतस्य बहुकालानन्तरं रचितः, यदा भारतस्य विविधभागेषु बौद्धशासनं आसीत्, तथा प्राकृतादयः विविधप्राकृतभाषाः संस्कृतस्य भ्रंशरूपाः देशे प्रचलिताः आसन्। तदा भारते, प्रायः बौद्धगते, पूर्ण-अव्यवस्था आसीत्, तथा न केवलं वर्णाश्रमव्यवस्था, अपितु प्रायः सर्वाः वेदपठनपाठनस्य परम्पराः 'शाखाः नाम' भग्नीभूताः आसन्। यत्र तत्र भारते संस्कृतं 'मातृभाषणादिरूपे' अवलोक्यतेस्म। प्रायः पंडितसमाजस्य भाषा संस्कृतं आसीत्, जनभाषाः तु प्राकृतादयः आसन्। प्रायः द्विसहस्र-

वर्षप्राचीनः अयं 'अष्टाध्यायी' व्याकरणग्रन्थः, यद्यपि कतिपय-ज
कथयन्ति, यत् एतावान् प्राचीनोऽपि नास्ति, काचित् निश्चित-लेख
तिथि-अभावात्। तथापि यत्रतत्र सूत्रेषु विविधभागानां विविधप्रयो
मिलन्ति, इतिहाससूचकाः अपि, येन ग्रन्थ-लेखन-तिथि-नि
कदाचित् सम्भवः, परन्तु इदानीं यावत् निश्चित-तिथिः का
नास्ति। अस्यां, भारतस्य शोचनीयदशायां, यदि लकाराणां वि
प्रकाराः कालसूचकाः विविधभागेषु स्युः, किं आश्चर्यं? अ
विषये विद्वद्भिः अन्वेषणं कार्य्यं, विशेषतया देशस्य संस्कृतवि
विद्यालयैः, अन्यैः च। परन्तु अस्माकं 'प्रस्तावः' तु सफलीभू
यदा चतुर्लकाराः एव अद्य प्रायः प्रज्युयन्ते पंचापादिप्रदेशेषु।
आशास्महे, यत् सर्वस्मिन् भारते अनेन प्रकारेण एव करिष्
निःसंकोचं, येन १९६५ ई० वत्सरं यावत् संस्कृतं राष्ट्रभाषायां
स्यात्।

## एकः महान् लाभः चतुर्लकार–स्वीकरणे

'कीदृशं संस्कृतम्?' इति ग्रन्थे अस्माभिः 'डुकृञ्' धा
दशलकारेषु रूपाणि दत्तानि सन्ति, यानि प्रायः २५१२ सार्ध
सहस्रसंख्याकानि भवन्ति। १९४४ धातवः संस्कृते विद्यन्ते,
सर्वेषां धातूनां प्रायः ३६ लक्षरूपाणि भविष्यन्ति। क्व मा
क्षुद्रः, काऽपि देवता देवोऽपि वा इमानि सर्वाणि रूपाणि धा
स्मर्त्तुं नहिं शक्नोति? संज्ञा–सर्वनाम–विशेषणादयः अन्ये
विद्यन्ते शब्दाः संस्कृतव्याकरणे। अनेन प्रकारेण अनन्त-श
संख्या स्यात् संस्कृते, यदा अन्यासु सर्वासु संसार-भाषासु श
संख्या प्रायः निश्चिता। आंग्लभाषायां, या संसारस्य उन्नतत
भाषा विज्ञानादिक्षमा कथ्यते, प्रायः ५–७ लक्षशब्दाः विद्य

व्यावहारिकता न परिहरणीया कदापि अस्माभि संस्कृतज्ञैः, येन संस्कृतपठनपाठनं महतः काठिन्यात् असम्भवं न स्यात्, यथा अद्य संस्कृतं जात अस्ति, अव्यवहारात्, ग्रन्थगतत्वात् च। संस्कृत-व्याकरणं अपि महाजटिलं, महाकायं, प्रायः विरुद्धवार्त्तिकादिभिः विविध-वैय्याकरण-मतैः, संवृत्तं अस्ति। किं अपि लघुव्याकरणं निर्मितं स्यात्, 'अष्टाध्यायीं' आधारीकृत्य साम्प्रतिकं वैज्ञानिक-युगानुसारं उत 'अष्टाध्यायी-सूत्राणि' स्फुटानि कृतानि स्युः, सूत्राणां पदानां पृथक् २ दानेन वाक्येषु, येन अर्थः प्रत्येकं सूत्रस्य सुस्पष्टः स्यात्, येन 'अनुवृत्तेः' पूर्वसूत्रात् आवश्यकता न स्यात्।

२५१२ रूपाणि 'डुकृञ्' धातोः १० लकारेषु भवन्ति, परन्तु तिङन्तेषु अपि द्विवचनस्य निस्सारणात् केवलं ३२४ रूपाणि चतुर्लकारेषु भवेयुः। अनेन मार्गेण प्रायः ३२ लक्षरूपाणि धातूनां न्यूनानि भवेयुः।

यदि सर्वेषु संस्कृत-शब्देषु सुबन्त-कृदन्त-तद्धित-समासेषु, तथा तिङन्त–क्रियासु तथा सन्नन्तादि–प्रक्रियासु द्विवचनस्य निस्सारणं स्यात्, तदा प्रायः पंचाशत्–लक्ष–रूपाणां न्यूनता स्यात् संस्कृत-भाषायां। संज्ञासु 'सम्बोधनकारकस्य काऽपि आवश्यकता नास्ति, यतोह तस्य प्रयोगोऽपि अल्पतमः यथा द्विवचनस्य। कर्त्ता कारके यानि रूपाणि, तानि एव प्रयुक्तानि स्युः सम्बोधने, 'द्विवचनं' तत्र अपि निस्सार्यं। वस्तुतः सम्बोधने एकवचनस्य आवश्यकता।

यदि 'क्त्वा-ल्यप्-प्रत्यान्त-पूर्वकालिकक्रियावत्' यथा 'गत्वा, आगत्य', तथा 'तुमुन्'-प्रत्यान्तवत्' यथा 'गन्तुं, द्रष्टुं' इत्यादि, येषां रूपाणि नहि चलन्ति 'अव्ययवत्', शानच्-शानच्-

वर्षप्राचीनः अयं 'अष्टाध्यायी' व्याकरणग्रन्थः, यद्यपि कतिपय-जनाः कथयन्ति, यत् एतावान् प्राचीनोऽपि नास्ति, काचित् निश्चित-लेखन-तिथि-अभावात्। तथापि यत्रतत्र सूत्रेषु विविधभागानां विविधप्रयोगाः मिलन्ति, इतिहाससूचकाः अपि, येन ग्रन्थ-लेखन-तिथि-निर्णयः कदाचित् सम्भवः, परन्तु इदानीं यावत् निश्चित-तिथिः काऽपि नास्ति। अस्यां, भारतस्य शोचनीयदशायां, यदि लकाराणां विविध-प्रकाराः कालसूचकाः विविधभागेषु स्युः, किं आश्चर्यं ? अस्मिन् विषये विद्वद्भिः अन्वेषणं कार्य्यं, विशेषतया देशस्य संस्कृतविश्व-विद्यालयैः, अन्यैः च। परन्तु अस्माकं 'प्रस्तावः' तु सफलीभूतः, यदा चतुर्लकाराः एव अद्य प्रायः प्रज्युयन्ते पंचापादिप्रदेशेषु। वयं आशास्महे, यत् सर्वस्मिन् भारते अनेन प्रकारेण एव करिष्यते निःसंकोचं, येन १९६५ ई० वत्सरं यावत् संस्कृतं राष्ट्रभाषायोग्यं स्यात्।

## एकः महान् लाभः चतुर्लकार-स्वीकरणे

'कीदृशं संस्कृतम् ?' इति ग्रन्थे अस्माभिः 'डुकृञ्' धातोः दशलकारेषु रूपाणि दत्तानि सन्ति, यानि प्रायः २५१२ सार्धद्वि-सहस्रसंख्याकानि भवन्ति। १९४४ धातवः संस्कृते विद्यन्ते, अतः सर्वेषां धातूनां प्रायः ३९ लक्षरूपाणि भविष्यन्ति। क्व मानवः क्षुद्रः, काऽपि देवता देवोऽपि वा इमानि सर्वाणि रूपाणि धातूनां स्मर्त्तुं नहिं शक्नोति ? संज्ञा–सर्वनाम–विशेषणादयः अन्येऽपि विद्यन्ते शब्दाः संस्कृतव्याकरणे। अनेन प्रकारेण अनन्त–शब्द-संख्या स्यात् संस्कृते, यदा अन्यासु सर्वासु संसार-भाषासु शब्द-संख्या प्रायः निश्चिता। आंग्लभाषायां, या संसारस्य उन्नततमा भाषा विज्ञानादिक्षमा कथ्यते, प्रायः ५–७ लक्षशब्दाः विद्यन्ते।

व्यावहारिकता न परिहरणीया कदापि अस्माभि संस्कृतज्ञैः, येन संस्कृतपठनपाठनं महतः काठिन्यात् असम्भवं न स्यात्, यथा अद्य संस्कृतं जात अस्ति, अव्यवहारात्, ग्रन्थगतत्वात् च। संस्कृत-व्याकरणं अपि महाजटिलं, महाकायं, प्रायः विरुद्धवार्त्तिकादिभिः विविध-वैय्याकरण-मतैः, संवृत्तं अस्ति। किं अपि लघुव्याकरणं निर्मितं स्यात्, 'अष्टाध्यायीं' आधारीकृत्य साम्प्रतिकं वैज्ञानिक-युगानुसारं उत 'अष्टाध्यायी-सूत्राणि' स्फुटानि कृतानि स्युः, सूत्राणां पदानां पृथक् २ दानेन वाक्येषु, येन अर्थः प्रत्येकं सूत्रस्य सुस्पष्टः स्यात्, येन 'अनुवृत्तेः' पूर्वसूत्रात् आवश्यकता न स्यात्।

२५१२ रूपाणि 'डुकृञ्' धातोः १० लकारेषु भवन्ति, परन्तु तिङन्तेषु अपि द्विवचनस्य निस्सारणात् केवलं ३२४ रूपाणि चतुर्लकारेषु भवेयुः। अनेन मार्गेण प्रायः ३२ लक्षरूपाणि धातूनां न्यूनानि भवेयुः।

यदि सर्वेषु संस्कृत-शब्देषु सुबन्त-कृदन्त-तद्धति-समासेषु, तथा तिङन्त–कियासु तथा सन्नन्तादि–प्रकियासु द्विवचनस्य निस्सारणं स्यात्, तदा प्रायः पंचाशत्–लक्ष–रूपाणां न्यूनता स्यात् संस्कृत-भाषायां। संज्ञासु 'सम्बोधनकारकस्य काऽपि आवश्यकता नास्ति, यतोह तस्य प्रयोगोऽपि अल्पतमः यथा द्विवचनस्य। कर्त्ता कारके यानि रूपाणि, तानि एव प्रयुक्तानि स्युः सम्बोधने, 'द्विवचनं' तत्र अपि निस्सार्यं। वस्तुतः सम्बोधने एकवचनस्य आवश्यकता।

यदि 'क्त्वा-ल्यप्-प्रत्यान्त-पूर्वकालिकक्रियावत्' यथा 'गत्वा, आगत्य', तथा 'तुमुन्'-प्रत्यान्तवत्' यथा 'गन्तुं, द्रष्टुं' इत्यादि, येषां रूपाणि नहि चलन्ति 'अव्ययवत्', 'शतृ-शानच्-कानच्-

प्रत्यान्त-शब्दाः' अपि 'अव्ययवत्', मन्यरेन् (यतोहि एतेषां प्रयोगः स्वल्पः) तथा रूपाणि नहि चलेयुः, पुंलिङ्ग-स्त्रीलिङ्ग-नपुंसक-लिंगेषु' तदा प्रायः पंचलक्षरूपाणां न्यूनता स्यात् संस्कृतभाषायां। कीदृशः महान् लाभः प्रायः पंचपश्चाशत्-लक्षरूपाणां न्यूनीभवने कांचित् अपि हानिं विना। कीदृशं महत् अधिकमांसकर्त्तनं संस्कृत-भाषा शरीरतः जातं, यत् प्रायः पंचसहस्रवर्षेषु महाभारतकाला-नन्तरं वृद्धिं गतं, केवलं एकया एव शल्यक्रियया। कायाकल्पः जातः अद्य संस्कृतस्य ग्रन्थगतस्य मृतप्रायस्य, येन तत् भूयः 'अमृत्वं' आप्तवान्, एकस्य क्षुद्रचिकित्सकस्य चिकित्सया। अतः

'यावत् गंगा च गोदा च, तावत् एव हि संस्कृतं
यावत् सूर्यः च चन्द्रः च, तावत् एव हि संस्कृतं।'

इति त्रिकालेषु तिष्ठेत् एतादृशं 'सुदृढं, बलिष्ठं', वैज्ञानिकयुगानुकूलं च' संस्कृतं, भारतस्य 'मातृ-राष्ट्र-राज-शिक्षाभाषारूपेण, विश्वे च विश्वभाषारूपेण पूर्ववत् इति आकाशवाणी।

## द्विवचनस्य स्थाने बहुवचन-प्रयोगः व्याकरण-सम्मतः

द्विवचनस्य प्रयोगः तु न्यूनतमः भवति भाषायां, परन्तु तस्य निस्सारणात् प्रायः १०–१५ लक्षरूपाणां न्यूनता जायते, अतः अस्मिन् विषये पुनः विचारः आवश्यकः। इदं प्रतीयते, यत् अयं प्रश्नः पूर्ववैय्याकरणानां समक्षेऽपि आसीत्, तथा तैः अस्मिन् सम्बन्धे विचारः कृतः, तथा विविधोपायाः दत्ताः, येन द्विवचन-निस्सारणेऽपि द्विवचनस्य प्रयोजनसिद्धिः स्यात्। अस्मिन् विषये एकं सूत्रं विद्यते 'अष्टाध्यायी' व्याकरणे यथा

"अस्मदो द्वयोश्च" १।२।५९



व्याख्या—अस्य सूत्रस्य व्याख्या विद्यते, यत् एकत्वे द्वित्वे च

विवक्षते अस्मदः बहुवचनं वा स्यात् यथा 'वयं ब्रूमः' पक्षे 'अहं ब्रवीमि, आवां ब्रूवः'। अनेन सिद्ध्यति, यत् द्विवचनस्य स्थाने बहुवचनस्य प्रयोगः व्याकरणसम्मतः विद्यते यथा पं० स० ना० कुलकर्णी महोदयेन कथ्यते यथा

'रामकृष्णाः आगताः' (रामकृष्णौ आगतौ इति स्थाने) अस्य सूत्रगतस्य सिद्धान्तस्य स्वीकरणे द्विवचनस्य स्थाने बहुवचनस्य प्रयोगः निःसंकोचं कृतः स्यात्, यथा एकवचनस्य स्थाने बहुवचनस्य प्रयोगः सर्वत्र अवलोक्यते। अयं विषयः ज्ञातवृत्तः, अतः उदाहरणस्य काऽपि आवश्यकता नास्ति। यदि एकस्मै पंडिताय कथयितुं शक्यते यत्

'भवन्तः महाविद्वांसः सन्ति'

तदा पंडितद्वयाय कथं कथयितुं नहि शक्यते यत्

'भवन्तः महाविद्वांसः सन्ति'

अतः पं० स० ना० कुलकर्णी महोदयस्य मतं साधु, यत् अस्माकं अपि मतं विद्यते।

एकः अन्योऽपि उपायः विद्यते द्विवचनस्य प्रकटीकरणाय यथा

'उभयपदी धातुः, उत उभयपदिनः धातवः'

अनेन प्रकारेण कथयितुं शक्यते द्विवचनस्य प्रकटीकरणे यथा

'उभयजनः आगतः उत उभयजनाः आगताः'

कदापि २ व्याकरणं प्रमाणं नास्ति, अपितु विदुषां प्रयोगः 'आर्षप्रयोगः इति नाम' यथा

'सत्यं एव जयते'

अयं आर्ष-प्रशस्त-प्रयोगः मन्यते, व्याकरणसम्मतस्य प्रयोगस्य स्थाने यथा

'सत्यं एव विजयते'

अनेन प्रकारेण शतशः सहस्रशः प्रयोगाः विद्यन्ते प्राचीनसंस्कृत-ग्रन्थेषु, ये न व्याकरणसम्मताः, परन्तु 'आर्षप्रयोगाः' इति कथनात् ते 'प्रशस्ताः, व्याकरणतर्कमुक्ताश्च'। अतः डा० कुनहनराजामहाभागस्य शब्देषु 'यत् अद्य स्खलनं इव प्रतीयते, श्वः नियमः स्यात्, यदि कोऽपि सुधारः विद्वद्भिः सम्यक् विचार्य कृतः स्यात्' किं पुनः यदि स व्याकरणसम्मतः उपायः सुधारः वा भवेत् ?

## समासविचारः

'समासः' इति संस्कृतव्याकरणे एकः अत्यन्तमहत्त्वपूर्णः पद-विधिः, यः अन्यासु भाषासु प्रायः मिलति एव नहि। यदि कुत्र अपि मिलति, तदा एतादृशाः सूक्ष्मविचाराः नियमाश्च नहि विद्यन्ते यथा संस्कृतव्याकरणे मिलन्ति। अतः एतेषां सूक्ष्मविचाराणां प्रथमं ध्यानपूर्वकं अध्ययनं, अनन्तरं तेषां समुचितप्रयोगः एकं कठिनं कार्यं, यः व्याकरणज्ञानविरहितेन कर्त्तुं नहि शक्यते। सर्वप्रथमं इदं ज्ञातव्यं सर्वैः, यत् प्रत्येकं शब्दस्य (प्रातिपदिकस्य) प्रत्येकं शब्देन सह (अन्येन अन्यैः वा) समासः न स्यात् स्वेच्छा-चारितया। तत्र नियमाः विद्यन्ते, यत् एतासु दशासु विविध-प्रातिपदिकानां 'समसनं, समस्तपदं वा' भवेत्। समासोऽपि 'पदं' विद्यते, तथा 'अव्ययी-भावं' विहाय, समस्त-पदानां अपि रूपाणि चलन्ति यथा अन्येषां पदानां, अतः 'द्विवचननिस्सारण-विधिः अपि' अत्र लगेत् इति विचारपथे आनेतव्यं। यद्यपि 'पदत्व-कारणात्' समासेषु सन्धि-संयोग-नियमाः सदैव लगेयुः, यतोहि 'सन्धिः एक-पदे नित्यः', तथापि समस्त-पदेषु विविध-प्रातिपदिकानां 'समसनी-करणात्' इदं विचारणीयं उचितं, यत् एतेषां प्रातिपदिकानां सम-

स्ती-करणे भ्रमः, अर्थबोधे काठिन्यं, पठने, उच्चारणे च, असौ-विध्यं तु नहि उत्पद्यते। अतः इयं परिपाटी आधुनिकैः तथा प्राचीनैः पंडितैः अपि प्रचालिता इदानीं समास-लेखनस्य, यस्य उदाहरणानि अस्माभिः पूर्वं दत्तानि अस्मिन् अध्याये यथा

'राजनीतिक—आकांक्षया'

'कार्यालय—अधिकारि—कर्तॄणां' इत्यादि

इयं पारपाटी साध्वी विद्यते भ्रमनिवारणार्थं, या बुद्धिपूर्वकं यथा-वसरं अन्यैः अपि प्रयोक्तव्यं। यद्यपि समासः इच्छाधीनः, तथापि एतादृशः समासः न स्यात् यथा

'महा+अज्ञानी=महाज्ञानी'

'महा+ज्ञानी=महाज्ञानी'

तत्+हिन्दी=तद्–धिन्दी=दद्धिन्दी (धिन्दी का ? कथं बोधः ?)

अतः भ्रमनिवारणार्थं इमे समासाः अनेन प्रकारेण लिखिताः स्युः यथा—

'महा–अज्ञानी' समासः यदि अभीष्टः।

'तद्–हिन्दी' " " "

अन्यथा 'महान् अज्ञानी' 'सा हिन्दी' इति स्यात् असमस्त–पदेषु येन कोऽपि भ्रमः न भवेत् अर्थज्ञाने। समस्तपद-कारणात्, अबुद्धि-पूर्वकं प्रयोगात्, प्राचीन-संस्कृत-ग्रन्थेषु, इदानीं प्रायः गतशतवर्षेषु प्रकाशितेषु, एतादृशानि अनेकानि भ्रमस्थानानि विद्यन्ते, येन सद-र्थस्य अनर्थः सहजतया भवति। एतादृशं कार्यं मध्यकालीनैः पंडितैः हस्त-लिखित-ग्रन्थेषु कृतं, उत कथित-प्राचीनैः पंडितैः ग्रन्थानां हस्त-लिखितानां मुद्रण–प्रकाशन-समये कृतं इति न ज्ञायते। वयं



एतादृशाः पंडिताः न भवेयुः यथा

'अपि शास्त्रेषु कुशलाः, लोकाचारविवर्जिताः ।
सर्वे हास्यतां यान्ति, यथा ते मूर्खपंडिताः ।

अस्माभिः सर्वैः एतादृशैः भाव्यं यथा

'सेनापत्यं च राज्यं च दण्डनेतृत्वं एव च,
सर्वलाकाधिपत्यं च वेद-शास्त्र-वित् अर्हति ।'
'यस्य बुद्धिः बलं तस्य निर्बुद्धेः कुतः बलं'
'एकं हन्यात् न वा हन्यात् इषुः मुक्तः धनुष्मता,
बुद्धिः बुद्धिमता सृष्टा हन्ति राष्ट्रं सनायकं ।'

अतः बुद्धिमतां मूल्यं लोके, न तु अबुद्धिमतां मूर्खाणां । अन्यथा 'कूपमण्डूकाः' तु वयं संस्कृत-पंडिताः विद्यामहे, अन्येषां सर्वेषां आधुनिकानां दृष्टौ इति स्थितिः ।

## (४) 'मोऽनुस्वारः' (मः अनुस्वारः) इति सूत्रं ८।३।२३

एकं अन्यत् अपि कार्यं अस्माभिः क्रियते सर्वथा 'अविवेक-पूर्वकं', येन क्व लौकिक-संस्कृत-ग्रन्थाः, वेदेऽपि 'मदीनाः' इति लिख्यते पठ्यते च अस्माभिः । यस्मात् कारणात् मुस्लिम-सम्प्रदाय-वादिनः कथयन्ति, यत् तेषां 'मदीना-नगरं' वेदेऽपि विद्यते, यत् नगरं तेषां सम्प्रदायस्य एकं प्रधान-केन्द्रं । अस्य अयं अर्थः, यत् तेषां सम्प्रदायः अनादिकालतः प्रचलति अज्ञातरूपेण, वेदधर्मवत्, उत वेदः केवलं गत-त्रयोदश-शत-वर्षप्राचीनः यथा तेषां सम्प्रदायः। इयं लेखनपरिपाटी महादूषिता, या वेदेऽपि आनीता अविवेकेन घोरानर्थाय यथा इदानीं स्पष्टीकृतं ।

महामुनिपाणिनिः 'अष्टाध्यायी' व्याकरण-रचयिता प्रायः गतद्विसह्स्रवर्षेषु जन्म आलभत ( निश्चित जन्मतिथेः अभावात् ) तथा 'सिद्धान्त–कौमुदी' व्याकरणकर्त्ता अभवत् प्रायः गतसहस्र-

वर्षेषु, यस्य 'व्याख्या अयुक्तियुक्ता, यत् मान्तस्य पदस्य अनुसारः स्यात् हलि' इति मीलित-नेत्रैः अस्माभि सर्वैः स्वीक्रियते इति चित्रं। सर्वप्रथमः प्रश्नः तु अयं एव, यत् 'यः वेदः अपौरुषेयः, सृष्ट्युत्पत्ति-काले प्रादुर्भूतः, प्रायः विंशति-अर्बुद-वर्ष-प्राचीनः, तस्मिन् वेदे इदं सूत्रं इयं व्याख्या च कदा लगिता, येन 'अदीनाः इति पदस्य मदीनाः इति' अभवत् ? स्पष्टं यत् गदद्विसहस्र-वर्षेषु अयं अनर्थः वेदेऽपि जातः, यथा अन्येषु लौकिक-संस्कृत-ग्रन्थेषु अवलोक्यते। इदं सर्वं वेद-विषये 'वेद-भागे' दास्यते विस्तारपूर्वकं, परन्तु अत्र तु लौकिक-संस्कृतस्य वार्त्ता क्रियते। इयं व्याख्या या अस्माभिः केन प्रकारेण अपि नहि स्वीक्रियते, बहुभिः आधुनिकैः। प्राचीनैः, मध्यकालीनैः अपि ( क्व प्रश्नः वैदिकानां पूर्ववर्त्तिनां ? ) नहि स्वीक्रियते कथं 'साध्वी' इति मन्येत ? साध्वी मन्येत चेत् तदा 'हलि परे मान्तस्य पदस्य अनुस्वारः स्यात्।' परन्तु 'अचि परे न स्यात्' अस्य विरोधः तु विद्यते एव नहि, तस्य उल्लेख-अभावात्। तथापि मन्येत चेत्, एतादृशः आशयः अप्रत्यक्षरूपेण, तदा 'हलन्त म्' इति एव तिष्ठेत् मानतस्य पदे। कुत्र इदं विद्यते, यत् 'हलन्त म्' इति अक्षरस्य 'संहिता' स्यात् 'अचि पर-पदस्य ?' यदि एतादृशं अभीष्टं स्यात् व्याख्या-कर्त्तुः, तदा अवश्यमेव इमे शब्दाः तत्र स्युः यथा 'न अचि, संहितायै।' आशयं न ज्ञात्वा अविचारेण अस्माभिः 'ऊहः' कृतः, न तु 'ऊहापोहः'। इदं करणीयं तत्सर्वं विवेकपूर्वकं, येन वेदस्य संस्कृतस्य च हितं स्यात्। अत्यन्त-महत्वपूर्णं इदं सूत्रं, यत् भावि-सूक्ष्मदृष्ट्या महामुनिपाणिनिमहाभागेन प्रदत्तं, येन महालाभः अभूतपूर्वः स्यात् संस्कृतभाषायाः। गौणरूपेण स्थानस्य समयस्य अपि न्यूनता स्यात्, यतोहि अनुस्वारदाने अल्पः समयः अल्प

स्थानं च लगेत् 'हलन्त म्' अपेक्षया। सूक्ष्म-दृष्टि: इयं एव, यत् वस्तुत: 'ञमङणनानां नासिका च' इति एकं एव उच्चारण-स्थान-कारणात् 'प्रयोजनं तु एकं एव एतेषां सर्वेषां हलक्षराणां।" उच्चारणं 'अनुसारेण' समानं स्यात यथा एतेषां हलन्तक्षराणां विद्यते। यदि पदान्ते 'हलन्त म्' इति स्यात्, तदा अनुस्वारदानमात्रेण 'हलन्त म्' इति उच्चारणं स्यात्, परन्तु यदि पदस्य मध्ये आगच्छेत् 'ञमङणनानां' कोऽपि हलन्त - अक्षर:, तदा उच्चारणं 'अनुनासिकं' स्यात्, न तु 'अक्षरानुसारि यथा

अञ्जन=अंजन

सम्मान=संमान

अङ्क=अंक

दण्ड=दंड

दन्त=दंत

कीदृश: महान् लाभ: लेखनसौविध्यं च। एतादृशं सूत्रं तु केनाऽपि महामुनिना रचयितुं शक्यते। अस्माभि: क्षुद्र-जीवै: तु सदर्थस्य अनर्थ: कर्त्तुं शक्यते, येन संस्कृतं रसातलं गच्छेत्।

न्यूनातिन्यूनं इदं कार्यं तु सर्वै: कर्त्तुं शक्यते यत्,
'हलन्त म् इति तिष्ठेत् अचि, अनुस्वार: स्यात् हलि'

यदि अस्माकं युक्तियुक्तं निवेदनं बुद्धौ न समायाति, येन पूर्वपर-शब्दद्वयस्य शुद्धोच्चारणं सम्भवं स्यात्, तदा 'अदीना:' इति पदस्य 'मदीना:' न स्यात्, अस्माकं संस्कृतज्ञानां अविवेककारणात्। यदि संस्कृतं अस्माकं मातृ-भाषणादिभाषा स्यात्, तदा कथं एतादृश: अनर्थ: सम्भवेत इति ? 'संस्कृत भवितव्यम्' इति पत्रस्य सम्पादक-महोदय: 'हलन्त म्' इति ददाति अचि परे, परन्तु

'संहिता' नहि क्रियते । इयं परिपाटी अपि साध्वी, यदि स इच्छति परन्तु 'व्याख्या साध्वी' नास्ति, यदि तां आधारीकृत्य स इदं कार्यं करोति । परन्तु यैः मध्यकालीनैः पण्डितैः, कथित-प्राचानीयैः वा इदानीं 'सहिता क्रियते अचि परे', तैः तु वाममार्गिणां पञ्चमकारवत् षष्ठ-मकारस्य रचना क्रियते, येन स मकारः 'मकरः' भूत्वा संस्कृतभाषां निहत्य पूर्णतया निगलेत् । ग्रन्थगतस्य मृतप्रायस्य संस्कृतस्य इदं ज्वलत्प्रमाणं । अनेन शुद्धोच्चारणं अपि न सम्भवेत् भाषायां । कीदृशी विडम्बना ! कीदृशी खेदस्य वार्त्ता !

सूत्रस्य तु अर्थः सूत्रात् एव स्पष्टः भवति । न तत्र काचित् 'अनुवृत्तिः' आवश्यकी । यैः 'अष्टाध्यायी' अवधानतया पठिता, ते कथयितुं शक्नुवन्ति, यत् सर्वेषु सूत्रेषु सर्वासु दशासु पूर्वसूत्रात् 'अनुवृत्तिः' आगच्छति एव नहि । सूत्रस्य अस्य

'मोऽनुस्वारः' (मः अनुस्वारः) ८।३।२३

सरल-पूर्णार्थः अयं, यत् 'मः अनुस्वारः भवेत्', यतोहि अत्र कोऽपि प्रतिबन्धः नास्ति, यत् अचि परे हलि परे वा 'मः अनुस्वारः स्यात् ।' 'अनुवृत्तेः' आवश्यकता नास्ति, यतोहि अर्थः पूर्णः जायते । पूर्वसूत्रं

'हलि सर्वेषाम्' ८।३।२२

इति विद्यते । मन्येत चेत् यत् 'अनुवृत्तिः' आवश्यकी, तदा 'सर्वेषाम्' इति पदस्य अनुवृत्तिः कथं न स्यात् परसूत्रे ? तदा सूत्रं स्यात् यथा

'मः अनुस्वारः' सर्वेषाम् (पदानाम्)' इति

अतः 'हलि परे अचि परे वा' इति प्रश्नः नहि उपतिष्ठते । सा एव 'अनुवृत्तिः' आनीयेत पूर्वसूत्रात् परसूत्रे, या अत्यन्तलाभकरी स्यात् ।

## उदाहरणानि, यत् प्राचीनतमे ग्रन्थेषु अपि 'मः अनुस्वारः' अचि परे मिलति

(१) पं कुल्लूकभट्टस्य 'मनुस्मृति-टीका' न्यूनातिन्यूनं एक-सहस्रवर्षप्राचीना अधिका वा। प्रथमाध्यायस्य ११६ श्लोकस्य टीका तेन महाभागेन अनेन प्रकारेण क्रियते यथा

'एवं संकीर्णानां अनुलोमप्रतिलोमजानामुत्पत्तिं आपदि च जीवकोपदेशं आपद्धर्मम्········ इत्यादि'

(२) भगवतः वेदस्य ( यजुर्वेदस्य ) उव्वट-महीधराचार्य्याणां भाष्यस्य उपरि या टीका पं० रामसकलमिश्रमहाभागेन कृता तत्र दीयते यथा

'········महान्तं अपर्यन्तम् इत्यादि'

(यजु० ३१ अध्यायस्य १८ मंत्रस्य उपरि)

(३) सायणाचार्यस्य 'ऋग्वेदादिभाष्य-भूमिकायाः' उपरि या टीका पं० बलदेव उपाध्याय, हिन्दू विश्वविद्यालय, काशी, इति महाभागेन कृता तत्र १५ पृष्ठस्य उपरि दीयते यथा

'·····वृष्ट्यर्थं अभ्यक् प्राप्नोति········

संगृहीतं अम्बं जलं जुनन्ति इत्यादि'

(४) पं० श्रीपाददामोदरसातवलेकरमहाभागस्य प्रायः शत-वर्षीयस्य लेखः तु अस्मिन् ग्रन्थे एव गताध्याये दीयते, यतोहि तेन महाभागेन मम कीदृशं संस्कृतम् ? इति नामकस्य पूर्वग्रन्थस्य 'भूमिका' लिखिता। अहं कृतज्ञोऽस्मि, यत् तेन महाविदुषा इदं कष्टं कृतं। वयं कामयामहे, यत् यादृशं 'आधुनिकतमं संस्कृतं' तेन तत्र प्रयुज्यते तादृशं एव स सदैव लिखेत्, येन संस्कृतोद्धारः सद्यः स्यात्। तेन तु अचि परे हलि परेऽपि अनुस्वारः क्रियते, यत् साधीयान्।

## विशेष-निवेदनं

अस्माभिः अस्मिन् ग्रन्थे 'मूलं संस्कृतम्' इति नामके पूर्वोक्तान् सर्वान् सुधारान् आधारीकृत्य 'आधुनिकतमं संस्कृतं' लिख्यते, यथा चतुर्लकाराणां प्रयोगः, द्विवचनस्य अप्रयोगः, 'मः अनुस्वारः' इति सूत्रबलात् अनुस्वार-दानं, तथा वाक्य-पदेषु सामान्यतया सन्धि-संयोग-राहित्यं इत्यादि। सरलसन्धयः यत्र तत्र क्रियन्ते, ये व्याकरणसम्मताः, उत प्रशस्ताः, उत एतादृशाः, येषां दानेन संस्कृतपठने भाषणे च 'प्रवाहत्वं' सम्पद्येत। प्रायः चतुःसन्धयः ग्रन्थे सरल-सरलाः दत्ताः यथा

(१) तेऽपि, कोऽपि, काऽपि।

(२) तथैव, नास्ति

(३) अत एव, स्वत एव, यतोहि

(४) आगताऽऽसीत्, आगतोऽस्ति

समासेषु अपि, यत्र आवश्यकं आसीत्, विविध-शब्दाः स्फुटाः दत्ताः सन्ति प्रचलित-परिपाट्यनुसारं, येन कोऽपि भ्रमः न स्यात् यथा

'विदेशीय–आंग्लभाषायाः' इत्यादि

इमे सुधाराः ये पूर्वं अस्माभिः प्रस्ताव-रूपेण, स्वपूर्वग्रन्थे 'कीदृशं संस्कृतम् ?' नामके दत्ताः आसन् १६४६ ई० वत्सरे, ते प्रायः एकादशवर्षेषु संस्कृत-संसारेण, भारतदेशे, विदेशेषु अपि, स्वीकृताः, यतोहि, तेषां अनुसारेण अद्य लेखनादिकं भवति, तथा नवीनसाहित्यरचनाऽपि क्रियते। अतः ते 'स्थायित्वं' प्राप्तवन्तः, यत् कदाचित् आश्चर्यजनकं, एतादृशे स्वल्पकाले। साप्ताहिकादीनि संस्कृतपत्राणि अपि निस्सरन्ति 'आधुनिक-संस्कृत' इति अस्माभि,

पूर्वं सूचितं। अतः अस्माभिः एतेषां स्वल्प-सुधाराणां व्याकरणादि-सम्मतानां निःसंकोचं उपयोगः क्रियते अस्मिन् ग्रन्थे।

## द्वित्र-प्रस्तावाः

द्वित्र-प्रस्तावाः, ये अस्माभिः अस्मिन् ग्रन्थे अद्य क्रियन्ते, यदि तेऽपि संस्कृत-संसारेण विद्वद्भिश्च स्वीकृताः स्युः, तदा अवश्यमेव संस्कृतं विज्ञानयुगानुसारि पूर्णतया स्यात्, येन सर्वेषां विज्ञान-गणितादि-विषयाणां लेखनादिकं सरलं सम्भवेत् :—

## संख्याः अव्ययानि, अट्कुप्वाङ्नुम्व्यवायेऽपि वा, उणादि-प्रकरणं

## (५) गणित-विज्ञान-ज्योतिषादि-शास्त्राणि

इदं नितान्तं आवश्यकं, यत् संख्याः 'अव्ययानि' स्युः, अन्यथा गणित-विज्ञान-ज्योतिषादि-शास्त्र-रचनं प्रायः असम्भवं स्यात्। इदं एव कारणं, यत् अद्य संस्कृतभाषायां गणितादिग्रन्थाः नहि विद्यन्ते, न रच्यन्ते। यत्किञ्चित् अंक-रेखा-बीजादि-गणित-शास्त्रं आसीत्, तत्सर्वं प्रायः लुप्तं, तथा नवीन-रचना तु अस्मात् कारणात् सर्वथा अवरुद्धा एव। युगानुसारि-विज्ञानस्य तु रचना भवति एव नहि। ज्योतिष-शास्त्राणि, यानि प्राचीनानि विद्यन्ते, तेषां अपि लोपः शनैः शनैः भवति। प्रायः प्रयोगे फलित-ज्योतिष-शास्त्रं अवलोक्यते, गणित-ज्योतिःशास्त्रस्य तु नाम अपि नहि श्रूयते। आधुनिक-युगस्य, यत् विज्ञानं तत्सर्वं गणिताधीनं एव। गणितं विहाय तत् ज्ञानं अपि न स्यात्। विज्ञानस्य सूक्ष्मातिसूक्ष्मविचाराः गणितसूत्राधीनः। विज्ञानस्य अपि गणित-सूत्राणि भवन्ति, यथा व्याकरण-शास्त्रस्य अवलोक्यन्ते इदानीं पूर्वाचार्यैः दत्तानि।

## लीलावती–गणितं

इदं कथ्यते जनैः, यत् प्राचीनकाले काचित् लीलावती, एका-सुप्रसिद्धा गणितज्ञा आसीत्, तथा तस्याः अनेकानि गणित-शास्त्राणि आसन्, परन्तु तानि सर्वाणि नहि अवलोक्यन्ते, न कुत्र अपि पाठ्यन्ते। प्राचीनकाले अवश्यमेव बहवः गणितज्ञाः भारते अभवन्। अन्यथा ज्योतिषादि-ज्ञानं कदापि सम्भवं न स्यात्। गणितस्य बहवः सिद्धान्ताः भारतात् एव निस्सृताः, ये अद्य लोके प्रचलन्ति, परन्तु दौर्भाग्यवशात् तेषां नाम अपि अत्र नहि श्रूयते। केवलं गद्य-पद्य-साहित्येन तु किं अपि न स्यात् लोके। अतः गणितस्य अपि प्रचारः नितान्तावश्यकः, यदि वयं इच्छामः, यत् संस्कृतमेव सर्वेषु प्राचीन-अर्वाचीनं-विषयेषु शिक्षा-माध्यमं स्यात्। अद्य किं अपि साधनं नास्ति, येन गणितादिविषयाणां संस्कृते रचनं स्यात्। अतएव वयं कथयामः, यत् 'संख्याः अव्ययानि' मानितानि स्युः, येन संख्यासु पदे पदे, स्थाने स्थाने च 'विकृतिः' विकारः वा न आगच्छेत्। अद्य तु प्रायः प्रत्येकं संख्यायाः रूपाणि चलन्ति, यस्मात् कारणात् पंडिताः अपि तासां प्रयोगे त्रुटिं कुर्व-न्ति। बालकानां कृते तु इदं कार्यं प्रायः असम्भवं एव। यद्यपि अस्माकं याः संख्याः विद्यन्ते, ताः एव संसारस्य संख्याः, तथा संख्याविज्ञानं ताभ्यः निस्सृतं, परन्तु भारते तु अद्य प्राचीनसंख्या-ज्ञानं अर्थात् गणितज्ञानं सर्वथा लुप्तं एव। इदं सत्यं, यत् यथा संस्कृतभाषातः संसारस्य सर्वाः भाषाः निस्सृताः, तथा विशेषतया भारतस्य, तथैव भारतीयगणितशास्त्रात् सर्वं गणितं, असंख्य-शाखा-मयं, निस्सृतं, परन्तु अद्य या दुर्दशा संस्कृतभषायाः विद्यते, सा भार-तीय गणितस्य अपि। अत्र किं आश्चर्यं, यतोहि वयं एव भार-

तीयाः अस्याः हीनदशायाः उत्तरदायिनः। आश्चर्यं तु इदं एव, यत् अद्य पूर्ण-संख्याः अपि नहि विद्यन्ते, तासां नामानि अपि लुप्तानि जातानि। अस्मिन् विषये अस्माभिः विविधोदाहरणानि अत्र दीयन्ते।

## अद्य संख्यानां अपि रूपाणि चलन्ति

(१) 'एक' संख्यायाः रूपाणि, एकवचने, त्रिलिङ्गेषु अनेन प्रकारेण चलन्ति

| विभक्तयः | पुंलिङ्गः | निपुंसकलिङ्गः | स्त्रीलिङ्गः |
|---|---|---|---|
| १ प्र० | एकः | एकं | एका |
| २ द्वि० | एकं | एकं | एकां |
| ३ तृ० | एकेन | (शेषरूपाणियथा | एकया |
| ४ च० | एकस्मै | पुंलिङ्गे) | एकस्यै |
| ५ पं० | एकस्मात् | | एकस्याः |
| ६ ष० | एकस्य | | एकस्याः |
| ७ स० | एकस्मिन् | | एकस्यां |

(२) 'द्वि' संख्यायाः रूपाणि केवलं द्विवचने चलन्ति

| विभक्तयः | पुं० | ( नपुं० स्त्री० ) |
|---|---|---|
| १ ,, | द्वौ | द्वे |
| २ ,, | द्वौ | द्वे |
| ३ ,, | द्वाभ्यां | ( शेषरूपाणि पुं० वत् ) |
| ४ ,, | द्वाभ्यां | |
| ५ ,, | द्वाभ्यां | |
| ६ ,, | द्वयोः | |
| ७ ,, | द्वयोः | |

(३) 'त्रि' संख्यायाः रूपाणि केवलं बहुवचने चलन्ति

| विभक्तयः | पु० | नपुं० | स्त्री० |
| --- | --- | --- | --- |
| १ ,, | त्रयः | त्रीणि | तिस्रः |
| २ ,, | त्रीन् | त्रीणि | तिस्रः |
| ३ ,, | त्रिभिः | शेषरूपाणि | तिसृभिः |
| ४ ,, | त्रिभ्यः | पुं० वत् | तिसृभ्यः |
| ५ ,, | त्रिभ्यः | | तिसृभ्यः |
| ६ ,, | त्रयाणां | | तिसृणां |
| ७ ,, | त्रिषु | | तिसृषु |

(४) 'चतुर्' संख्यायाः रूपाणि केवलं, बहुवचने चलन्ति

| विभक्तयः | पुं० | नपुं० | स्त्री |
| --- | --- | --- | --- |
| १ ,, | चत्वारः | चत्वारि | चतस्रः |
| २ ,, | चतुरः | ,, | ,, |
| ३ ,, | चतुर्भिः | शेषरूपाणि | चतसृभि |
| ४ ,, | चतुर्भ्यः | पुं० वत् | चतसृभ्यः |
| ५ ,, | चतुर्भ्यः | | ,, |
| ६ ,, | चतुर्णां | | चतसृणां |
| ७ ,, | चतुर्षु | | चतसृषु |

(५) पञ्चन्' तथा 'षष्' संख्याद्वयस्य रूपाणि सर्वेषु लिंगेषु समानानि स्युः बहुवचने

| विभक्तयः | पुं० आदि त्रिलिंगेषु | |
| --- | --- | --- |
| १ ,, | पंच | षट् |
| २ ,, | पंच | षट |
| ३ ,, | पंचभिः | षड्भिः |

| | | | |
|---|---|---|---|
| ४ | ,, | पंचभ्य: | षड्भ्य: |
| ५ | ,, | ,, | ,, |
| ६ | ,, | पंचानां | षण्णां |
| ७ | ,, | पंचसु | षट्सु |

(६) 'सप्तन्' 'अष्टन्' संख्याद्वयस्य रूपाणि, केवलं बहुवचने चलन्ति। सर्वेषु लिङ्गेषु समानानि भवन्ति

| विभक्तय: | | | |
|---|---|---|---|
| १ | ,, | सप्त | अष्टौ, अष्ट |
| २ | ,, | ,, | ,, |
| ३ | ,, | सप्तभि: | अष्टाभि:, अष्टभि: |
| ४ | ,, | सप्तभ्य: | अष्टाभ्य:, अष्टभ्य: |
| ५ | ,, | ,, | ,, ,, |
| ६ | ,, | सप्तानां | अष्टानां |
| ७ | ,, | सप्तसु | अष्टासु, अष्टसु |

विशेष सूचना १ :—सर्वासां 'नवन्' 'दशन्' 'एकादशन्' इत्यादि संख्यानां रूपाणि सर्वेषु लिंगेषु 'पंचन्' इति संख्यावत् स्युः।

विशेष सूचना २:—या 'पूर्णिसंख्या' इति कथ्यते, तस्या: अपि रूपाणि त्रिलिङ्गेषु चलन्ति। पुंलिङ्गे तु 'बालकवत् तथा सर्ववत्', नपुंसकलिङ्गे 'फलवत् तथा सर्ववत्' तथा स्त्रीलिङ्गे प्रथमा-द्वितीया-तृतीयासु 'गंगावत् तथा सर्वावत्' तथा अन्यासु विभक्तिषु 'नदीवत्' रूपाणि चलन्ति

## पूर्णि-संख्याः अपि 'अव्ययानि' स्युः

| संख्या | पूर्णिसंख्या पुं० तथा नपुं० लिङ्गे | स्त्री० | व्याख्या |
|---|---|---|---|
| १ एक | प्रथम (अग्रिम, आदिम) | प्रथमा | पूर्णि-संख्यानां अपि |

| | | |
|---|---|---|
| २ द्वि | द्वितीय | द्वितीया रूपाणि 'त्रिलिंगेषु' न |
| ३ त्रि | तृतीय | तृतीया चलेयुः। परन्तु 'तम' |
| ४ चतुर् | चतुर्थ | चतुर्थी शब्द-दानेन इदं कार्यं |
| ५ पञ्चन् | पञ्चम | पञ्चमी कृतं स्यात् यथा |
| ६ षष् | षष्ठ | षष्ठी 'एकतमः, एकतमं |
| ७ सप्तन् | सप्तम | सप्तमी इत्यादि।' उत 'प्रथम, |
| ८ अष्टन् | अष्टम | अष्टमी द्वितीय' इति रूपे |
| ९ नवन् | नवम | नवमी एव तिष्ठेत् सर्वेषु |
| १० दशन् | दशम | दशमी लिंगादिषु अव्ययं' इति मत्वा। |

अनेन प्रकारेण अवलोकयिष्यते, यत् सर्वासां संख्यानां रूपाणि चलन्ति, यथा अन्यासु संज्ञासु भवति। एतासां सर्वासां संख्यानां रूप-ज्ञानं प्रायः असम्भवं। परिणामे गणितादेः उन्नतिः निर्माणं च सर्वथा अवरुद्धं, यथा अद्य अवलोक्यते। न केवलं एतत्, अपितु अहं अवलोकयामि, यत् प्रायः द्विसहस्रवर्षेषु गणितादेः सर्वं कार्यं ज्ञानं च अवरुद्धं अतिष्ठत्, तथा शनैः शनैः लुप्तप्रायं जातं। अत्र संदेहलेशोऽपि नास्ति इति स्पष्टं। अस्य ज्वलत्प्रमाणं तु इदं एव, यत् अद्य संस्कृत-साहित्ये अङ्कगणित-रेखागणित-बीजगणितादि-ग्रन्थानां प्रायः अभावः एव प्रतीयते। प्राचीनसाहित्ये ग्रन्थाः आसन्, परं तेषां कथं लोपः जातः, इत्यपि नहि ज्ञायते इदानीं। महाश्चर्यं तु इदं एव, यत् या 'संख्या-गणना' अस्माकं न्यूनातिन्यूनं १९ अंकानां आसीत्, सा अपि अद्य विस्मर्यते पूर्णतया। संस्कृत-कोषेषु अपि तासां नामानि न



मिलन्ति। कदापि कदापि १ संख्या-पदस्य विविधार्थाः दीयन्ते

कोषेषु, येन निर्णयः असम्भवः जायते, यत् वस्तुतः का संख्या अभीष्टा।

## परन्तु वस्तुतः कथं संस्कृत-गणितग्रन्थेषु आसीत् संख्या

इदं प्रतीयते, यत् संस्कृत-गणित-ग्रन्थेषु १६ अङ्कान् यावत् अनेन प्रकारेण आसीत् गणना अर्थात्

"एक, दश, शत, सहस्र, दशसहस्र, लक्ष, दशलक्ष, कोटि, दशकोटि, अर्बुद, दशअर्बुद, खर्व, दशखर्व, नील, दशनील, पद्म, दशपद्म, शङ्ख, दशशङ्ख, इति अङ्क-गणना आसीत्।" तदा 'दशशङ्ख' इति भविष्यति १,०००००००००००००००००० ।

इमानि सर्वाणि संख्या-पदानि संस्कृत-कोषेषु मिलन्ति, परन्तु तत्र प्रायः दीयते, यत् 'संख्या-वाचकं इदं पदं', परन्तु का संख्या इति नहि दीयते तत्र। प्रायः अनेन प्रकारेण अपि दीयते 'एकस्य निधेः नाम', लिंग-भेदोऽपि विद्यते, एतेषां सर्वेषां पदानां कोषेषु। यदि एकं पदं एकस्मिन् कोषे पुंलिङ्गः विद्यते, तदा द्वितीयकोषे 'निपुंसकलिङ्गः' दीयते, तथा संख्यागणनाऽपि प्रायः भिन्ना एव, या कदापि कदापि दीयते, परन्तु कोष-लेखकैः 'अन्वेषणं' नहि क्रियते, यत् वस्तुतः इयं संख्या का ? यदि इमाः संख्याः इमानि अङ्क-नामानि 'अव्ययानि' न मतानि स्युः, तदा गणित-ज्ञानं दुर्लभं असम्भवं च भवेत् इति अस्य सर्वस्य निष्कर्षः।

## अव्ययं, अव्ययानि वा कानि ?

अव्ययस्य 'लक्षणं' अनेन प्रकारेण क्रियते यथा

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु,
वचनेषु च सर्वेसु, यत् न 'व्येति' तत् अव्ययं'।



यत् एकरूपे एव सर्वेषु लिङ्गेषु, वचनेषु, तथा सर्वासु विभ

क्तिषु तिष्ठेत्, तदेव 'अव्ययं' कथ्यते। कोऽपि विकारः, काऽपि विकृतिः वा अव्यये न आगच्छति। इदं नितान्तं आवश्यकं, यत् सर्वाः संख्याः "अव्ययानि" मतानि स्युः, यदि वयं भारतीयाः इच्छामः, यत् गणित-विज्ञान-ज्योतिषादि-गणिताधारित-विद्यानां प्रचारः प्रसारश्च स्यात्। अनेन अयं अपूर्वलाभः भविष्यति, यत् संख्यानां एकं रूपं सर्वासु दशासु स्थास्यति, यत् आवश्यकं अनिवार्यं च। तदा असंख्यातानि रूपाणि न दत्तानि स्युः, यथा अद्य क्रियते। गणितादिषु एकं रूपं संख्यानां आवश्यकं।

### कथं संख्याः 'अव्ययानि' स्युः?

इदं सम्यक् विचारणीयं अस्माभिः सर्वैः, यतोहि इदानीं तु संख्याः अव्ययानानि नहि विद्यन्ते। इदं 'संशोधनं' नितान्तं आवश्यकं संस्कृताव्याकरणे, तथा सर्वेषु गणितादिग्रन्थेषु, ये प्राप्यन्ते। संख्या-रूपाणि सर्वथा अनावश्यकानि, तथा सर्वथा हानिकराणि। लक्षशः व्यर्थ-पदानां न्यूनताऽपि भविष्यति संस्कृते, तथा तेषां लेखने समयस्य अपव्ययोऽपि नहि भविष्यति। यत् अव्यय-रूपं संख्यानां दास्यते अत्र, तस्मिन् काऽपि भिन्नताऽपि आवश्यकीस्यात् सौविध्याय, तस्मात् रूपात् यत् अद्य प्रचलितं विद्यते। इदं 'संशोधनं' अपि आवश्यकं, अन्यथा विशेषलाभः न स्यात्। मम विचारे यत् रूपं उचितं, आवश्यकं च, तदेव अत्र दीयते। विद्वद्भिः विचारणीयं इदं सर्वं, तथा एकीभूय निर्णयः कार्य्यः सभायां, अन्यप्रकारेण वा। परन्तु यदि मम निवेदनं स्वीकृतं स्यात् अधिकांश-विद्वद्भिः, तदा एतादृशी आवश्यकता नास्ति। मम विचारे येन प्रकारेण आगामि-काले संख्या-गणना स्यात्, तस्याः गणनायाः अयं प्रकारः स्यात् यथा

## संख्या-गणना 'अव्यय-रूपा'

| | |
|---|---|
| एक<br>द्वि<br>त्रि<br>चतुः<br>पंच<br>षड<br>सप्त<br>अष्ट<br>नव<br>दश | व्याख्या—इमाः संख्याः अस्मिन् रूपे एव 'अव्ययानि' स्युः। चतुर् स्थाने चतुः, पंचन् स्थाने केवलं पंच, षष् स्थाने केवलं षड, तथा सप्तन्, अष्टन्, नवन्, दशन्, एतेषां सर्वेषां स्थाने केवलं सप्त, अष्ट, नव, दश, इत्येव तिष्ठेत्। इदं तु सुष्पष्टं एव, यत् यदा इमाः संख्याः एकतः आरभ्य दश-पर्यन्तं अव्ययानि मतानि भविष्यन्ति, तदा एतेषु 'अव्ययेषु' त्रिलिंगेषु त्रिवचनेषु सर्वासु च विभक्तिषु कोऽपि विकारः न आगमिष्यति। इमाः सर्वाः संख्याः 'स्वरूपे' सर्वासु दशासु स्थास्यन्ति। अनन्तरं सर्वत्र अनेन प्रकारेण एव स्यात् शत-पर्यन्तं यथा— |

| | |
|---|---|
| दश एक | (न तु 'एकादशन्' यथा इदानीं विद्यते) |
| दश द्वि | ( ,, ,, 'द्वादशान्' ,, ,, ,, ) |
| दश त्रि | ( ,, ,, 'त्रयोदशन्' ,, ,, ,, ) |
| दश चतुः | ( ,, ,, 'चतुर्दशन्' ,, ,, ,, ) |
| दश पंच | ( ,, ,, 'पंचदशन्' ,, ,, ,, ) |
| दश षड | ( ,, ,, 'षोडशन्' ,, ,, ,, ) |
| दश सप्त | ( ,, ,, 'सप्तदशन्' ,, ,, ,, ) |
| दश अष्ट | ( ,, ,, 'अष्टादशन्' ,, ,, ,, ) |
| दश नव | ( ,, ,, 'नवदशन्, एकोनविंशति, ऊनविंशति, एकान्नविंशति विद्यते ) |
| विंशति | ( इयं विंशति संख्या अस्मिन् रूपे 'अव्ययं' स्यात् ) |

तत्पश्चात् अपि अनेन प्रकारेण गणना स्यात् नवति नव पर्यन्तं यथा—

विंशति एक ( न तु 'एकविंशति' यथा इदानीं विद्यते )
विंशति द्वि ( ,, ,, द्वाविंशति' ,, ,, ,, )
विंशति त्रि ( ,, ,, 'त्रयोविंशति' ,, ,, ,, )
विंशति चतुः इत्यादि
विंशति पंच
विंशति षड
विंशति सप्त
विंशति अष्ट
विंशति नव
त्रिंशत् इत्यादि

विशेष सूचना:-यः संख्याक्रमः अस्माभिः अत्र दीयते, स एव भारते प्रचलितः क्रमः विद्यते, तथा आंग्लादिभाषासु, अन्यासु अपि, विदेशेषु च अवलोक्यते। अर्थात् नवति नव संख्या पर्यन्तं 'एक, द्वि' इत्यादि विंशति त्रिंशत् आदि संख्यानां 'दक्षिण-हस्त-दिशि' दत्ताः स्युः यथा उपरि विद्यते। पूर्वक्रमः वाम-हस्त-दिशि दानस्य आसीत्, यस्य परित्यागः आवश्यकः यथा अधः स्पष्टः स्यात्।

**अन्याः सर्वाः संख्याः अनेन प्रकारेण 'अव्ययानि'**

त्रिंशत्
चत्वारिंशत्
पंचाशत्
षष्टि
सप्तति
अशीति
नवति
शत, एकशत वा

व्याख्या :—अस्मिन् रूपे एव इमाः संख्याः 'अव्ययानि' मतानि स्युः।

शत एक
शत द्वि
शत त्रि
शत चतुः
शत पंच
शत षड
शत सप्त
शत अष्ट
शत नव
शत दश

व्याख्याः—पुनः स एव क्रमः, यः उपरि दत्तः अस्माभिः 'दश एक' आरम्भ 'विंशति नव' पर्यन्तं।

शत दशएक इत्यादि 'एकशत नवति नव-पर्यन्तं अर्थात् १९९ संख्या पर्यन्तं। परन्तु २०० संख्या 'द्विशत' अनेन प्रकारेण लेखिष्यते तथा ३०० 'त्रिशत', ४०० चतुःशत' ९०० 'नवशत' पर्यन्तं। अत्र 'वाम-हस्त-दिशि' 'द्वि, त्रि, चतुः' आदि संख्याः नव-पर्यन्तं दास्यन्ते। एवमेव २००० द्विसहस्र इत्यादि दशशंख-पर्यन्तं यथा—

१००० सहस्र — १०००० दश सहस्र
१००००० लक्ष — १०००००० दश लक्ष
१०००००००० कोटि — १००००००००० दश कोटि
१००००००००० अर्बुद — १०००००००००० दश अर्बुद
१००००००००००० खर्व — १०००००००००००० दश खर्व
१००००००००००००० नील — १०००००००००००००० दश नील
१००००००००००००००० पद्म — १०००००००००००००००० दश पद्म
१००००००००००००००००० शंख — १०००००००००००००००००० दश शंख

परन्तु यदि १००८ संख्या विद्यते, तदा अस्याः पठनं स्यात् 'एक सहस्र अष्ट' अनेन प्रकारेण दश शंख-पर्यन्तं। यः पूर्व-संख्या पठन-क्रमः विद्यते, स तु सुष्ठु नास्ति, यथा पूर्व-संख्या पठयिष्यते 'अष्टाधिकैकसहस्रं' तथा १८४ संख्या पठयिष्यते 'चतुरशीत्याधिकैकशतं'। यदि रूपाणि चलेयुः, तदा लक्षशः रूपाणि भवेयुः। अनेन मार्गेण गणितस्य लोपः जातः। तत्र 'अधिक, ऊन' इत्यादि तथा सन्ध्यादिः अनावश्यकः यथा—

| | |
|---|---|
| शत<br>द्विशत<br>त्रिशत<br>चतुःशत<br>पंच शत<br>षड शत<br>सप्त शत<br>अष्ट शत<br>नव शत<br>सहस्र, एक सहस्र वा | व्याख्या :—इमाः सर्वाः संख्याः अस्मिन् रूपे एव 'अव्ययानि' मतानि स्युः दश शंख-पर्यन्तं। |

## शेष संख्याः शंख-पर्यन्तं इमाः स्युः 'अव्ययानि'

सहस्र, दशसहस्र, लक्ष, दशलक्ष, कोटि, दशकोटि, अर्बुद, दशअर्बुद, खर्व, दशखर्व, पद्म, दशपद्म, शंख दशशंख' इति संख्याः अस्मिन् रूपे एव 'अव्ययानि' स्युः। गणना-क्रमः तु अस्माभिः पूर्वं एव दत्तः, यदनुसारं १६ अङ्काः भारतीय संख्या-गणनायां' तिष्ठेयुः।

## अरबी-गणना

या 'अरबीगणना' पाश्चात्यैः तथा 'आंग्लभाषाविद्-भारतीयैः' कथ्यते, सा तु वस्तुतः "भारतीयगणना" एव। पाश्चात्यैः तु अनेन प्रकारेण कथयितुं शक्यते, यतोहि तैः इयं 'गणना' अरबदेशीयेभ्यः जनेभ्यः सर्वप्रथमं ज्ञाता, परन्तु अरब-देशीयैः सर्वप्रथमं इयं 'संख्या गणना' भारतीयेभ्यः ज्ञाता। अतः आदि-स्रोतः तु भारतं एव गणितस्य, यथा लोकभाषाणां, तथा लोक-ज्ञान-विज्ञानस्य। परन्तु अद्य भारतीयाः 'आत्मानं' विस्मरन्ति, येन ते न जानन्ति, यत् ते वस्तुतः प्राचीनकाले कीदृशाः महान्तः गौरवशालिनः आसन्। इदं सर्वं संस्कृत-साहित्यात् एव ज्ञातुं शक्यते, परन्तु संस्कृत-साहित्यस्य ज्ञानाय संस्कृत-भाषाज्ञानं आवश्यकं, यत् अद्य देशे शून्यं इव विद्यते। भारतीयेषु 'आत्म-ज्ञानं असम्भवं यदि तेषु सर्वेषु संस्कृतज्ञानं न स्यात्। अतएव अस्माभिः सर्वेषां भारत-रोगाणां एकमात्रं "रामबाण–औषधं" "संस्कृत–पठन–पाठनं" दीयते। अतः वयं कथयामः 'भारतीय, त्वं संस्कृतं पठेः।' इति।

## 'दशमलव' आदि गणितक्रियाः

इमाः सर्वाः गणित-क्रियाः भारतेन एव 'अन्वेषिताः', भारतात् एव बहिर् गताः। या 'दशमलव' क्रिया कथ्यते, सा तु वस्तुतः भारतीया एव, या अद्य सर्वेषु क्षेत्रेषु 'मुद्रा-मानेषु' 'तोलादि-मानेषु' पुनः आनीयते। याः 'गणित-क्रियाः' सर्वेषां गणित-शास्त्राणां आधार-रूपाः यथा 'योगः, अन्तरं, गुणनं, भागः' इति भारतात् एव निस्सृताः, सर्वस्मिन् लोके प्रसृताः। सर्वसत्य-विद्यामयः ज्ञान-दीपः तु भारतेन एव भारतीयैः वा प्रज्वालितः तथा तैः एव तस्य 'प्रकाशः' सर्वलोके नीतः इति सत्यं, वस्तुतः निर्विवादं च।

परन्तु संस्कृतभाषा-अज्ञानात्, परिणामे संस्कृत-साहित्य–भारतीयेतिहासादि-अज्ञानात्, इयं सर्वा गौरव-गाथा 'आत्मगौरवेतिहासः' नहि ज्ञायते भारतीयैः इत्येव महाखेदस्य वार्त्ता।

अहं क्षमां याचे, यदा अहं कथयामि, यत् अद्य संस्कृतज्ञाः प्रायः नवनवति प्रतिशतं 'गणितं' तु जानन्ति एव नहि। ते गणितस्य सामान्यक्रियाः, गणितशास्त्रस्य आधारभूताः अपि, याः दैनिक-व्यावहारिक-जीवने अनिवार्य्याः, ताः अपि न जानन्ति। गणितस्य सरलप्रश्नाः अपि तेषां कृते जटिल-जटिलाः प्रश्नाः, येषां समाधाने ते सर्वथा असमर्थाः। किं बहुना? ते सामान्य 'धनं, ऋणं, गुणनं, भाजनं' गणित-क्रियाः न जानन्ति। अहं मन्ये, इमाः सर्वाः गणित-क्रियाः गणित-शास्त्रस्य 'आधाराः' तथापि सरलाः। बालाः अपि इमाः सर्वाः जानन्ति, परं वृद्ध-संस्कृतज्ञाः महापण्डिताः अपि ताः न जानन्ति। तदा 'विज्ञानस्य' प्राविधिक-यन्त्रादि- विषयिक-ज्ञानस्य गणिताधारभूतस्य, ते कथं ज्ञातारः भवितुं अर्हन्ति? आधुनिक-युगे 'विज्ञानं' नितान्तं आवश्यकं। 'अभ्युदयः' देशोन्नतिः च कदापि न स्यात्, यावत् एतादृशं ज्ञानं जनेषु नास्ति। गमनागमनस्य अद्य कीदृशानि सुख-साधनानि वायुवत् वेग-युक्तानि, विज्ञानाश्रितानि, धूम्रयान-वायुयानादि-रूपाणि विद्यन्ते। अहं मन्ये यत् 'विज्ञानस्य' दुरुपयोगोऽपि भवितुं अर्हति, परन्तु अत्र विज्ञानस्य न कोऽपि दोषः, अपितु मानवस्य यः लोकनाशं अणु-विस्फोटकादिभिः कर्त्तुं चेष्टते। वस्त्रादि-निर्माणयन्त्राणि, अन्यविविधवस्तुनिर्माणयन्त्राणि, विद्युत्-सुखानि 'विज्ञानं विहाय' कथं भवितुं अर्हन्ति, इति बाल-कोऽपि जानाति। अतएव अहं कामये, यत् संस्कृतज्ञाः अपि वैज्ञानिकाः स्युः, यथा पूर्वकाले आसन्, यैः "पुष्पक-विमानादीनि"

निर्मितानि । यदि अद्य विमानादि-निर्माण सम्भवं, तदा प्राचीनकालेऽपि आसीत् । म० म० पं० कालिप्रसादशास्त्री सम्पादक "संस्कृतम्" महाभागेन सूचितः अहं, यत् विमानादि-निर्माण-विषयिकं साहित्यं इदानीं अपि विद्यते । मया गतेषु चतुः-पञ्चवर्षेषु "संस्कृत-रत्नाकरः" इति पत्रे पठितं आसीत्, यत् एकेन महापंडितेन, कदाचित् हरिद्वार-निवासिना, एकं एतादृशं "काष्ठ-यानं" निर्मितं, यत् 'मृत्तैल-यानवत् ('मोटरः प्राकृत-भाषायां ) चलतिस्म, स्वतएव केनचित् यन्त्रद्वारा । स महानुभावः आंग्लशासकैः कारागारे प्रक्षिप्तः । एवमेव केनाऽपि मुम्बईस्थ-महा-पण्डितेन प्राचीनकलाविज्ञेन एकस्य 'वायुयानस्य' निर्माणं कृतं। स अपि महानुभावः आंग्लशासकैः बन्दी-कृतः । इदं तु सत्यं, यत् प्रथमं पण्डित-द्वयं एतादृशे 'अन्वेषण-कार्ये' वारितं । अनेन प्रका-रेण सर्वं धनं परिश्रमः च विफली-भूतः । अद्य अपि बहवः संस्कृ-तज्ञाः, प्राचीन-कला-विशारदाः 'अन्वेषकाः' भवितुं अर्हन्ति, यदि शासकैः प्रोत्साहनं दीयेत । आंग्लीयभूतानां शासकानां 'संस्कृते, संस्कृतज्ञेषु' विश्वासः नास्ति, अतः एतादृशी दुरवस्था । प्राचीनकाले तु संस्कृतज्ञाः एव 'महावैज्ञानिकाः' 'त्रिविध-यन्त्रादि-विमानादि-अन्वेषकाः, निर्माण-कर्त्तारः' आसन्, परन्तु अद्य तु संस्कृतज्ञेषु 'आत्म-विश्वासोऽपि' नास्ति, येन ते अस्य कार्यस्य सम्पादने असमर्थाः । अतः अन्ये तेषु कथं विश्वासं कुर्युः ?

## गणितं विज्ञानस्य आधारः

पूर्वकथनेन पूर्णतया सुस्पष्टं स्यात्, यत् गणित लोके एकः आवश्यकः विषयः, यस्य पठनपाठनं संस्कृतज्ञानां कृतेऽपि नितान्तं आवश्यकं । विज्ञानस्य आधारोऽपि गणितं एव विद्यते ।

## आधार-क्रिया-धनं

यथा अस्माकं महामुनि–पाणिनिना
"वृद्धिरादैच्" १।१।१

इति सूत्रं सर्वप्रथमं रचितं, येन देववाण्याः संस्कृतस्य, तथा संस्कृतज्ञानां, यदि ते संस्कृतं सम्यग्रूपेण पठेयुः, "वृद्धिः" समृद्धिः च स्यात् , तथैव गणिताचार्यैः सर्वप्रथमं 'गणित-शास्त्रे' "धनं" दत्तं, येन लोकानां 'गणितशास्त्रद्वारा' वृद्धिः समृद्धिः च स्यात्। गणिते 'धनं' इति पदस्य वस्तुतः अर्थः 'वृद्धिः' एव, यतोहि 'विविध-अङ्कानां योगात्' योग–फले 'वृद्धिः' एव जायते।

गणित-शास्त्रे 'धनं' इति आधार-क्रियायाः सर्वत्र विस्तारः एव अवलोक्यते। कथनाय चतुःक्रियाः आधार-रूपाः यथा "धनं, ऋणं, गुणन तथा विभाजनं" परन्तु "ऋणं, गुणनं, विभाजनं" वस्तुतः "धनं" इति क्रियायाः एव विभिन्न-रूपाणि। तेषु सर्वेषु 'ऋणादिषु' धनस्य एव सिद्धान्तः लगति। यदि संस्कृतज्ञाः अपि स्व-वृद्धिं कामयन्ते, तदा तैः न्यूनाति-न्यूनं इमाः चतुःक्रियाः सम्यग्रूपेण ज्ञातव्याः, अन्यथा

"शरीरयात्राऽपि न प्रसिद्धयेत् अकर्मणः"

अर्थात् गणित-ज्ञान-अभावात् लोके व्यावहारिक-जीवनं अपि असम्भवं स्यात्।

## "धनं" क्रिया

अस्याः गणित-क्रियायाः शास्त्रीयनाम तु 'धनं' इत्येव विद्यते, परन्तु अपरनाम 'योगः' इति अपि कथ्यते। यासां संख्यानां 'योगः' क्रियते, ताः सर्वाः 'योज्य-संख्या' इति कथ्यन्ते। तासां संख्यानां 'सर्वयोगः' 'योगफलं' इत्यपि कथ्यते। यत् 'चिह्न'

संख्यानां मध्ये योग-प्रदर्शनाय दीयते, तत् एतादृशं+चिन्हं भवति तथा 'योग-चिन्हं' इति कथ्यते। एतादृशं=चिन्हं संख्यानां अन्ते दीयते, यदा तासां संख्यानां 'सर्वयोगः' क्रियते, तथा 'समान-चिन्हं' इति कथ्यते यथा

(१) ३+४=७ सर्वयोगः (२) तथा धनं=योगः

७६
१८७
६८ योज्य संख्याः उत
७०६ योज्यसंख्या-राशयः
३०६

१३७६ सर्वयोगः

## "ऋणं" क्रिया

अस्याः गणित-क्रियायाः अपरनाम 'अन्तरं, शेषः वा' इति विद्यते। प्रथम-संख्या 'नियोज्य-संख्या' इति कथ्यते, तथा 'अपर-संख्या' 'नियोजकं' इति कथ्यते अर्थात् यस्याः संख्यायाः पूर्व-नियोज्यसंख्यातः 'ऋणं' न्यूनता वा क्रियते। इयं क्रियाऽपि 'धनं' इति क्रियायाः एकः विशेष-प्रकारः। अत्र 'ऋणं' इति क्रियायां 'ऋणचिन्हं' एतादृशं—दीयते संख्या-द्वयस्य मध्ये, तथा यत् 'अवशिष्टं' विद्यते, तत् 'शेषफलं'। इति कथ्यते यथा

(१) ११ - ५ = ६ (२) ४७१००१ नियोज्य-संख्या
२९८८५४ नियोजक-संख्या

१७२१४७ शेष-फलं

इयं 'ऋण-क्रियाऽपि' वस्तुतः 'धन-क्रियायाः' एकः विशेष-प्रकारः। अत्र अयं प्रश्नः विद्यते, यत् (प्रथमोदाहरणे) ५ संख्यायां का संख्या 'युक्ता' कृता स्यात्, यत् योगफलं ११ संख्या स्यात्। उत्तरं तु ऋणे ६ संख्या अस्ति प्रथमोदाहरणे, परन्तु इदं एव उत्तरं आगमिष्यति, यत् यदि ५ संख्यायां ६ संख्यायाः योगः कृतः स्यात्, तदा ११ संख्या भवेत्। अनेन कथनेन अपि ६ संख्या इति 'उत्तरं स्यात्। अस्मात् कारणात् 'ऋणं, अन्तरं, शेषः वा' 'पूरक-धनं, पूरकयोगः वा' इत्यपि कथ्यते।

## "गुणनं" क्रिया

इयं क्रिया गणित-शास्त्रे 'गुणनं' इति कथ्यते। यस्याः संख्यायाः 'गुणनं' भवति, सा 'गुण्यसंख्या' इति कथ्यते। यस्य संख्यया 'गुणनं' क्रियते, सा 'गुणकं' इति कथ्यते। गुणनेन अनेन या संख्या प्राप्ता भवति, सा संख्या 'गुणन-फलं' इति कथ्यते। गुणन-चिन्हं × अनेन प्रकारेण दीयते। यथा—

गुण्य-संख्या

(१) २×१४=२८ (२) ८२७०×८ ( गुणकं )

६६१६० गुणन-फलं

(३) संलग्न-गुणनं अर्थात् विविध-संख्या-राशीनां गुणनं यथा

८२०१×६×१२×१५

८८५७०८० गुणन-फलं

व्याख्या :—धनस्य प्रकारः गुणनं इति स्पष्टं। यदि २ संख्या १४ वारं धनीकृता स्यात् तदा योगफलं २८ संख्या स्यात्, यत् गुणनफलं।

## "भाजनं" क्रिया

यस्याः गणित-क्रियायाः अपरनाम 'भागः' इत्यपि विद्यते। या संख्या विभाज्यते सा 'भाज्य-संख्या' इति कथ्यते। यया संख्यया भाजनं क्रियते सा 'भाजकं' इति कथ्यते। अत्र प्रश्नः तु अयं एव, यत् कति-वारं 'विभाजक-संख्या' 'भाज्य-संख्यायां' पूर्णीभवति। यति वारं पूर्णीभवति, सा संख्या 'भजन-फलं' इति कथ्यते, तथा अवशिष्ट-संख्या 'शेषः' इति कथ्यते। 'भाग-चिन्हं'÷ अनेन प्रकारेण दीयते।

(१) १८४ ÷ १२ = १२) १८४ (१५
१२
―――
६४
६०
―――
४

अत्र १८४ भाज्य-संख्या, १२ भाजक-संख्या, १५ भजनफलं तथा ४ संख्या 'शेषः' इति विद्यते। अत्र 'धनं' इति गणित-सिद्धान्तस्य एकः विशेषविस्तारः विशेषप्रकारः वा अवलोक्यते। प्रश्नः तु केवलं अयं एव, यत् कतिवारं १२ संख्या पूर्णतया १८४ संख्यायां 'युक्ता' कर्त्तुं शक्यते। उत्तरं अनेन प्रकारेण अपि १५ आगच्छेत् तथा ४ शेषः इत्येव स्यात् यथा उपरि अवलोक्यते।

सूचना :—यदि एका संख्या स्यात् यथा ८७, तदा एकः 'संख्याराशिः' इति कथ्यते, परन्तु यदि बहवः संख्या-राशयः स्युः यथा ८८+७०२+४१२ इत्यादि तदा 'संख्या राशयः' इति कथ्यन्ते।

## धन-गणनं



प्राकृत-भाषायां 'पहाड़ा' इति कथ्यते। मौखिक-धन-गणनायां

अस्य विशेष-लाभः भवति, परन्तु लिखित-प्रश्नेषु अपि उपयोगः भवति, येन शीघ्रतया प्रश्नोत्तरं दातुं शक्यते विद्यार्थिना, केनाऽपि वा यथा—

धन-गणनं ( पहाड़ा प्राकृत-भाषायां )

| | | | |
|---|---|---|---|
| २ | ४ | ६ | ११ |
| ४ | ८ | १२ | २२ |
| ६ | १२ | १८ | ३३ |
| ८ | १६ | २४ | ४४ |
| १० | २० | ३० | ५५ |
| १२ | २४ | ३६ | ६६ |
| १४ | २८ | ४२ | ७७ |
| १६ | ३२ | ४८ | ८८ |
| १८ | ३६ | ५४ | ६६ |
| २० | ४० | ६० | ११० |

एतेषां पठनं अनेन प्रकारेण एव स्यात्। 'द्वि, द्वि द्वि चतुः, द्वि त्रि षड, द्वि चतुः अष्ट, द्वि पञ्च दश, द्वि षड दशद्वि, द्वि सप्त दश-चतुः, द्वि अष्ट दशषड, द्वि नव अष्टदश, द्वि दश विंशति। दश एक, दश एक द्वि विंशतिद्वि, दश एक त्रि त्रिंशत्त्रि, दश एक चतुः चत्वारिंशत् चतुः, दश एक पंच पञ्चा-शतपञ्च, दश एक षड षष्टिषड, दश एक सप्त सप्ततिसप्त, दश एक अष्ट अशीति अष्ट, दश एक नव नवतिनव, दश एक दश शतदश।

सूचना (१) :—अत्र इदं आवश्यकं यत् संख्याः 'अव्ययानि' मतानि स्युः, अन्यथा पठनं संभवं न स्यात्। इदं अपि आवश्यकं, यत् यानि रूपाणि 'अव्ययानि' दत्तानि, तानि एव प्रयुक्तानि स्युः। अन्यत् रूपं अपि 'अव्ययं' भवितुं अर्हति संख्यानां, यदि विद्वद्भिः मिलित्वा निर्णीतं स्यात्। परन्तु इदं स्पष्टतया ज्ञातव्यं, यत् यावत् संख्याः 'अव्ययानि' न मतानि स्युः, तावत् 'गणित-शास्त्रं' असम्भवं। संख्यासु 'सन्धिः' कदापि भवितुं नहि अर्हति, न कदापि क्रियेत। संख्या अव्यय-रूपे एव सदैव पृथक् पृथक् देयाः यथा अत्र दीयन्ते।



सूचना (२) :—अत्र अपि धन-क्रिया विद्यते। यतोहि

२+२=४, २+२+२=६, २+२+२+२=८ इत्यादि अर्थात् यदि द्वि संख्याया: 'धनं' वारद्वयं कृतं स्यात्, तदा चतुः एव स्यात्। यदि द्वि संख्याया: धनं वारत्रयं कृतं स्यात्, तदा षड भवेत् इत्यादि। अतः अस्माभि: धन-गणना एव ( पहाड़ा प्राकृतभाषायां ) इयं क्रिया कथ्यते। इयं क्रिया 'गुणनं' अपि कथयितुं शक्यते यथा २×२=४, परन्तु 'गुणनं' धन-क्रियाया: एव एकं रूपान्तरं विद्यते।

## मिश्रसंख्या

मिश्रसंख्या भिन्नं, इति कथ्यते यथा—$५\frac{३}{५}$ अर्थात् ५ पूर्णांक: तथा त्रि उपरि पंच। त्रि उपरि पंच इति कथनात् प्रयोजनं भवति, यत् एकपूर्णाङ्कस्य पंचभागा: कृता:, तेषु त्रिभागा: गृहीता:। पंच भागा: 'हर:' इति कथ्यते तथा त्रि 'अंश:' इति कथ्यते। 'पूर्णाङ्क:' इति कथनस्य आवश्यकता नास्ति। संक्षिप्य 'पूर्ण:' 'अङ्क' वा कथयितुं शक्यते यथा पंच पूर्ण:, पंच अङ्क:वा त्रि उपरि पंच=$५\frac{३}{५}$ इति 'मिश्रभिन्नं'। अयं एव लेखनक्रम: गणितस्य, यस्य उपरि भूयोऽपि संस्कृतभाषायां गणित-भवनस्य निर्माणं भवितुं अर्हति। रेखा-गणिते, बीजगणिते, तथा गणितस्य अनेकानेक-शाखासु अंकानां तथा संख्यानां आवश्यकता तु पतति एव। इदं आवश्यकं यत् सर्वे संस्कृत-छात्रा: विद्यालय-महाविद्यालय-विश्वविद्यालयेषु 'गणित' सर्वासु शाखासु पठेयु:।

## भौतिक-विज्ञानादि-विषयेषु

एतेषु सर्वेषु भौतिकादि-विज्ञान-विषयेषु सरलतया ज्ञातुं शक्यते, यत् सर्वत्र गणितस्य आवश्यकता आपतति। अद्य किं अपि एतादृशं विज्ञानं नास्ति, यत्र गणितस्य आवश्यकता न स्यात्।

'विविधविज्ञानानां विविध-निष्कर्षाः 'तत्तद्-विज्ञान-सूत्रेषु' गणितमयेषु दीयन्ते, यत्र सदैव अङ्कानां, संख्यानां प्रयोगोऽपि भवति। इदं सर्वं सरलतया विज्ञान-ग्रन्थेषु केनाऽपि संस्कृत-पंडितेन अवलोकयितुं शक्यते। विस्तार-भयात् अहं अत्र विविध-विज्ञानां, विविध-विविध-सूत्राणि संख्यादि-युक्तानि न ददामि,यतोहि इमानि सर्वाणि असंख्यातानि।

## यदि संस्कृत राष्ट्रभाषा भवेत् ?

इदं सुविदितं सर्वेषां जनानां, यत् प्राचीनभारते संस्कृतमेव अस्य देशस्य मातृभाषा राष्ट्रभाषा च आसीत्। न केवलं एतत्, अपितु राजभाषाऽपि आसीत्, तथा अस्यां एव भाषायां 'भारतीय विधानं' आसीत्, तथा संस्कृत-माध्यमेन एव भारतीयन्यायालयेषु न्यायः भवतिस्म। संस्कृतं एव सर्वस्मिन् भारते शिक्षा-माध्यमं अपि आसीत्। संस्कृतं-माध्मेन एव भारतीयविद्यालयेषु सर्वेषां विषयाणां पठनपाठनं चलतिस्म अर्थात् न केवलं अध्यात्म-तत्त्वविद्या-इतिहास-साहित्यादीनां, अपितु विज्ञान-विषयाणां अपि, यस्मात् कारणात् प्राचीन-भारते विमानादि-निर्माणं सम्भवं जातं। साहित्यादि-विषयिकं साहित्यं तु प्रचुर-मात्रायां इदानीं अपि संस्कृते प्राप्यते, परन्तु विज्ञान-विषयिक-साहित्यं नगण्यं एव। यत्किञ्चित् विज्ञान-साहित्यं विद्यते, तत्सर्वं अस्त-व्यस्तं एव। तत्र कोऽपि ध्यानं न ददाति। एकः ग्रन्थः विमानकला-विषयिकः सार्वदेशिक-आर्यप्रतिनिघिसभया प्रकाशितः।

## विज्ञानसाहित्यस्य परमावश्यकता

परन्तु यदि संस्कृतं राष्ट्रभाषा भवति भारते भूयोऽपि, तदा राजभाषा अर्थात् भारतीयन्याय-भाषा, तथा भारतीयशिक्षा-भाषाऽपि अवश्यं एव स्यात्। संस्कृतं एव 'भारतीया भाषा आदि-

कालतः।' संस्कृतं न काऽपि क्षेत्रीया भाषा प्रान्तीया वा। यदि संस्कृतं भारतीयशिक्षाभाषा भवति पूर्ववत्, तदा कथं न संस्कृते विज्ञान-साहित्यं भवेत् ? इदं तु नितान्तं आवश्यकं अनिवार्यं च। अद्य तु वैज्ञानिक-युगं 'यन्त्रादीनां, विमानादीनां, धूम्र-विद्युत्-यानादीनां अस्ति। कोऽपि देशः भौतिकोन्नतिं कर्त्तुं न शक्नोति, यावत् स देशः विज्ञानं न पठेत् विविध-रूपेषु। यदि 'निःश्रेयसं' भारतीयानां चरमोद्देश्यं, तदा लोकाभ्युदयोऽपि तेषां लोक-कल्याणाय उद्देश्यं। यदि अस्माकं धर्मस्य, संस्कृतेः काऽपि 'शिक्षा' विद्यते, तदा तु सा 'अभ्युदय-निःश्रेयससिद्धिः' एव। लोकप्राप्तिः, ईश्वर-प्राप्तिः, इति उद्देश्य-द्वयं आवश्यकं, यतोहि केवलं 'अध्यात्म-वादेन' उत केवलं भौतिकवादेन जीवनोद्देश्य-प्राप्तिः न स्यात्। यदि शारीरिकसुखं नास्ति, तदा 'आत्म-सुखं' अपि सामान्य जनानां कृते असम्भवं इति 'नियमः'। कोऽपि 'विरलः जनः' साफल्यं आप्नुयात्, तदा नियमस्य 'अपवाद-मात्रं' एव स्यात्। 'लोक-संग्रहः' अपि गीतोपदेशः अस्ति।

## तदा संस्कृतं कीदृशं ?

यदि भारतीयानां एतादृशं उद्देश्यं, तदा संस्कृतं 'युगानुसारि' स्यात् इति आवश्यकं। अस्मात् कारणात् एव यत्र तत्र 'संशोधनं' लेखनादि-परिपाट्यां 'परिवर्त्तनं' युगानुसारं नितान्तं आवश्यकं। ये संस्कृतज्ञाः अस्य विरोधं कुर्वन्ति, ते तु वस्तुतः देववाण्याः संस्कृतस्य शत्रवः एव। यदि संस्कृतं राष्ट्रादिभाषा भवितुं अर्हति, तदा तु दश, दशपञ्चवर्षेषु एव भवेत् अन्यथा कदापि नहि। तावत्पर्यन्तं संस्कृतज्ञैः मिलित्वा संस्कृतस्य युगानुसारि-विज्ञान-क्षमं, भाषण-भाषादिक्षमं रूपं करणीयं, अन्यथा संस्कृतं कथन-मात्रेण एव

एका भारतीया भाषा स्यात्। काऽपि क्षेत्रीया भाषा समग्र-भारतस्य 'राष्ट्रादिभाषा, विदेशीय आंग्लभाषा-स्थाने' भवितुं न अर्हति, इति निर्विवादं, पूर्णतया स्पष्टं च। संस्कृतं एव 'भारतीया भाषा' इति अस्माभिः सहस्रवारं कथितं, तथा अस्मात् कारणात् अयं लेखन-प्रयासः। अहं तु वारं वारं साटोपं घोषयामि, यत् 'संस्कृतेन एव क्षेत्रीयभाषा-समस्या समाधातुं शक्यते, तथा तेन एव भारत-कल्याणं कर्त्तुं शक्यते न अन्यथा। नास्ति कोऽपि अन्यः उपायः भारत-कल्याणस्य। यदि संस्कृतज्ञानां प्रमादात्, आलस्यात्, राष्ट्र-समस्या-ज्ञान-अभावात् अर्थात् अज्ञानात् 'संस्कृतं राष्ट्रादिभाषा न भवति विदेशीय-आंग्लभाषा-स्थाने' तदा 'भारत-विभाजनं' प्रान्ते प्रान्ते अवश्यम्भावि, इति अस्माकं 'घोषणा' इति अस्माकं 'भविष्य-वाणी', यतोहि तदा किं अपि "भारतैक्यसूत्रं" न विद्येत? अद्य 'विदेशीय-आंग्लभाषा भारतैक्य-सूत्रं' विद्यते। विदेशीय आंग्लभाषा-गते, तस्याःस्थानस्य, कयाऽपि भारतीय-भाषया अपूर्ति-दशायां 'भारतं खण्ड-खण्डं' स्यात् इति अवश्यम्भावि। अयं एव सम्भावि-भारतनाशः, यदि भारतीयाः, शासकाः अपि 'तिष्ठति समये' सद्बुद्धिं न आप्नुयुः। संस्कृतस्य भारतीयभाषा-स्थानं इतिहास-सिद्धं, निर्विवादं च, सृष्टिकालात् आरभ्य अद्य पर्यन्तं विद्यते। शासकाः इदं सर्वं जानन्ति न वा, ज्ञातुं इच्छन्ति न वा, अहं न जानामि, यतोहि ते 'आंग्लभाषा-सभ्यतादि-विमोहिताः, पथभ्रष्टाः, आत्म-ज्ञान-प्राचीन-गौरवज्ञान-विरहिताश्च, परन्तु संस्कृतज्ञाः इदं तथ्यं न बुद्ध्येरन् इति महाश्चर्यं। अत्र एव 'मम आशा' 'निराशा-निशायां' परिवर्त्तते, तथा 'भविष्यं किं?' इति 'घोरान्धकारे' तिरोहितं इव प्रतिभाति। अन्यथा न केवलं

अहं 'आशावादी' अपितु संस्कृतस्य भविष्ये 'समपूर्ण-विश्वासः'। यदि संस्कृतज्ञाः एकीभूय, परस्परं ईर्ष्या-द्वेषादिकं सर्वथा विहाय, संस्कृतं युगानुसारि कुर्युः, तदा का शक्तिः नाम, या संस्कृतस्य 'राष्ट्रभाषा-मार्गे आगच्छेत्? वयं संस्कृतज्ञाः एव मार्गे कण्टकरूपाः इति मे मतिः, मे भीतिः। परिणामे, वयं संस्कृतज्ञाः एव संस्कृत-भाषा-शत्रवः, न केऽपि अन्ये इति सत्यं। मुख्योत्तरदायित्वं तु अस्माकं एव।

## (६) अट्कुप्वाङ् नुम्‌व्यवायेऽपि ८।४।२

अस्मिन् सम्बन्धे अस्माभिः गताध्याये संकेतमात्रेण निवेदनं कृतं। अत्र किं अपि विस्तारपूर्वकं दीयते, येन आशयः सुस्पष्टः स्यात्। तत्र कथितं आसीत्, यत् 'सूत्रबलात्', यत् उपरि दीयते, नकारस्य णकारः भवति। अस्मिन् सम्बन्धे केवलं इदं एव विशेष-निवेदनं, यत् "वैकल्पिक-विषयः" अयं मतः स्यात् अर्थात् नकारोऽपि स्थातुं शक्नुयात्, तथा णकारोऽपि स्यात् वैकल्पिकरूपेण। अस्माकं अनुभवः तु अयं एव, यत् अत्र विद्वांसोऽपि त्रुटिं कुर्वन्ति, तदा का कथा बालकानां संस्कृत-विद्यार्थिनां? नियमे काचित् शिथिलता क्रियेत चेत्, केवलं वैकल्पिक-रूपे, तदा महत् सौविध्यं सम्पद्येत। केवलं अयं सुधारः आवश्यकः। यदि अयं सुधारः साधुः इति मतः स्यात् विद्वद्भिः, तदा सूत्रस्य इयं स्थितिः भवेत् यथा—

"अट्कुप्वाङ्नुम्‌व्यवायेऽपि वा"

अर्थात् वैकल्पिक-रूपेण नकारस्य णकारः स्यात्। अनेन स्वल्प-सुधारेण एकं महत् काठिन्य-कारणं संस्कृतभाषातः दूरीभवेत्।

अनेन काऽपि हानिः भाषायाः व्याकरणस्य वा नास्ति इति सर्वे सरलतया ज्ञातुं शक्नुवन्ति ।

## संस्कृत-भाषायां किं अवलोक्यते ?

अस्माभिः प्रायः अवलोक्यते, यत् संस्कृत-भाषायां एतादृशानि बहूनि पदानि विद्यन्ते, येषां रूप-द्वयं प्रचलितं आस्ते। तत्र काऽपि आपत्तिः कस्य अपि विदुषः नहि भवति प्रयोगकारणात्, स्वत एव अभ्यासात् । अस्माभिः कतिपय-उदाहरणानि पूर्वं दत्तानि आसन्', तानि इमानि यथा—

"अवकाशः, अवकासः

"शस्त्रं, सस्त्रं

"निकषः, निकसः

"बिन्दुः, विन्दुः" इत्यादि बहूनि पदानि

अतः काऽपि हानिः न स्यात् भाषायाः यदि अधः दत्तानि इमानि रूपाणि अपि "वैकल्पिकानि" मतानि स्युः । यदि पूर्व-सूत्रं स्वरूपे तिष्ठेत्, तद ।तस्य बलात्

"रामेण, रामाणां"

इति भवति। परन्तु यदि वैकल्पिक-रूपेण नकारस्य णकारः मतः स्यात् तदा

"रामेन, रामानां"

इति अपि रूपं साधु भवेत्। अत्र का हानिः ? अपितु अहं मन्ये महालाभः एव स्यात् परिणामे। बहुषु स्थलेषु इदं अवलोक्यते, यत् णकारस्य, विशेषतया हलन्त 'ण्' इति अक्षरस्य उच्चारणं 'अनुस्वरवत्' भवति, तथा णः स्थाने अनुस्वारोऽपि दीयते । अनुस्वारः वस्तुतः हलन्त 'न्' अपि अस्ति इति स्पष्टं यथा—

"दण्ड:" "दंड:" वा

इदं पदं "दंड:" इति अपि दीयते सर्वत्र विद्वद्भि:। तत्र काऽपि आपत्ति: न भवति, न केनाऽपि विदुषा आपत्ति: आलोचना वा क्रियते। न केवलं एतत् अपितु

"ङ्, ञ्, ण्, न्, म्"

इति स्थाने 'अनुस्वार:' एव प्राय: दीयते, दातुं शक्यते नि:संकोचन तत्र काऽपि आपत्ति: अपि भवितुं न अर्हति। अनेन प्रकारेण सर्वत्र संस्कृत-कोषेषु तथा साहित्येऽपि अवलोक्यते। स्व० भारत-रत्न डा० भगवानदासमहाभागेन अस्य मतस्य पुष्टि: क्रियते। अस्माभि: तस्य महाभागस्य मतं तथा उदाहरणानि दीयन्ते, येन इदं सर्वं पूर्णतया स्पष्टं स्यात्। तेन महाभागेन एकस्मिन् स्थले दीयते यत्

"संस्कृत-भाषाया: प्रचार: साधारणजनतायां अभिलषित: चेत् तस्या: व्याकरणं सरली-कर्त्तव्यं।

**"अंक-अङ्कयो:, पंच-पञ्चयो:, दंड-दण्डयो:, मंद-मन्दयो:, कंप-कम्पयो:"**

उच्चारणे न कोऽपि भेद: श्रोत्रेण बुध्यते। अतएव अनु-नासिकवर्णानां स्थाने पूर्ववर्ण-शिर:स्थित: बिन्दु: एव अलं लिप्यां।"

परन्तु अत्र एतादृशी स्थिति: नास्ति, यत् केवलं डा० भगवानदासमहाभागस्य कथनेन एव अयं सुधार: कृत: स्यात्। 'प्रयोग:' तु 'प्रशस्त:' अत्र सन्देहलेशोऽपि नास्ति। पूर्वाचार्यै:, कोषरचयितृभि:, वर्त्तमान-विद्वद्भि: अनेन प्रकारेण लेखादिषु सर्वत्र

क्रियते। सर्वप्रथमं तु विदुषां प्रयोगः एव अत्र प्रमाणं। व्याकरणेऽपि अस्य सिद्धान्तस्य स्वीकृतिः विद्यते, तथा तस्य एव विस्तारः आवश्यकतानुसारं कर्त्तुं शक्यते। तद् यथा—

"नश्चापदान्तस्य झलि" ८।३।२४

व्याख्या :—अपदान्तस्य 'नः' 'मः' अनुस्वारः स्यात् झलिपरे इति स्थितिः। अत्र एका वार्त्ता विशेषरूपेण ध्यानपथे आनेतव्या। सर्वेषु व्याकरणेषु अद्य अनेन प्रकारेण अवलोक्यते यथा 'नकारस्य, मकारस्य, मान्तस्य पदस्य इत्यादि,' परन्तु वस्तुतः अत्र प्रयोजनं विद्यते, यत् 'नः स्थाने मः स्थाने अपदान्ते पदान्ते वा अनुस्वारः स्यात्'। प्रयोजनं तु अत्र हलन्त 'न्' 'म्' इति अक्षरैः विद्यते, अतः 'नकारस्य मकारस्य, मान्तस्य पदस्य इत्यादि' स्थाने नः, मः, मन्तस्य पदस्य इत्यादि' इत्येव देयं। यतोहि यदि इदं न कृतं स्यात्, तदा नकारस्य, मकारस्य इत्यादि अक्षराणां कृते किं करिष्यते, यत्र प्रयोजनं न (नकारः) म (मकारः) इति विषये स्यात् अर्थात् यत्र हलन्त न्, म्, अक्षरं नहि विद्यते। हलन्त-व्यञ्जनेषु स्वरसहित-व्यञ्जनेषु अन्तरं अवश्यमेव करणीयं। यत्र प्रयोजनं 'हलन्त-व्यञ्जनानां' तत्र 'नः मः मन्तस्य पदस्य इत्यादि' देयं षष्ठ्यां, परन्तु यत्र प्रयोजनं 'स्वर-सहित-व्यञ्जनानां' तत्र 'नकारस्य, मकारस्य, मान्तस्य, पदस्य इत्यादि देयं', येन भ्रान्तिः न उत्पद्येत। सर्वत्र 'हलन्त-व्यञ्जन-विषये, स्वर-सहित-व्यञ्जन-विषयेऽपि' 'नकारस्य, मकारस्य, मान्तस्य, पदस्य इत्यादि लेखनेन महती भ्रान्तिः उत्पद्यते। सूत्रे अन्यस्मिन् यथा

"मोऽनुस्वारः" ८।३।२३



केवलं 'मः अनुस्वारः स्यात्' इति विद्यते अर्थात् हलन्त 'म्' विषये

विद्यते, यस्य रूपं षष्ठ्यां विभक्तौ 'मः इत्येव स्यात्। सूत्र-व्याख्यायां यत् 'मान्तस्य पदस्य इत्यादि दीयते, तत् 'मन्तस्य पदस्य' इति भाव्यं, यतोहि अत्र प्रयोजनं, केवलं हलन्त 'म्' एव। एतां परिपाटीं अनुसृत्य प्रयोजने काऽपि भ्रान्तिः भवितुं न अर्हति इति विनम्र-निवेदनं।

अयं कश्चित् सूक्ष्म-विचारः, विद्वद्भिः सम्यक्तया विचारणीयः। अस्य कथनस्य, व्याकरण-समर्थितस्य, विद्वत्-प्रयोग-समर्थितस्य, सर्वथा प्रशस्तस्य सारः तु अयं एव यत्

"अट्कुप्वांङ्नुम्व्यवायेऽपि"

इति सूत्रे 'नकारस्य, णकारस्य' प्रयोगः वैकल्पिक-रूपेण भवितुं अर्हति। न काऽपि हानिः अत्र भवितुं अर्हति। यदि कोऽपि महानुभावः संस्कृतज्ञः 'रामेण, रामाणां इत्यादि' लिखति, तत् साधु, तथा 'रामेन' रामानां इत्यादि लिखति, तदपि साधु' मतं स्यात् इति विद्वद्भिः अस्माकं साग्रहं निवेदनं, यतोहि सिद्धान्तरूपे तु अन्यत्र अपि इदं विद्यते अवलोक्यते च।

अयं सिद्धान्तः तु स्वीक्रियते एव, यत् हलन्त 'न्' 'ण्' उच्चारणे कोऽपि भेदः नास्ति यथा

"अन्ध-अन्धयोः, दण्ड-दण्डयोः"

अत्र उच्चारणे कोऽपि भेदः नास्ति, तथा सरलतया स्थान-द्वये अनुस्वारः दातुं शक्यते, दीयते च विद्वद्भिः सर्वत्र। अतः स्वर-सहित 'नकारस्य णकारस्य विषयेऽपि' अयं एव सिद्धान्तः व्यापक-दृष्ट्या देववाण्याः अर्थात् भावि-राष्ट्रभाषायाः संस्कृतस्य हिताय तात्कालिकं स्वीकृतः स्यात्। अस्माकं कोऽपि विरोधः नास्ति। ये महानुभावाः 'रामाणां' इति लेखितुं इच्छन्ति, ते

लिखेयुः। वयं तु केवलं इदं एव निवेदयामः, यत् ये 'रामानां' इत्यपि लिखन्ति, तदपि साधु इति मन्येत। अतः मम विनम्र-मतानुसारं सूत्रस्य इदं रूपं स्यात्, व्यवहारे मन्येत वा यत्

"अट्कुप्वांङ्नुम् व्यवायेऽपि वा" ८।४।२

## उणादि-प्रकरणं

संस्कृतभाषा एतादृशी वैज्ञानिकी भाषा विद्यते, यत् तस्याः व्याकरणे इदं अपि दत्तं अस्ति, यत आवश्यकतानुसारं नवीन-पदानां कथं रचना भवति, तथा यानि पदानि अन्याभ्यः भाषाभ्यः आगतानि सन्ति, तेषां कथं संस्कृती-करणं जायते। एतादृशं तु कदाचित् अन्यस्यां कस्यांचित् अपि भाषायां नहि विद्यते। न्यूनाति-न्यूनं अस्माभिः अन्यत्र कुत्र अपि न अवलोकितं। अनेन निर्विवादं सिद्ध्यति, यत् भारतीयाः ऋषयः मुनयः कीदृशाः दूरदर्शिनः आसन् तथा महावैज्ञानिकाः अपि। अनेन इदं अपि सिद्ध्यति, यत् संस्कृतं कीदृशी प्राचीना समृद्धा च भाषा विद्यते, यस्यां विदेशीय-पदानां ग्रहणस्य तथा नवीन-शब्द-रचनायाः एकः वैज्ञानिकः, व्या-करण-सम्मतः विधिः विद्यते। अनेन इदं अपि सिद्ध्यति, यत् अवश्यमेव संस्कृतभाषा भारतस्य अनन्तकालपर्यन्तं मातृ-राज-राष्ट्र-शिक्षा-भाषा आसीत्, तथा सा कीदृशी प्रगतिशीला आसीत् एतेषु गतेषु अनन्त-युगेषु, यत् अयं विधिः अपि तस्याः व्याकरणे विद्यते। युगे युगे यादृशी आवश्यकता आपतिता तदनुसारं विधिः अपि रचितः। यदि संस्कृतभाषायां विदेशीय-शब्दाः न आगताः भवेयुः, तथा नवीन-शब्द-रचनाः न कृताः स्युः, तदा एतादृशः विधिः निरर्थकः। तदा कदापि एतादृशं व्याकरण-विधानं भवितुं न अर्हति। आवश्यकता एव विधानस्य विधेः वा जननी। यथा भारतीयानां

अबाधरूपेण जगति गमनागमनं भवतिस्म प्राचीनकाले, तथैव तेषां संस्कृतभाषायां शब्दानां अपि गमनागमनं रचनं च निर्बाधं भवतिस्म इति सिद्धं। इयं एव 'सजीवता' तदानींतनस्य भारतीय-राष्ट्रस्य, संस्कृतराष्ट्रभाषायाश्च आसीत्। ये जनाः विचारयन्ति, यत् संस्कृतभाषा 'मृता', अतः सा कदापि भारतस्य राष्ट्र-राज-शिक्षाभाषा भवितुं न अर्हति, न भविष्यति च, विदेशीय-आंग्ल-भाषास्थाने, ते संस्कृतभाषायाः पूर्वेतिहासं, तस्याः आन्तरिक-शक्ति न जानन्ति। अहं मन्ये, यत् अद्य प्रायः संस्कृतज्ञाः अपि इदं सर्वं न जानन्ति, परन्तु यस्मिन् दिने ते ज्ञास्यन्ति, तस्मिन् दिने एव संस्कृतोद्धारः, परिणामे भारतोद्धारः स्यात्, इति अवश्यम्भावी। संस्कृतभाषा तु पूर्ववत् 'सजीवा' विद्यते, तस्यां 'प्राणाः' तु सन्ति एव। केवलं अस्माभिः संस्कृतज्ञैः एव सा 'मृतप्राया' कृता, तस्याः अव्यवहारेण। परन्तु अद्य कोऽपि जाम्ववान् उत्पन्नः जातोऽस्ति, यः हनुमते तस्य वंशस्य पूर्वेतिहासं श्रावयिष्यति। तदा अवश्यमेव हनुमद्-रूपः संस्कृतसमाजः 'आत्मविश्वासं सम्पाद्य' विपत्तीनां 'समुद्रोलङ्घनं' करिष्यति संस्कृतसीतारक्षायै यथा हनुमता कृतं। अस्तु, संस्कृत-क्षेत्रे निराशायाः अन्तः स्यात्। संस्कृतज्ञाः प्रकृतिं आप्नुयुः, स्वस्थाः भूत्वा आत्मवन्तः भवेयुः।

## तदा उणादि-प्रकरणे किं ?

अयं एव सिद्धान्तः स्वीकृतः उणादि-प्रकरणे, यत् एकेन-श्लोकेन सम्यक्तया ज्ञायते यथा

> "संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे,
> कार्यात् विद्यात् अनुबन्धं, एतत् शास्त्रं उणादिषु।"



अस्य तात्पर्यं इदं, यत् याः संज्ञाः व्याकरणस्य केनाऽपि

नियमेन न सिद्धी-भवन्ति, तदा एतादृशाः धातवः प्रत्ययाश्च कल्पनीयाः, येन तासां संज्ञानां सिद्धी-भवेत्। कीदृशः व्यापकः महान् दूरदर्शिता-पूर्णः अयं सिद्धान्तः, अस्माकं पूर्ववैयाकरणानां, ऋषिमुनीनां संस्कृतभाषा-निर्मातृणां ? यद्यपि अस्माकं व्याकरण-शास्त्रे नियत-धातवः प्रत्ययाश्च विद्यन्ते, तथापि नियमरूपेण अत्र दीयते, यत् नवीनधातवः प्रत्ययाश्च ऊह्याः कल्पनीयाश्च, यदि कस्यचित् विदेशीयशब्दस्य, नवीन-शब्दस्य वा सिद्धीकरणे अर्थात् संस्कृती-करणे आवश्यकता आपतेत। अस्मात् अधिकं किं कथयितुं शक्यते केनाऽपि वैयाकरणेन ? किं इदं संस्कृतस्य 'सजीवतायाः' अतर्क्यं प्रमाणं नास्ति। यदि वयं न जानीमः, तदा अस्माकं एव दोषः न्यूनता वा, न तु संस्कृतस्य। अत्र एकं उदाहरणं दीयते, यत् यदि काऽपि संज्ञा 'ऋफिड्' इति विद्यते। अस्याः सिद्धिः केनाऽपि व्याकरण-नियमेन नहि भवति। तदा उणादिप्रकरणानुसारं, 'ऋ' गमनार्थ-धातोः तथा 'फिड्' प्रत्ययस्य कल्पनां कृत्वा, गुणाभावे फिड् कित् इति मत्वा शब्दसिद्धिः कृता स्यात्। अस्माभिः अत्र केवलं एकं उदाहरणं दीयते, परन्तु लक्षशः उदाहरणानि भवितुं अर्हन्ति। वस्तुतः सर्वैः संस्कृतज्ञैः उणादि-प्रकरणं ध्यान-पूर्वकं पठनीयं।

## वैज्ञानिक-यान्त्रिक-प्राविधिक-पारिभाषिक-शब्दाः

सर्वप्रथमं अस्माभिः किं अपि विशेषरूपेण विज्ञानस्य सम्बन्धे कथ्यते। विज्ञानं इति पदस्य अर्थः भौतिक-विज्ञानं एव। वस्तुतः पंचभूतानां आकाश-वायु-अग्नि-जल-पृथ्वीपंचतत्त्वानां ज्ञानं, विज्ञानं इति कथ्यते लौकिक-भाषायां। इदं विज्ञानं



विविधशाखासु अपि विभक्तं भवितुं अर्हति, तथैव पञ्च-तत्त्वानां

पृथक्-पृथक् सम्मिश्रणं वा। अनेन प्रकारेण अनन्त-शाखाःविज्ञानस्य भवितुं अर्हन्ति, यथा अद्य अस्माभिः अवलोक्यते। एकस्मिन् शब्दे जड-जगतः, तथा तस्य मूल-तत्त्वानां ज्ञानं, यैः इदं जगत् निर्मितं, विज्ञानं नाम विद्यते। जीव-सृष्टेः विज्ञानं 'अध्यात्म-विज्ञानं' नाम अस्माकं संस्कृत-साहित्ये प्रचुर-मात्रायां विद्यते, यत् अन्यत्र कस्यां अपि भाषायां नहि प्राप्यते। भौतिक-विज्ञानं अपि प्रचुर-मात्रायां संस्कृते आसीत् प्राचीनकाले, परन्तु तत्सर्वं प्रायः नष्टी-भूतं उत विदेशीय-शासकैः समये समये नष्टी-कृतं। यत् अवशिष्टं, अस्त-व्यस्त-रूपे विद्यते, परन्तु तस्य अपि ज्ञानं नास्ति। यान्त्रिक-विज्ञानं अपि भारतेवर्षे प्रचुर-मात्रायां आसीत्, अन्यथा पुष्पक-विमानादि-निर्माणं कदापि सम्भवं नासीत् प्राचीन भारते, यथा अस्माभिः रामायणादि-ग्रन्थेषु पठ्यते। परन्तु प्रायः कोऽपि भारतीयः न विश्वसिति, यत् प्राचीनकाले भगवतः रामस्य समये, भारतीयाः एतादृशाः वैज्ञानिकाः आसन्, यत् पुष्पक-विमानादि-निर्माणं कुर्वन्तिस्म। सौभाग्य-वशात् अस्मिन् विषयेऽपि किं अपि साहित्यं अवशिष्यते, परन्तु संस्कृतज्ञेषु, शासकेषु जनतासु एतादृशी चिन्ता नास्ति, यत् एतस्य साहित्यस्य अन्वेषणं, अवलोकनं च कृतं स्यात्। तथैव औद्योगिक-व्यावसायिक-वस्त्रादि-विविध-वस्तूनां विशिष्टज्ञानं 'प्राविधिक-विज्ञानं ('टेक्नीकल') इति आंग्ल-भाषायां कथ्यते। तत् विज्ञानं अपि प्रचुर-मात्रायां प्राचीनभारते आसीत्। भारतीयव्यावसायिनः, औद्योगिकाः, व्यापारिणः जगत्-प्रसिद्धाः आसन्, तथा भारतीय-वस्त्रादेः विदेशेषु व्यापारः विशाल-परिमाणे भवतिस्म। इतिहास-सिद्धं इदं, यत् आंग्ल-शासनात् पूर्वं भारतीयवस्त्रादिकं यूरोपादि-महाद्वीपेषु समुद्र-मार्गेण

भारतीयनौषु जलपोतेषु भवतिस्म। परन्तु यदा भारते विदेशीय आंग्ल-व्यापारिणः, कुटिल-राजनीतिकुशलाः शासकाः जाताः, तदा अयं व्यापारः तैः नष्टः कृतः, यतोहि आंग्लशासकैः वस्त्रादि-निर्मातॄणां हस्त-कर्त्तनादिकं अपि कृतं, यत् इतिहास-सिद्धं। वस्त्रादि-कला-विषयिकं साहित्यं अवश्यमेव संस्कृते आसीत् इति स्पष्टं।

## पारिभाषिक-शब्दादिनिर्माणकार्यं

अस्मिन् विषये अस्माकं विशेष-निवेदनं इदं। इदं तु सर्वथा सत्यं एव, यत् एतेषु सर्वेषु विषयेषु संस्कृते साहित्यं विद्यते। सर्व-प्रथमं तत्सर्वं साहित्यं सावधानतया अन्वेषणीयं, पठनीयं, प्रकाशनीयं च। ये पारिभाषिक-शब्दाः एतेषां विषयाणां विविध-शाखासु मिलन्ति, तेषां एकः शब्द-कोषः पूर्ण-व्याख्या-सहितः निर्मेयः। ये पारिभा-षिक-शब्दाः अस्माकं प्राप्तसाहित्ये नहि विद्यन्ते, तेषां सर्वेषां कथित-अन्ताराष्ट्रिय-पारिभाषिक-शब्दानां, उणादि-प्रकरणं आधारीकृत्य, निर्माणं करणीयं तत्तद्-विषयं अवलम्ब्य। ये कतिपयजनाः कथ-यन्ति, यत् ते पारिभाषिक-शब्दाः विदेशीय-भाषाभ्यः स्वरूपे गृहीताः स्युः, न मे एतादृशी सम्मतिः। एतादृशानां विदे-शीय-शब्दानां संस्कृतीकरणं तु नितान्त आवश्यकं, यत् उणादि-प्रकरणस्य विशेष-प्रयोजनं। यदि प्राचीनकाले इदं सम्भवं भवेत्, तदा अस्माकं वैयाकरणानां कृते प्रकरणस्य रचनायाः का आव-श्यकता आसीत्? परन्तु इदं सम्भवं नास्ति, यत् विदेशीयपारि-भाषिक-शब्दाः स्वरूपे गृह्येरन्। अनेन प्रकारेण तु कस्यां अपि भाषायां न भवति। इदं तु सर्वथा सुस्पष्टं एव, तथापि [illegible] आवश्यकता जाता, यतोहि एकः सुप्रसिद्ध-महापंडितः पं० काली-

प्रसादमहाभागः "संस्कृतम्" पत्र-सम्पादकः विदेशीय-शब्दानां स्वरूपे ग्रहणस्य पक्षपाती। यदि एतादृशं कृतं स्यात्, तदा प्रकरणस्य प्रयोजनं सर्वथा निष्फलं भवेत्। एतेषां सर्वेषां शब्दानां संस्कृती-करणं तु आवश्यकं, परन्तु यथासाध्यं 'अन्ताराष्ट्रियपारिभाषिक-शब्दानां स्वरूप-नाशोऽपि न स्यात्। शब्देषु एतादृशं परिवर्त्तनं यत्र तत्र करणीयं, येन संस्कृती-करणं अपि स्यात्, तथा आत्यन्तिकस्वरूप-नाशोऽपि न भवेत्, येन अन्ताराष्ट्रिय-विज्ञान-प्राप्तिः सुलभा स्यात्, इति अस्माकं अन्ते विनम्र-निवेदनं, विद्वद्भिः सम्यक्तया विमर्षणीयं।

## विशेषनिवेदनं

कीदृशं संस्कृतम्? इति ग्रन्थस्य १६४६ ई० वत्सरे प्रकाशानन्तरं प्रगतिशीलैः संस्कृत–विद्वद्भिः भारतीयैः विदेशीयैः अपि एतादृशं संस्कृतं लिख्यते इदानीं। युगान्तरं आनीतं न वा ग्रन्थेन अनेन एकादशवर्षेषु, विचारणीयं स्वत एव पाठकैः। तेषां पंडितवर्य्याणां यशः कीर्त्तिश्च न मम ( 'इदं न मम' वेदमन्त्रानुसारं )

## उत्तर-भारते अद्य संस्कृतं

उत्तरप्रदेशीयः अहं, यस्मिन् प्रदेशे 'देवताः अपि जन्म-लभन्ते।' मम जन्म-स्थानं 'महावनं' (व्रजमंडलं) भगवतः कृष्णस्य क्रीडास्थलं। अहं तं भगवन्तं महायोगिनं, वेद-वेदाङ्ग-विज्ञानविशिष्टं, राजनीतिमूर्त्तिं, गोपसखायं अनुकरोमि, गोप-सखा-रूपेण, इति मम सौभाग्यं गर्वस्थानं। मम ग्रन्थाः कीदृशाः? अस्मिन् विषये विद्वांसः एव प्रमाणं। अतएव अहं किमपि नहि निवेदयामि 'आत्म-प्रशंसा-दोषभयात्।' तथापि एकस्य काशिकपंडितस्य उदाहरणं अहं अत्र ददामि उत्तरभारतस्य प्रतिनिधिरूपे।

## काशी-संस्कृतकेन्द्रतः कीदृशं संस्कृतं ?

काशी जगद्-विख्यात-संस्कृतकेन्द्रं, संस्कृतसंसारशरीरस्य हृदयं इव विद्यते। यादृशं तस्य हृदयस्य स्पन्दनं, तादृशं एव संस्कृत-जीवनं स्वास्थ्यं च, विशेषतया भारतेवर्षे, सामान्यतया विश्वे च। एकेन अस्माकं चिरपरिचितेन पं० वासुदेव इति नामकेन स्वग्रन्थेषु 'ईदृशं संस्कृतं' प्रयुज्यते। शारीरिकस्वास्थ्य-विषये तेन किमपि लिख्यते, यत् संस्कृत-शरीर-स्वास्थ्य-विषयेऽपि लगेत् यथा—

### स्वास्थ्यम्

'शरीरस्य चित्तस्य च निर्विकारा स्थितिः एव स्वास्थ्यम् इति कथ्यते। यदा मनुष्यस्य शरीरे मनसि वा कश्चित् विकारः न भवति, तदा मनुष्यः स्वस्थः इति उच्यते। ..............परन्तु एषु सर्वेषु अपि वस्तुषु सर्वापेक्षया आवश्यकं वस्तु स्वास्थ्यं भवति। ..............विद्याध्ययनं वा, धनोपार्जनं वा, धर्मानुष्ठानं वा, लोक-सेवा वा, परदेशगमनं वा, सर्वमपि कार्यं स्वस्थः एव मनुष्यः कर्त्तुं शक्नोति। अतएव महाकविना कालिदासेन 'कुमार सम्भवे' कथितम्—

'शरीरमाद्यं खलु धर्मसाधनम्' इत्यादि

### दक्षिण-भारते अद्य संस्कृतं

पं० के० के० सोमयाजी ऐम० ए०, 'भाषा' संस्कृत-पत्र-सम्पादकः (आन्ध्र-प्रदेशीयः) अस्माकं चिरपरिचितः, अभिन्न-मित्रं, दक्षिणभारतस्य-प्रतिनिधिरूपः, महाविद्वान् एतादृशं 'आधु-निकतमं संस्कृतं' स्वपत्रे प्रयुक्तं :—

'भाषा' साप्ताहिकं संस्कृतपत्रं, गुन्टूरनगरं (आन्ध्र प्रदेशः)
सम्पादकः, के० के० सोमयाजी ऐम० ए० ९-६-१९५५ ई०

### "हिंद्याः दंडयात्रा" (शीर्षकं)

पूर्वं पूर्वं हिन्दी-पठनं पाठशालासु काम्यं इति उक्तं। अद्य नित्यं कृतं। आंग्ली इव हिन्दी अपि सर्वैः अवश्यं पठितव्या। एतत् अनुसृत्य यावद् भारत-परीक्षाः, राज्य-सम्बन्धिन्यः याः विद्यन्ते, तासु अपि हिन्दी नित्या इति केन्द्रस्य शासनं। इदं हिन्दी समाक्रमणं आंग्ल्याः आक्रमणात् अपि हानिकरं। आंग्ली अभारतीया, असम्बद्धा, कियत् क्लिश्नाति अपि, बाह्यात् एव। विजातीयत्वात् देश-भाषाणां अंतः प्रवेष्टुं, कलुषयितुं च अशक्ता। हिंद्याः विषयः अन्यः। संस्कृतं पुरस्कृत्य बन्धुः इव आयाति। अन्ते संस्कृतस्य देश-भाषाणां च संहाराय एव कल्पते। न केवलं हिंदी भाषिणः, किंतु प्रांते प्रांते हिंदी-उपजीविनः, अर्थात् हिन्दी-बोधनेन कुटुम्ब-पोषणं कुर्वन्तः, शतशः सन्ति। दिने दिने एषां संख्या वृद्धिं एति। अर्थातुराः इमे देश-भाषाणां संस्कृतस्य च अन्तः शत्रवः सम्पद्यन्ते शासनं च एतेषां सहायकं भवति। आंग्ल्याः स्थानं हिंद्यै देयं इति हिन्दीवतां आशयः। एवं हिन्दीवन्तः देशे सर्वत्र प्रभवेयुः इति च। यदि केन्द्र-शासनस्य, प्रान्तीयानां च मध्ये एव स्यात् हिन्दी-व्यवहारः, तर्हि प्रत्येकः बालः प्रथम-कक्षायां अपि हिन्दीं पठेत् एव, इति कः अयं कूट-वादः ? पृथक्-जनाः भाषा-रहस्यानि न जानन्ति। ये विद्या-वन्तः ते सर्वे शासन-वशे अधिकृताः तिष्ठन्ति। प्रान्तीयशासनानि सर्वाणि कांग्रसीयानि कांग्रसस्य 'कशा' ( whip ) भयेन चरन्ति। कांग्रसः पुनः पक्ष-बलेन निरंकुशः, निर्भीकः, निस्सीमः च तिष्ठति। ये

खलु भारत-तत्वं जानन्ति, कांग्रसीयानां विजातीयान्, मिथ्या वादान् खण्डयितु च शक्नुवन्ति, ते पण्डिताः कांग्रसेन निरस्ताः, व्यवहार-भूमेः दूरदूरं एव तिष्ठन्ति। प्रजा-राज्यं नाम विमतस्य कांग्रसस्य-राज्यं भवेत् इति दैव-दुर्विलसनं इदं।

## पश्चिमीय-भारते अद्य संस्कृतं

संस्कृतप्रचारिसभा, नागपुरं (महाराष्ट्र-प्रदेशः), इति सभायाः मुखपत्रं 'संस्कृत-भवितव्यम्' साप्ताहिकं, पश्चिमीयभारतस्य प्रतिनिधि-रूपं सिद्धान्तरूपेण ईदशं संस्कृतं लिखति यथा

'संस्कृत-भवितव्यम्' नागपुरं १-३-१६५८ ई०

## संस्कृतायोगस्य निवेदनम्

विदितचरम् एव एतत् सर्वेषां संस्कृतप्रेमिणां यद् भारत-शासनेन संस्कृतभाषायाः शिक्षाक्रमे, समाजे च स्थानं निश्चित्य तत्प्रसारार्थम् उपायान् सूचयितुं प्रथितयशसाम् अनेकभाषापटूनां संस्कृतज्ञानां श्री सुनीतिकुमार-चाटर्जी-इत्येषाम् आध्यक्ष्ये आयोगः एकः नियुक्तः आसीत्। स च पण्डितानां, समाजनेतृणां, शिक्षणतज्ज्ञानां च मतम् अत्र विषये जिज्ञासुः अखिले भारते भ्रमणं विधाय, परिस्थितिं प्रत्यक्षं पश्यन् स्थाने स्थाने संस्कृत-प्रचारसभाः, पण्डितपरिषदः, पाठशालाः, विद्यापीठानि च इत्येषाम् अभिमतं लेखरूपेण मौखिकं वा संगृह्य स्व-निवेदनं शासनाय सद्यः एव समर्पितवान्। देहल्यां लोकसभायां श्री श्रीमालीनामधेयैः शिक्षामन्त्रिभिः सदस्येभ्यः वार्ता इयं निवेदिता, इति पूरिता अपेक्षा बहोः कालात् उत्सुकानां संस्कृतानुरागिणाम्।

प्रधानाः सूचनाः आयोगकृताः सर्वेषां स्वागतार्हाः एव भान्ति।

"मितव्ययितां, धनाभावं, हेत्वन्तरं वा किञ्चिद् पुरस्कृत्य

अपुरस्कृत्य सर्वासु अपि माध्यमिकशालासु अभ्यासक्रमे संस्कृतस्य आवश्यकविषयत्वेन अन्तर्भावः कार्यः" इति प्रशंसितं संस्कृतायोगेन। अतः एव अभिनन्दामः सदस्यान् सर्वान् अध्यक्षपुरस्कृतान्। भारते माध्यमिकशालासु सर्वे छात्राः मातृभाषां (प्रादेशिकीं), आंग्लीं, संस्कृतं च (अपवादरूपेण क्वचित् अरबीं, फारसीं, प्राचीनतमिलं वा) पठन्तु। हिन्दी पुनः महाविद्यालयेषु एव पाठ्या, सापि च अखिलभारतीयसेवां प्रविविक्षुषु एव मर्यादिता स्यात् इति आयोगस्य स्पष्टः अभिप्रायः। शासनस्य अमान्या स्यात् चेत् इयं सूचना (माध्यमिकशालासु हिन्द्याः अध्ययनम् आवश्यकं मतं चेत्) हिन्दीमातृभाषिणः दक्षिणीयां कांचित् एकां भाषाम् आवश्यकत्वेन पठितुं बाध्याः स्युः इत्यपि पर्यायरूपेण उपन्यस्तम् आयोगेन। एवं च, संस्कृतस्य स्थाने हिन्दी अवश्यं पठनीया इत्यत्र विरोधम् एव प्रकटयति आयोगोऽयम्।

शालासु भाषिकस्य अभ्यासक्रमस्य रूपरेखा अपि आयोगेन स्पष्टीकृता अस्ति। प्राथमिकशालासु, माध्यमिकशालानां पूर्वार्धे च पठितैः सरलैः गद्यपद्यमयैः सुभाषितैः संस्कृतस्य परिचयः भवतु छात्राणाम्। तदनु माध्यमिकशालानाम् उत्तरार्धे मातृभाषाध्ययनकालं किंचित् अल्पीकृत्य संस्कृताभ्यासः दृढीकर्तव्यः, इति सूचितम् आयोगेन।

संस्कृतस्य सार्वत्रिकप्रसारार्थम् एवं सुविधाः विधाय प्रगाढ-पांडित्यवर्धनाय प्रतिप्रदेशम् एकं स्वतंत्रं संस्कृतविद्यापीठं भवतु, यत्र संस्कृते प्राप्तप्रावीण्याः तौलनिकं व्यावहारिकं च आधुनिकतमं ज्ञानं प्राप्नुयुः इति प्रशस्तम् आयोगेन।



संस्कृतभाषा एव भारतीयानां धर्मस्य, संस्कृतेः, तत्त्वज्ञानस्य,

विद्यानां, कलानां किंबहुना संपूर्णस्य जीवनस्य मूलस्रोतोभूता, अत एव भारतीयानाम् एकीकरणे प्रधानं—नहि नहि एकमेव साधनं सा भवितुम् अर्हति। पृथग्भावप्रदर्शकानां तमिलभाषिकाणाम् अपि ग्रन्थरत्नानां मूलाधारः संस्कृतम् एव। न हि तत्र कस्यापि विरोधः स्यात् हिन्द्याम् इव। विभिन्नायां राजकीय–परिस्थित्याम् अपि भारतं यत् संघटितप्रायम् अतिष्ठत् अद्य यावत् तत् खलु संस्कृत-प्रभावेण एव इति न खलु तिरोहितम्। अत एव च संस्कृतस्य सार्वत्रिके प्रसारे दत्तचित्ताः वयम् अन्ये संस्कृतप्रचारकाः च। आयोगस्य अस्य अभिनन्दनम् अवश्यं कर्तव्यं सर्वैः गीर्वाण-वाणीरसिकैः। भाषिकसंघर्षात्मके अस्मिन् काले "यदल्पमपि तद् बहु" इति विचार्य सूचनाः एताः सर्वाः यथायोगं कार्यान्विताः कर्तुं कारयितुं च जनतया सप्रयत्नया भाव्यम्। अन्यथा शासनस्य दीर्घसूत्रता निवेदनम् इदम् अन्यथाकर्तुं प्रभवेत्। अन्यत् च हिन्दी-पक्षपातिनः न सर्वथा संतुष्टाः स्युः पठित्वा एतत् निवेदनम्। यतः हिन्द्याः स्थानं संशये पातितं स्यात् इति आशङ्का जागर्ति। परं विचार्यमाणे हिन्द्यपेक्षया संस्कृतेन एव भारतहितम् अधिकं विहितं स्यात् इति तैः अवगन्तव्यम्।

## पूर्वी-भारतस्य अद्य संस्कृतं

'अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनम्' कालिकाता (वंग-प्रदेशः) इति संस्थया ईदृशं संस्कृतं लिख्यते प्रचार्यते च, येन संस्कृतभाषा राष्ट्रभाषा स्यात् यथा

### अखिलभारतीयसंस्कृतराष्ट्रभाषासम्मेलनम्

कालिकाता (बङ्गाल प्रान्तः) १७, १९५८ मई १९५८ ई०



भारतीय संविधानानुसारेण हिन्दी भारतवर्षस्य राजकीयभाषा

भविष्यति इति निर्द्धारितम् वर्त्तते । अस्य निर्धारणस्य विरोधेन दाक्षिणात्ये तथा वङ्गदेशे सर्व्वतः आपत्तिः उत्थिता । अन्येषु अपि अहिन्दीभाषिषु प्रदेशेषु असन्तोषः धूमायितः वर्त्तते । एवम् उच्यते यत् ते तावत् भारतवर्षे हिन्दीभाषणभाषिणः सन्ति तेषाम् प्रभुत्वम् अहिन्दीभाषिणाम् उपरि चिरस्थायि भविष्यति इति । फलतः ईदृशी व्यवस्था विभिन्नप्रदेशेषु परस्परम् विरोधम् जनयति ।

अत्र केचित् वदन्ति यत् आङ्गलभाषा एव राष्ट्रभाषा भवितुम् अर्हति इति । किन्तु अस्मिन् विषये प्रधानमन्त्रिमहोदयेन यत् उक्तम् तत् सर्वेषाम् एव आत्मसम्मानविशिष्टानाम् भारतीयानाम् समर्थनार्हम् । तेन उक्तम्—वैदेशिकभाषायाः जातीयभाषाकरणम् भारतवासिनाम् आत्मसम्मानहानिजनकम् इति ।

अस्माभिः मन्यते यत् अस्याः समस्यायाः एकमेव समाधानम् वर्त्तते, तत् हि संस्कृतस्य राष्ट्रभाषात्वेन स्वीकरणम् । केचित् वदन्ति संस्कृतम् मृतभाषा इति । एतत् तु भ्रान्तिमूलकम् । अद्यत्वे अपि विभिन्नविषयेषु वहवः ग्रन्थाः संस्कृतभाषया विरचिताः भवन्ति तथा मौलिकगवेषणादिकम् अपि अनया परिचाल्यते । वहवः जनाः सन्ति ये सर्वेषु एव विषयेषु अनया एव भाषया अवाधं वाग्मितां प्रकटयन्ति, वार्त्तालापम् च कुर्व्वन्ति । एतत् अपि द्रष्टव्यम् यत् नवस्थापिते इस्राइलराष्ट्रे हिब्रूभाषाराष्ट्रभाषात्वेन परिगृहीता। सुविदितम् एव एतत् यत् इस्राइलराज्यम् एशियामहादेशमध्ये अन्यतमम् प्रगतिसम्पन्नम् राष्ट्रम् । हिब्रूभाषायाः राष्ट्रभाषात्वेन परिग्रहणम् इस्राइलराष्ट्रे प्रगतिविषये न कामपि बाधाम् जनयति स्म । हिब्रूभाषा संस्कृतात् न उन्नता न अपि सुप्रचलिता । अतः संस्कृतम् चेत् राष्ट्रभाषात्वेन स्वीक्रियेत तर्हि भारतम् अपि प्रगतेः

न कः अपि व्याघातः भविष्यति। संस्कृतम् पृथिव्याम अन्यतमा श्रेष्ठा भाषा इति बहुभिः देशीयैः विदेशीयैः अपि पण्डितैः स्वीकृतम्। संस्कृतभाषायाम् सर्व्वेषु एव विषयेषु ग्रन्थाः विरचिताः सन्ति। अस्याः शब्दसम्पद् अपि अनुपमा। अनया यस्मिन् कस्मिन् अपि आधुनिके विषये ग्रन्थान् विरचयितुम् पठनपाठनादिकमपि कर्त्तुम् शक्यते। वेदाः, उपनिषदः, भगवद्गीता, रामायणम्, महाभारतम्, श्रीमद्भागवतम्—इत्यादयः पृथिव्याम् श्रेष्ठत्वेन स्वीकृताः ग्रन्थाः संस्कृतभाषया एव निर्मिताः। भारतवर्षस्य प्रायेण सर्व्वाः एव भाषाः तथा भारतवहिःस्थिताः अपि काश्चन भाषाः संस्कृतात् उद्भूताः अथवा तेन घनिष्ठसम्बन्धेन सम्बद्धाः। साहित्य-आकादामी इत्याख्यप्रतिष्ठानात् प्रकाशिते ग्रन्थनामनिघण्टौ विगतवर्षे रचितानाम् संस्कृतग्रन्थानाम् यत् विवरणम् दृश्यते तेन एतत् वक्तुम् शक्यते यत् संस्कृतभाषा न केवलं न मृता अपि तु प्राणप्राचुर्य्येण परिपूरिता। वहुषु एव वैदेशिक-विश्वविद्यालयेषु संस्कृतम् यथायथम् अधीयते। फलतः समग्रायाम् पृथिव्याम् संस्कृतभाषायाः प्रतिष्ठा असाधारणी।

संस्कृतेन तावत् विभिन्नेषु प्रदेशेषु ऐक्यबन्धनं सुचिरं रक्षितम्, भविष्यति अपि काले एतदैक्यबन्धनं तेनैव रक्षिष्यते। संस्कृते राष्ट्रभाषात्वेन परिगृहीते कः अपि प्रदेशः कथम् अपि वैमत्यम् प्रकटयितुम् न शक्नुयात्।

साम्प्रतम् हिन्दीभाषाप्रचारार्थम् अगाधपरिमितः अर्थः व्ययितः भवति—यदि एतदर्द्धम् चतुर्थांशकम् वा संस्कृत-शिक्षा-



प्रचारस्य कृते विनियुक्तं भवेत् तर्हि समग्रे भारतवर्षे अचिरेण एव कालेन संस्कृतभाषायाः ज्ञानम् व्यापकभावेन विस्तृतम् भविष्यति।

संस्कृतभाषाया: ज्ञानम् विना वयम् स्वीयसंस्कृतित: अपि विच्छिन्ना: भविष्याम: ।

यथार्थत: संस्कृतम् न तावत् दुरधिगम्यम् । संस्कृतभाषा अतिसरलभावेन अपि लेखितुं शक्यते ।

अत: अस्माकम् सुचिन्तितम् अभिमतम् एतत् यत् देशस्य सर्व्वथा कल्याणार्थम् संस्कृतम् एव अविलम्बम् राष्ट्रभाषात्वेन विघोषितम् भवेत् । एतदर्थम् आगामिनि मे मासस्य १७, १८ दिवसद्वये कलिकातायाम् अनुष्ठेयस्य एकस्य सर्व्वभारतीयसम्मेलनस्य उद्योग: प्रचलति। अस्मिन् महति अनुष्ठाने भवताम् सक्रियम् साहायकम् सहयोग: समर्थनम् च प्रार्थयन्ते ।

श्रीवसन्तकुमार चट्टोपाध्याय
श्रीअमरेश्वर ठाकुराभ्याम्
अभ्यर्थनासमितिसम्पादकाभ्याम्
कार्य्यालय–३, शम्भुनाथ पण्डित स्ट्रीट,
कलिकाता—२० ।

विदेशीयसंस्कृतमहापंडितै: अद्य विश्वे कीदृशं संस्कृतं लिख्यते, यत् तत्कालीनस्य फिनलैण्ड-राजदूतस्य भाषणेन प्रकटी-भवति (१५-२-५३ ई० दीक्षान्तभाषणं, काशीसंस्कृतमहाविद्यालय: )

## दीक्षान्तभाषणम्

मान्या: अध्यक्षमहोदया: सभासद: स्नातकाश्च ।

अस्मिन् अवसरे दीक्षान्तभाषणार्थम् आमन्त्रितोऽहम् आत्मानं सम्मानितं मन्ये। पुण्यायां काशीनगर्याम् आगत्य अहं प्रमुदित: अस्मि। इयं हि अनादिकालात् विद्याया: पवित्रतायाश्च

महत् क्षेत्रम् । अत्र भारतीयाः आत्मनः जीवने तीर्थयात्रार्थं भूयोभूयः आगन्तुम् इच्छन्ति, गङ्गाम् आश्रित्य देहत्यागं वाञ्छन्ति । अस्मिन् महाविद्यालये स्थित्वा अहं प्रसीदामि । अयं हि षष्ठ्यधिकात् एकशतात् अधिकेभ्यः वर्षेभ्यः संस्कृतविद्यायाः विशिष्टविदुषां समवायस्य च प्रधानं केन्द्रम् ।

संस्कृतभाषाम् उपजीव्यं भवन्तः भारतीयाः समुज्ज्वलां संस्कृतिं निर्मितवन्तः, या वस्तुतः भवतां गौरवाय कल्पते । पुरातनं संस्कृतसाहित्यम् एकं भव्यं मन्दिरं, यस्मिन् मानवस्य प्राचीनकालिकं सर्वं ज्ञानं सामञ्जस्येन संगृहीतं वर्तते । जीवनमरणविषये मानवजिज्ञासायाः अन्तिमं समाधानम् अन्वेषयन्तः भवन्तः यं परिणामं प्राप्तवन्तः स यवनदेशीयदार्शनिकानां सिद्धान्तान् अतिशेते । धर्मं मीमांसमानाः भारतीयाः साधकाः भक्ताश्च जीवनस्य सुगूढानां समस्यानाम् अन्तस्तलम् आलोडितवन्तः । वेदाः भवताम् अध्यात्म ज्ञानस्य आधारभूमिः । ब्राह्मणानि, आरण्यकानि, उपनिषदश्च वेदार्थान् उपबृंहन्ति । भवतां सूत्रग्रन्थाश्च जीवनस्य सर्वाङ्गीणतायाः सम्पादकान् नियमान् प्रतिपादयन्ति । भवतां युगकाव्यं महाभारतं रामायणं च भारतस्य इतिवृत्तमुखेन पूर्वभावानुभूतिम् प्रदर्शयतः । भवतां पुराणानि विविधायाः परम्परायाः विचारधाराश्च महानिधयः । भवतां शास्त्राणि मानवज्ञानस्य विविधानि अङ्गानि प्रकाशयन्ति । भवतां कवयः येषु कालिदासः सर्वप्रधानः, संसारस्य सर्वश्रेष्ठान् नाटकग्रन्थान्, सौंदर्यपूर्णानि गीतिकाव्यानि च रचितवन्तः । भवतां साहित्यं लतागुल्मादिसम्पन्नं भारतीयवनमिव सुसमृद्धं विविधविधं च वर्तते । तस्मिन् एव साहित्ये च अनर्घप्रभाभासुराणि भूयांसि रत्नानि समुपलभ्यन्ते । भगवद्गीता अज्ञात-

कालतः मनुष्याणां मार्गप्रदर्शनं शान्तिप्रदानं च कुरुते। इयं हि नवभारतस्य राष्ट्रपितुः महात्म-गान्धिनः सततसहायिका आसीत्। अथ चेयं सुदूरे भविष्यत्यपि साधकानां मार्गप्रदर्शनं करिष्यति। संस्कृतस्य साम्राज्यं भारते एव न सीमितम्, किन्तु हिमालयपर्वत-मालामुल्लङ्घ्य, महावनानि अन्तःप्रविष्य बङ्ग-सागरं च अतिक्रम्य प्रसृतम्।

भारतीया विचारधारा अस्यामेव काशीनगर्याम् शिक्षमाणेन स्थितप्रज्ञेन भगवताबुद्धेन प्रभाविता प्राच्यस्य एशियामहाद्वीपस्य अधिकतरेषु भागेषु ब्रह्मदेश, श्यामदेश, भारत-एशिया, भारत-चीन, जापान, कोरिया, मङ्गोलिया, तिब्बत, पारसीकप्रभृतिदेशेषु रूस-भूमिं यावत् अभिव्याप्ता।

भारतीयः सन्देशः तेषु सर्वेषु देशेषु निवसताम् रूक्षाणाम् युद्धप्रियाणाम् अपि जनानां विचारान् मृदूकुर्वन् तेषां मनोवृत्तिषु परिवर्तनम् अकरोत्। अतीतेषु द्विसहस्रवर्षेषु बौद्धधर्मः एशिया-याः विशालेषु प्रदेशेषु स्वप्रभावम् प्राकाशयत् किन्तु पाश्चात्यदेशेषु संस्कृतजगत् सुचिरम् अज्ञातम् आसीत्। भारतस्य पश्चिमे भागे प्रतिस्पर्धिन्याः यवनसंस्कृतेःप्रभावः प्रसृतःअवर्तत। यवनदेशीयं दर्शनं महतीम् समुन्नतिम् आरोहत्। साहित्यं च विपुलान् मौलिकग्रन्थान् असृजत्। यवनदेशस्य राज्यपद्धतिं विज्ञानं च आश्रित्य महान्ति राज्यानि निर्मितानि अभवन्। यथा भारतीया विचारधारा एशिया-देशं शालीनं सुसंस्कृतं च अकरोत्, तथैव यवनविचारधारा यूरो-पदेशम् क्वचित् साक्षात् क्वचिच्च लैटिनभाषायाः माध्यमेन शालीनं सुसंस्कृतं च अकरोत्।



यथा संस्कृतं सुदीर्घकालं भारतस्य सांस्कृतिकीभाषा आसीत्,

तथैव मध्ययुगेषु लेटिनभाषा एशियायाः मुख्यभूमेः अपरप्रायद्वीपस्य यूरोपस्य सांस्कृतिकीभाषा आसीत्। यथा च भारतस्य प्रादेशिक्यः भाषाः शनैः शनैः संस्कृतस्य स्थाने स्वतन्त्राः सांस्कृतिकभाषाः अभवन्, तथैव यूरोपस्य प्रादेशिक्यः भाषाः अपि लेटिनभाषायाः स्थाने स्वतन्त्राः भाषाः अभवन्, येन मन्मतानुसारेण यूरोपस्य एकतायाः हानिः जाता।

अष्टादशशताब्द्याः अन्ते एव वस्तुतः यूरोपे संस्कृतस्य सत्तायाः परिचयः जातः। अस्मिन् कर्मणि भवतां संस्कृतविद्यालयः, यत्र वय समवेताः स्मः, भृशम् प्रयतमानः आसीत्। यूरोपीयाः विद्वांसः इदम् ज्ञात्वा भृशं विस्मिताः अभवन् यत् भारते अत्यन्तम् अभिवृद्धा प्रतिपादनक्षमा सौन्दर्यसम्पन्ना विविधविशालसाहित्यसमृद्धा च भाषा वर्तते। इदं तु अनुसंधाय ते अधिकतरम् विस्मिताः अभूवन् यत् इयं संस्कृतभाषा यूरोपदेशस्य प्रायः सर्वाभिः भाषाभिः न केवलं सम्बद्धा, किन्तु यूरोपीयभाषापरिवारस्य प्राचीनतमा शाखा अपि अस्ति। यूरोपस्य उत्कृष्टविदुषां संस्कृतम् प्रति महती रुचिः समुत्पन्ना। एकोनविंशायां च शताब्द्यां यूरोपस्य अमेरिकायाश्च बहुषु विश्वविद्यालयेषु महाविद्यालयेषु च अनेकानि संस्कृतप्राध्यापकपदानि प्रतिष्ठापितानि अभवन्।

महतः पाणिनेः तदनुयायिनां च व्याकरणानि पाश्चात्यदेशे संस्कृतस्य सुबोधतासम्पादने सहायकानि अभूवन्, एकं रोचकं नवीनं भाषाविज्ञाननामकं ज्ञानक्षेत्रं च अजनयन्। इतःपरं शनैः शनैः संस्कृतस्य बहवः मूलग्रन्थाः यूरोपस्य अमेरिकायाश्च विद्वद्भिः प्रकाशिताः अनूदिताः टिप्पणिताश्च अभवन्। भारतस्य दार्शनिकाः



धार्मिकाश्च विचाराः पाश्चात्यदेशे अभिज्ञाताः सन्तः तत्रत्यान्

विदुषः प्राभावयन्। भारतीयाः नाटकग्रन्थाः गीतकाव्यानि च पाश्चात्यभाषासु अनूदितानि अभवन् येन पाश्चात्यानां समक्षम् एकः नवीनः अपूर्वः सौन्दर्यसंसारः प्रादुरभवत्।

मम सुदूरवर्तिनि फिनलैण्डदेशे अपि संस्कृतं प्रति रुचिः उदपद्यत। एकोनपंचाशदधिके अष्टादशे शतके प्रथमः फिनलैण्ड-देशीयः विद्वान् डाक्टरपदप्राप्तिनिमित्तं मानवधर्मशास्त्राणि विभिन्नानि पुराणानि, तदीयाः व्याख्याश्च उपजीव्य संस्कृत साहित्यविषयकम् एकं निबन्धं प्रकाशयत्। पंचसप्तत्यधिके अष्टादशे शतके हेल्सिकीविश्वविद्यालये एकं संस्कृतप्राध्यापकपदं स्थापितम् अभवत्। फिनलैण्डदेशः कतिपयान् श्रेष्ठान् संस्कृतविदुषः अजनयत्। चीनतुर्किस्तानदेशस्य हस्तलिखितानां संस्कृतग्रन्थानां गवेषणं सम्पादनं च फिनलैण्डदेशस्य वैशिष्ट्यमस्ति। सप्तत्रिंशद्-वर्षपूर्वम् अहम् अपि हेल्सिकीविश्वविद्यालयात् उपाधि-परीक्षां समुत्तीर्णः।

भारतीयस्वातंत्र्यात् प्राक् विगतेषु द्विसहस्रवर्षेषु संस्कृत-साहित्यम् एशियाय पौरस्त्यभागस्य जनान् अनुप्राणितान् अकरोत्। गतेषु द्विशतवर्षेषु च यूरोपियान् विदुषः बुद्धिजीविनश्च प्राभावयत्। स्वतन्त्रभारतस्य समक्षं देशे विदेशे च संस्कृतपरम्परायाः संरक्षणस्य संवर्धनस्य च महत् कार्यम् प्रस्तुतम् अस्ति। भारतम् समस्तस्य जगतः कृते संस्कृतशिक्षायाः महत् केन्द्रं भवेत्।

सप्तदशे शतके फ्रांसदेशे एकं सुप्रसिद्धं विद्यामन्दिरम् संस्थापितं, येन फ्रेञ्चभाषा भृशं परिष्कृता सती अन्ताराष्ट्रियसंस्कृतेः अभिव्याप्तौ महत् साधनं अजायत। अन्येषु अपि बहुषु देशेषु एवं-विधानि बहूनि विद्यामन्दिराणि सन्ति। अहम् आशासे यत्

भारते एकम् तादृशम् विद्यामन्दिरम् स्थापितम् भविष्यति यत् संस्कृतस्य विषये विश्वेऽस्मिन् प्रामाणिकम् केन्द्रम् भविष्यति। अहम् विश्वसिमि यत् संस्कृतविश्वपरिषदः अस्यां दिशि प्रथमः आरम्भः, यस्याः अधिवेशने गते नवम्बरमासि अहम् उपस्थितः आसम्।

संस्कृतस्य बहवः मूलग्रन्थाः अद्यावधि प्रकाशिताः, किन्तु अनेके अमूल्याः ग्रन्थाः अधुना अपि प्रकाशनम् प्रतीक्षन्ते। ग्रीक-लेटिनसाहित्ययोः अधिकाः भागाः सालोचनम् सम्पादिताः मुद्रिताश्च। अहम् आशासे यत् संस्कृतसाहित्यस्य अपि अमूल्याः भागाः तथैव अचिरादेव सालोचनं सम्पादिताः मुद्रिताश्च भविष्यन्ति।

तथैव इदमपि अहम् आशासे यत् अविलम्बमेव भारतेवर्षे एकः विशालः राष्ट्रियः पुस्तकालयः स्थापितः भविष्यति यत्र सर्वे अपि मुद्रिताः संस्कृतग्रन्थाः देशे विदेशे च प्रकाशिताः तेषाम् अनुवादाः संगृहीताः भविष्यन्ति।

एवमेव इदमपि आशासे यत् स्वतन्त्रं भारतम् संस्कृतसाहित्यस्य मौलिक-ग्रन्थान् अनुवादद्वारा विश्वस्य सर्वेषु भागेषु न केवलं विद्वत्समाजे अपितु सर्वसाधारणजनतायां च प्रचारयिष्यति।

इत्थमेव एतदपि विश्वसिमि यत् सोऽपि समयः आगमिष्यति यदा संस्कृत-वाङ्मयस्य मौलिकानां नाटकानां प्रदर्शनम् सफलः अभिनयश्च भारतस्य विदेशानां च रङ्गमञ्चेषु भविष्यति।

अहम् विश्वसिमि यदस्य देशस्य बहूनां जनानाम् इयम् इच्छा आसीत् यत् संस्कृतं स्वतन्त्रभारतस्य तथैव राष्ट्रभाषा भवेत् यथा आयरलैण्डदेशे तस्य मूलभूता आयरिशभाषा राष्ट्रभाषारूपेण

प्रतिष्ठापिता, इजराइलदेशे तत्रत्या मूलभूता हिब्रूभाषा देशस्य राष्ट्रभाषा जाता, तथापि भारते संस्कृतभाषायाः पुत्रीभूता हिन्दी राष्ट्रभाषात्वेन अङ्गीकृता।

पाश्चात्यदेशानां विभिन्नासु राष्ट्रभाषासु अस्माभिः पारिभाषिकाणां सांस्कृतिकानां च शब्दानाम् अभिमतार्थस्य यथावत् प्रतिपत्तये संग्रहः कृतः। भारते तादृशशब्दानाम् उपलब्धये भवद्भिः संस्कृतम् आश्रीयते। एवम् नूनं संस्कृतं हिन्दीभाषायाः सुसमृद्ध्ये अलं भविष्यति।

अहम् सुदृढम् आशासे यत् स्वतन्त्रभारतम्, यत्र विविधभाषा समस्याः विद्यन्ते, सुसमृद्धायाः सुविकसितायाः संस्कृतभाषायाः अध्ययनस्य संरक्षणस्य च उपेक्षां कदापि न करिष्यति।

अस्माकं युगे विश्वम् एकतायाः अभिमुखं प्रवर्त्तते। अस्मिन् विकासे विभिन्नानि राष्ट्राणि सहयोगाय आहूतानि सन्ति, यानि विश्वसंस्कृति-निर्माणे स्वीयं साहाय्यं दास्यन्ति, स्वापेक्षितं च राष्ट्रान्तरेभ्यः ग्रहीष्यन्ति। पाश्चात्यदेशैः विभिन्नविषयकं विशिष्टज्ञानं भारताय प्रदेयम् अस्ति, स्वतन्त्रभारतेनापि पाश्चात्यदेशेभ्यः योगदानम् कर्तव्यम् वर्तते। वैज्ञानिकप्रगतिप्रवाहे पाश्चात्यदेशैः स्वीयम् आध्यात्मिकस्वरूपम् विस्मृतम्। सुसम्पन्नस्य परम्परागतस्य संस्कृतवाङ्मयस्य मुखेन भारतम् अध्यात्मविद्यायाः एकम् बहुमूल्यम् कोषम् बिभर्त्ति, यम् देशोऽयम् एकीभूतस्य विश्वस्य अन्यैः राष्ट्रैः सह उपभोक्तुम् अर्हति।

## विशेषसूचनाः

एतेषां सर्वेषां लेखानां देशीयविदेशीय-पंडितानां पठनमात्रेण अयं निष्कर्षः निस्सरति यत्

(१) सर्वस्मिन् भारते विश्वे च अद्य 'आधुनिक-संस्कृतस्य' निःसंकोचं प्रयोगः लेखन-भाषणादिषु क्रियते। एतादृशी लेखन-भाषण-शैली, सर्वथा व्याकरणसम्मता सरला सुबोधा च। मुद्रण-सौविध्यं अपि सम्पद्येत सर्वेषु ग्रन्थेषु विशेषतया विद्यालय-महाविद्यालय-विश्वविद्यालय-पाठ्यग्रन्थेषु, येषु एतादृशी शैली आवश्यकी पठनपाठन-भाषणादि-सौविध्याय, यथा पंचापप्रदेशे पाठ्यग्रन्थेषु क्रियते। केन्द्रीय-प्रदेशीय-शिक्षाविभागैः अत्र ध्यानं अविलम्बेन देयं।

(२) आधुनिक-संस्कृतस्य सारः अयं, यत् 'संस्कृतव्याकरणानुसारं यत् संस्कृतपदस्य यद्रूपं भवति, तदेव वाक्येषु प्रयुज्यते सन्धि विना। हलन्त म् उत अनुसारः दीयते इच्छानुसारं हलि अचि वा, संधिं विना, येन पूर्व-पर-पदद्वयस्य शुद्धोच्चारणं सम्भवेत्। पृथक् पृथक् पद-दानेन वाक्ये भ्रमस्थलं न तिष्ठति इति।

## मम अयं ग्रन्थः 'मूलं संस्कृतम्' नाम

यद्यपि मया अत्र 'आधुनिक-संस्कृतस्य अन्तिमं रूपं' दीयते स्वक्षुद्रबुद्ध्यनुसारं, येन संस्कृते गणित-विज्ञानादेः अपि लेखनं स्यात् निःसंकोचं। का मम सफलता, अत्र देशीय-विदेशीय-विद्वांसः प्रमाणं। यदि किमपि यशः कीर्त्तिश्च, तत्सर्वं तेषां, न मम ('इदं न मम' वेदमन्त्रानुसारं) इति।

———

# षष्ठः अध्यायः

प्रायः अयं प्रश्नः क्रियते विद्वद्भिः अपि, सुधारवादिभिः, तथा विरोधिभिः, ये कमपि सुधारं संस्कृतभाषायां संस्कृत-साहित्ये नहि कामयन्ते, यत् यदि इमे सुधाराः, अल्पाः अपि, गताध्याये विशदरूपेण वर्णिताः, ( प्रायः स्वीकृताः, व्यवहारे आनीताः अपि, तारतम्येन अर्थात् न्यूनाधिकतया नवीनसाहित्यरचनायां, पाठ्यपुस्तकेषु यथा पंचापप्रदेशे तथा अन्यत्र अपि, साप्ताहिकादि-संस्कृतपत्रेषु प्रचलितेषु) स्वीकृताः स्युः, तदा प्राचीन-संस्कृतसाहित्यस्य किं स्यात् ? किं संस्कृतसाहित्यं प्राचीनं सर्वथा त्याज्यं, तथा नवीनसाहित्यरचनं कार्य्यं, उत आधुनिक-प्राचीन-संस्कृतभाषा साहित्यं च तिष्ठत् पृथक्-पृथक् यथा आंग्लादि-भाषासु साहित्येषु च अवलोक्यते। प्रश्नः गम्भीरः प्रतीयते कथने श्रवणे च, परन्तु वस्तुतः गम्भीरविचारः क्रियेत चेत्, तदा तस्य समाधानं सरलं, संस्कृतभाषासाहित्यविषये न्यूनातिन्यूनं। संसारस्य अन्यासु भाषासु तासां साहित्येषु का स्थितिः विद्यते, इति अस्माकं चिन्ताविषयः नास्ति। तत्तद्देशार्यैः तत्र विचारः कार्य्यः, यदि ते इच्छेयुः।

कारणं तु इदमेव, यत् संस्कृतभाषायां ये सुधाराः काम्यन्ते, ते प्रायः व्याकरणसम्मताः, आर्षादिप्रयोगैः प्रशस्ताः, तथा प्राचीन-संस्कृतभाषायां साहित्ये च तेषां व्यवहारः मान्यते, यथा विशदरूपेण स्तम्भभूतैः प्राचीनैः पं० मथुरानाथशास्त्री–डा० कुनहन-

राजामहाभागैः विविच्यते गताध्याये। तेषां लेखानां पठनमात्रेण ज्ञातं स्यात्, यत् कीदृशाः सुधाराः, वस्तुतः परिवर्तनानि, संस्कृत-भाषायां जातानिः। यदि तदा संस्कृतभाषा साहित्यं च न मृतं, तदा इदानीं एतैः स्वल्प-सुधारैः, न वस्तुतः परिवर्त्तनैः, कथं मृतं स्यात्? यदि संस्कृतं साहित्यं च अद्य मृतं ग्रन्थगतं वा, तत्सर्वं तु अस्माकं दोषैः एव जातं, भाषायाः अव्यवहारात्, साहित्यस्य अपठनपाठनकारणात्।

काऽपि भाषा उन्नताऽपि, कुण्ठिता, रुग्णा च स्यात्, यदि तस्याः व्यवहारः परित्यक्तः स्यात् प्रमादात्। आंग्लभाषा उन्नता, आन्ता-राष्ट्रियभाषाऽपि अद्य, परन्तु यदि आंग्लैः, अन्यैः अपि, तस्याः व्यवहारः न क्रियेत, तदा सा मृता ग्रन्थगता च स्यात्। ये अद्य तस्याः प्रशंसकाः, ते एव तस्याः निन्दकाः भवेयुः। तथैव संस्कृतभाषा महोन्नता महासमृद्धाऽपि, मृतप्राया ग्रन्थगता च जाताऽस्ति अस्माकं कथितसंस्कृतपंडितानां अव्यवहारात्। ये दोषाः भाषासु उत्पद्यन्ते अव्यवहारात्, ते सर्वे संस्कृते तस्य साहित्ये च उत्पन्नीभूताः। अस्माकं भाषा साहित्यं च कथं अपवादः स्यात्, अस्य सामान्य-नियमस्य?

संस्कृतं तस्य साहित्यं च प्रकृतितः स्वस्थं, परन्तु प्रायः गतद्वि-सहस्रवर्षेषु दासतादिकारणात्, अस्माकं प्रमादात्, यत् मांसवर्द्धनं रोगरूपेण जातं, तस्य चिकित्सा तु आवश्यकी। अधिकमांसकर्त्तन-मात्रं इदं अस्ति, कयाऽपि शल्यचिकित्सया, येन भूयोऽपि संस्कृतं तस्य साहित्यं पूर्णतया स्वस्थं स्यात्। न अयं उपायः संस्कृतस्य तस्य साहित्यस्य च प्रकृति-परिवर्त्तनाय। एतादृशं कार्यं क्रियेत

चेत्, तदा तु वस्तुतः भय-कारणं, अन्यथा नहि। शरीरं तु तदेव

तिष्ठेत् प्राचीनं, संस्कृतस्य, संस्कृतसाहित्यस्य, परन्तु जर्जरि-तस्य शरीरस्य (अस्माकं एव दोषैः) चिकित्सया कायाकल्पः स्यात्।

परन्तु सर्वप्रथमं अस्माकं कथित-संस्कृतज्ञानां चिकित्सा आवश्यकी, यतोहि ते भीषण-सांक्रामक-रोगैः पीडिताः स्वयं, यैः स्पर्शमात्रेण संस्कृतं संस्कृतसाहित्यं च रुग्णीकृतं। सर्वप्रथमं दोषाः, विविधरोगाः वा, व्यक्तिषु समाजे च उत्पद्यन्ते, अनन्तरं तैः स्व-भाषा साहित्यं च भ्रष्टीक्रियते। कदाचारि–दुराचारि–व्यभिचारि-पतितसमाजस्य साहित्यं एतादृशं दुष्टं अवश्यं एव स्यात्, यदि तस्य काऽपि लेखनादि–भाषा विद्यते। उन्नतसमाजस्य उन्नतं साहि-त्यं, तथा पतित–चरित्रहीन–समाजस्य भ्रष्ट-व्यभिचारादिवर्द्धकं साहित्यं भवति, इति प्रत्यक्षं विवादरहितं च। कारणं तु इदमेव, यत् यादृश्यः व्यक्तयः समाजस्य, तादृशः समाजः, तदा तादृशं साहित्यादिकं। कस्मिंश्चित् काले उन्नतसमाजस्य उन्नतं साहित्यं, तस्य एव समाजस्य पतनकाले, तैः एव समाजसदस्यैः भ्रष्टीभूतैः, उन्नत-साहित्यं अपि कूटमिश्रणादिभिः भ्रष्टीक्रियते, येन ते आत्मानं तस्मिन् साहित्ये पश्येयुः, तथा मद्य-मांस-मैथुनादि-विविधदोषाणां प्रमाणं आप्नुयुः। इदं कार्यं अस्मात् कारणात् क्रियते, यत् तेषु सर्वेषु दुष्कार्येषु व्यभिचारादिषु कोऽपि न आक्षिपेत्। वस्तुतः प्रथमं कस्यचित् समाजस्य व्यक्तीनां, सदस्यानां, राष्ट्रसभ्यानां पतनं भवति, अनन्तरं तस्य समाजस्य राष्ट्रस्य भाषा-साहित्यस्य पतनं जायते। अयं लोकेतिहासः, अनुभवसिद्धः च। व्यक्तीनां सामूहिक-रूपेण सदाचारतः पतनात्, भ्रष्टीभूतत्वात्, कुलस्य, समाजस्य, राष्ट्रस्य, भाषायाः साहित्यस्य च पतनं जायते, अर्थात् सर्वतः पतनं भवति। परन्तु अन्ततोगत्वा उन्नत-व्यक्ति-समाज-राष्ट्रस्य उन्नत-

भाषा साहित्यं च तथा अनुन्नत–व्यक्ति–समाज–राष्ट्रस्य अनुन्नत-भाषा साहित्यं च भवति इति त्रिकालसत्यं। सारांशे भाषा साहित्यं च निकषः तुला च, येन सरलतया ज्ञातुं शक्यते, यत् कोऽपि समाजः, राष्ट्रं च उन्नतं अनुन्नतं, पतितं अपतितं वा अस्ति।

परन्तु मानवस्वभावप्रवाहात्, आत्मप्रकृतिवशात् अज्ञानात् वा आत्मानं 'अदोषी' सदाचारी, उन्नतः इत्यादि' मत्वा भाषा-साहित्यादिषु, अन्येषु पुरुषेषु वा, 'दोषारोपणं' करोति मानवः। 'आत्म–निरीक्षणं' तु करोति एव नहि मानवः, मानवैः एवं निर्मित-समाजः राष्टं वा। अस्मात् समाज-राष्ट्र-पतनं जायते, परन्तु अन्ते मानवः'दोषी',येन सामूहिकरूपेण समाजःराष्ट्रं वा निर्मीयते। अयं जगति अनुभवसिद्धः सिद्धान्तः, विशदरूपेण स्पष्टीकृतः, येन भारतीयाः जानीयुः, यत् देश–जाति–भाषा–साहित्यादि–पतनस्य अन्ततोगत्वा कः उत्तरदायी, के उत्तरदायिनः समाजरूपेण राष्ट्र-रूपेण च। अन्येषु दोषारोपणं व्यर्थं हानिकरं च। अतएव कथयामिः—

"चिकित्सकः प्रथमं 'आत्मानं' स्वस्थीकुरु" इति

अहं 'चिकित्सकः' प्रथमं आत्मानं स्वस्थीकृतवान्। किं स्वस्थीकरणं आत्मनः? इदं एव स्वस्थीकरणं, यत् प्रथमं स्वत एव संस्कृतस्य नैज-सार्वजनिकजीवने मातृभाषावत् प्रयोगः कार्य्यः, येन व्यवहारेण ज्ञातं स्यात्, यत् संस्कृतस्य रोगः कः, तथा कां चिकित्सां अपेक्षते? 'मातृभाषावत् प्रयोगः कार्य्यः' इति मया अस्मात् कारणात् कथ्यते,यतोहि अद्य मातृभाषा' तु अस्ति एव नहि 'संस्कृतं' कस्यचित् अपि भारतीयस्य 'मातृणां संस्कृतस्य मातृ-भाषणाविभाषायाः अभावात्। अस्याः दुःस्थितेः वयं एव भारतीयाः उत्तर-

दायिनः, यतोहि अस्माभिः मातृवर्गः संस्कृतज्ञानात् बलात् वारितः। गृहेभ्यः तु गलहस्तिता संस्कृतभाषा देवीवाक्। वाक् स्त्रीलिङ्गः शब्दः, अतः प्रथमं 'देवीषु मातृषु' प्रसरेत्, अनन्तरं पुरुषेषु 'मातृभाषापदं' लभेत। वाग्देवता 'सरस्वती' स्वतएव 'स्त्रीरूपा कल्पिता विद्याभक्तैः, विद्यायाः मूर्तिरूपे उपासकैः। 'कल्पना इयं' तथापि महत्त्वं आवहति स्त्रीरूपत्वात्। शिक्षा इयं, यत् सर्वप्रथमं मातृषु वाग्देवता संस्कृतं संरक्षणीयं संस्थापनीयं ज्ञानविज्ञानसहितं, तदनन्तरं 'फलवती स्यात् वाग्देवता सरस्वती संस्कृतवाक्'। यदि इदानीं अपि न बुध्येरन् मादृशाः मूर्खाः भारतीयाः, कथितसंस्कृतज्ञाः, तदा कस्य दोषः ? दौर्भाग्यं एव अस्माकं सर्वेषां इति निष्कर्षः।

अतः अस्माभिः सर्वैः संस्कृतज्ञैः प्रत्येकेन 'प्रतिज्ञा' कार्य्या यत् सर्वासु दशासु, 'सर्वप्रथमं संस्कृतं देवीवाक् गृहे मातृवर्गे संस्थाप्य', नैज-सार्वजनिकजीवने संस्कृतेन एव व्यवहारः करिष्यते। अनेन एव व्यवहारेण सद्यः संस्कृतस्य शरीरात् रोगनाशः, अधिकमांसादिरूपः, दूरीभवेत्। सौभाग्यं यत् या 'शल्यचिकित्सा' एकादशवर्षपूर्वं कीदृशं संस्कृतम् ? इति ग्रन्थे दत्ता, संस्कृतसंसारेण (देशीय-विदेशीयेन) तारतम्येन स्वीकृता। सा 'शल्यचिकित्सा' गताध्याये दत्ता प्रमाणसहिता विद्वत्समर्थिता, यद्यपि सर्वेषां पञ्चगताध्यानां अयं एव सामान्याशयः प्रयोजनं च।

## संस्कृतसाहित्यस्य का शल्यचिकित्सा ?

संस्कृतभाषावत् संस्कृतसाहित्यं अपि स्वस्थं प्रकृतितः स्वभावात् च, परन्तु अस्माभिः चरित्ररहितैः वैयक्तिक-सामाजिक-राष्ट्रियरूपेण महाभारतकालानन्तरं संस्कृतसाहित्यं अपि भ्रष्टीकृतं तस्मिन्

आत्मनः भ्रष्टरूपं अवलोकनाय, स्वव्यभिचार–दुराचारादेः पुष्टीकरणाय। अस्माभिः गतपृष्ठेषु प्रबलप्रमाणैः सिद्धीकृतं, यत् महाभारतसदृशं महायुद्धं, विश्वयुद्धवत्, कदापि न स्यात्, यदि वैयक्तिक–सामाजिक–राष्ट्रिय-चरित्रं पतितं न भवेत्। तस्य कालस्य सामाजिक–राष्ट्रिय-दशायाः चित्रं अपि ऐतिहासिकप्रमाणैः चित्रितं, येन अतर्क्यप्रमाणैः सिद्धं स्यात्, यत् व्यक्तेः समाजस्य राष्ट्रस्य च चरित्रं यावत् भ्रष्टं न स्यात्, तावत् दासतायुद्धादीनि असम्भवानि।

## महाभारतात् प्राक् संस्कृतसाहित्यं ऋषिमुनिभिः महाविचारकैः वैज्ञानिकैश्च रचितं

महाभारतात् प्राक् संस्कृतसाहित्यं ऋषिमुनिभिः, महाविचारकैः वैज्ञानिकैः भारतीयैः रचितं, अतः सर्वथा अदुष्टं सत्यविद्याज्ञानविज्ञानादिवर्द्धकं आसीत्, यस्मिन् साहित्ये बहूनि त्रिकालसत्यानि सन्ति, विशेषतया अध्यात्मविषये, येन इदानीं अपि अस्माकं भारतीयानां प्रतिष्ठा जगति विद्यते निःश्रेयससंपादने। परन्तु भौतिकज्ञानं अपि न्यूनं नासीत् अभ्युदयाय, येन भारतीयाः चक्रवर्त्तिनः राजानः जाताः, अतिष्ठन् च अनन्तकालपर्यन्तं। अस्य प्रभुत्वस्य वैभवस्य अन्तः जातः महाभारतयुद्धे सामाजिक-राष्ट्रिय-चरित्र-भ्रष्टत्वात् घोरपतनात् च। महाभारतात् प्राक् भारतीयानां सिद्धान्तः आसीत् यत्

'येन अभ्युदय-निःश्रेयस–सिद्धिः स एव धर्मः'

परन्तु महाभारतकालानन्तरं अस्माकं भारतीयानां सिद्धान्तः जातः यत्



'येन अनाचार–कदाचार–व्यभिचार-सिद्धः स एव धर्मः' इति

अतः अस्माभिः भारतीयैः भ्रष्टीभूतैः वाममार्गाः वेदशास्त्रविरुद्धाः प्रचालिताः, तथा 'अदुष्टं संस्कृतसाहित्यं' दुष्टीकृतं, येन तेषां प्रमाणैः वाममार्गाः 'मांस-मत्स्य-मद्य-मैथुन-मुद्रादयः' पुष्टीकृताः स्युः, न केवलं भारते, अपितु विश्वेऽपि। संस्कृतसाहित्यस्य अयं भ्रष्टीकरणक्रमः उत्तेजितः विदेशीय-शासकैः भारतीयद्रोहिभिः धनेन क्रीतैः, उत स्वत एव संस्कृतं पठित्वा शासकैः एतेन दुष्टोद्देश्येन भ्रष्टीकृतं साहित्यं। यतोहि यावत् कस्याश्चित् शासितजातेः साहित्यं इतिहासः च न भ्रष्टीकृतः स्यात्, तावत् क्व तेषां विदेशीय-शासकानां चिरस्थायिशासनं ? अयं क्रमः अप्रत्यक्षरूपेण आंग्ल-शासनकालेऽपि प्राचलत्, तेषां संस्कृतज्ञानां प्रोत्साहनेन, ये देश-द्रोहिणः आसन्, तथा 'भारतीयस्वातन्त्र्यं' न कामयन्तेस्म, अपितु 'आंग्लपारतन्त्र्यं' स्वीकुर्वतेस्म। एते संस्कृतपंडिताः क्रीतदासाः प्रमाणानि ददतिस्म, यत् 'विदेशीयशासकोऽपि भारते ईश्वरस्य साक्षात् प्रतिनिधिः' तथा 'पारितोषिकाणि सम्मानानि' लभन्तेस्म। विदेशीयशासकानां, तेषां क्रीतदासानां, देशद्रोहिणां, वाममार्गिणां इदं कुकृत्यं आसीत्, येन संस्कृतसाहित्यं विविध-कूटमिश्रणादिभिः भ्रष्टीभूतं। विदेशीयशासकानां अभीष्टं आसीत् यत् शासितवर्गेषु आत्मग्लानिः 'सर्वं भारतीयं प्रति, भाषा-संस्कृति-साहित्यादिकं प्रति' प्रादुर्भवेत्, तथा 'शासकानां भाषा-सभ्यता-साहित्यादिकं प्रति' प्रीतिः सम्पद्येत। इदं कार्यं आंग्लशासकैः कूटराजनीति-विशारदैः महता छलेन कृतं इति इतिहाससिद्धं। बहवः आंग्ल-देशीयाः संस्कृतविद्वांसः जाताः, येषु बहुभिः 'भारतीयतां प्रति' आत्मग्लानिः, येन मार्गेण उत्पद्येत, तत्सर्वं कृतं। मुगलशासकैः अपि, अन्ते भारतनिवासिभूतैः, महता चातुर्येण एतादृशं कूट-

राजनीतिकार्यं कृतं, यद्यपि पूर्वंमुस्लिमशासकैः बहुसंस्कृतंसाहित्यं अग्नौ प्रक्षिप्य, अन्यैः उपायैः अपि, विनष्टं। तथापि अन्ते तु अस्माकं भारतीयानां, विशेषतया संस्कृतज्ञानां दोषः, यतः वयं देशद्रोहिणः वाममार्गिणः व्यभिचारादिप्रियाः जाताः, येन अस्माभिः अपि संस्कृतसाहित्यं अमृतं इव कूटमिश्रणैः, व्यभिचारादिवर्द्धकैः, भ्रष्टीकृतं, प्राचीन–ऋषि–मुनि–नाम्नि इति महाखेदस्य महादुःखस्य वार्त्ता।

## प्राचीन-ऋषि-मुनीनां कोऽपि दोषः नास्ति

मम पूर्णविश्वासः, अनेकानेकप्रमाणैः समर्थितः (संस्कृत-ग्रन्थानां प्राचीनानां, रचना–क्रमं सम्यक् विचार्य) यत् एतादृश्यः वार्त्ताः यथा

(१) श्राद्धं, मधुपर्कः, यज्ञः, न मांसेन विना'

(२) व्यभिचारादेः दुराचारादेः, अन्त्यजादिषु घोरान्यायस्य वार्त्ताः

क्षेपकरूपाः, कूटमिश्रणरूपाः संस्कृतसाहित्ये, न अस्माकं प्राचीन–ऋषिमुनिभिः महाविचारकैः सदाचारयुक्तैः दत्ताः, येषां नाम्नि, तानि कूटमिश्रणानि क्षेपकादीनि विद्यन्ते इदानीं, यथा आदिविधानकर्त्ता महामुनिमनुः, उपनिषत्कर्त्तारः, बाल्मीकिवेद-व्यासादयः, आद्यशङ्कराचार्यः, तथा अन्येऽपि महाविचारकाः, विद्वांसः, योगिनः, वेदधर्मपुनस्संस्थापकाः ऋष्यादयः इति। दौर्भाग्यवशात् लेखकानां जीवनवृत्तं जन्मादितिथिसहितं तथा ग्रन्थलेखनतिथियुक्तं नहि विद्यते प्रायः प्राचीनसंस्कृतग्रन्थेषु, येन एतादृशः अनर्थः सुगमः जायते। दौर्भाग्यं इदं अपि, यत् दासतादेः प्रायः



द्विसहस्रवर्षेषु अन्वेषणादिकार्यं सर्वथा अवरुद्धं, येन भारतीयैः

इदं अपि नहि अवलोकितं, यत् अस्माकं ग्रन्थेषु कीदृशं मिश्रणं जातं अस्ति। महादोषः तेषां पंडितानां, यैः ग्रन्थानां प्रकाशन-मुद्रणादि-समये कूटमिश्रणानि क्षेपकादीनि न दूरीकृतानि। परन्तु इदं कथं सम्भवं स्यात्, यदा शारीरिकदासतया सह 'मानसिक-दासतायाः अपि भीषणरोगः, पण्डितसमाजे भवेत्, येन सर्वं विनष्टं इव प्रतीयते। महाखेदस्य वार्त्ता इयं अपि, यत् अधिकांश-पण्डितसमाजेन, यत्किञ्चित् व्यभिचार-दुराचारवर्द्धकं अनिष्टकरं विद्यते स्पष्ट-कूटमिश्रणरूपेण, तत्सर्वं 'वेदवाक्यं इव' स्वीक्रियते। वेदपठनं तु सर्वथा परित्यक्तं, यत् प्रथमकर्त्तव्यत्वेन आसीत्, तथा येन वेदज्ञानेन एव वर्णाश्रमव्यवस्था प्रचलति। अद्य तत्सर्वं जन्मना कल्पितं, येन वेदपठनस्य, परिश्रमस्य, ब्रह्मचर्याश्रमस्य आवश्यकताऽपि न आपतेत्, येन

'यावत् जीवेत् सुखं जीवेत्' इति मत्वा

किमपि शरीरकष्टं न भवेत्, का चिन्ता, मानसिकदासता भवेत् न वा, ग्रन्थेषु किमपि कूटमिश्रणं भवेत् न वा? एतेषां सुखजीवनाभिलाषिणां कृते ऋषिमुनिप्रणीतशास्त्रं नहि विद्यते, यैः सर्वं गृहसुखं परित्यज्य, वनेषु वसित्वा, अरण्यकन्द-मूलफलादिकं भक्षयित्वा, शास्त्ररचना 'विश्वमानवकल्याणैकमात्र-धिया' कृता। यदि एतेषां अपि उद्देश्यं अनाचार-दुराचार-व्यभि-चारादिकं स्यात्, तदा गृहत्यागस्य का आवश्यकता? यदा अहं अवलोकयामि कूटमिश्रणानि शास्त्रेषु, उपनिषत्सु, वेदेषु अपि भाष्यादिमिषेण, तदा मम रक्तं तप्तं जायते। बहूनां पंडितानां एता-दृशी स्थितिः नहि जायते इति प्रतीयते, अन्यथा शास्त्र-शोधः कथं नहि, इति महाश्चर्यं?

भगवतः वेदान् विहाय, येषां स्वतः प्रमाणत्वं वेदधर्मावलम्बिभिः स्वीक्रियते ईश्वरीयज्ञानकारणात्, अन्येषां शास्त्राणां मानवप्रणीतानां परतःप्रमाणत्वं स्वीक्रियते धर्मविषये, इति स्थितिः। ऋषिमुनिप्रणीतेषु वैदिक-लौकिक-ग्रन्थेषु, ब्राह्मणानि, उपनिषदः, स्मृतयः प्रसिद्धाः, यासां 'प्रमाणत्वे' द्वितीयं स्थानं विद्यते धर्मसम्बन्धे। जनानां स्मृतिषु, उपनिषत्सु, ब्राह्मणादिषु महती श्रद्धा इदानीं, प्रायः अन्धश्रद्धावत् विद्यते। स्मृतिषु 'मनुस्मृतिः' प्राधान्यं भजते। अस्मिन् विषये विशदरूपेण आगामिपृष्ठेषु दास्यते, परन्तु उदाहरणार्थं अत्र किमपि दीयते, येन स्पष्टं स्यात्, यत् स्मृतिषु कीदृशं कूटमिश्रणं अस्ति। मनुस्मृतौ इदानीं विद्यते यत्

मधुपर्के च यज्ञे च पितृदैवतकर्मणि,
अत्रैव पशवः हिंस्याः न अन्यत्र इति अब्रवीत् मनुः।

( अध्या० ५ श्लो० ४१ )

व्याख्याः—अस्माकं निवेदनं इदं, यत् अयं श्लोकः स्पष्टरूपेण 'क्षेपकः कूटमिश्रणं च', यतोहि यदि मनुना रचितः स्वत एव एतादृशः श्लोकः, तदा स मनुः न लिखेत् 'इति अब्रवीत् मनुः'। परन्तु ५६ तमे श्लोके प्रथमाध्यायस्य विद्यते यत्

एतत् वः अयं भृगुः शास्त्रं श्रावयिष्यति अशेषतः,
एतत् हि मत्तः अधिजगे सर्वं एषः अखिलं मुनिः।

( अध्या० १, श्लो० ५९ )

अनेन सिद्ध्यति, यत् केनाऽपि भृगुणा प्रथमाध्यायस्य ६० श्लोकतः आरभ्य द्वादशाध्यायं यावत् २६०३ श्लोकाः रचिताः, यतोहि मनुस्मृतौ प्रायः २६६२ श्लोकाः आद्यन्तं विद्यन्ते। वस्तुतः वर्त्तमान-कथित-मनुस्मृतिः न 'मनुस्मृतिः' अपितु 'भृगु-स्मृतिः' इति

निर्विवादं। परन्तु एतस्यां 'भृगुस्मृतौ अपि' स्थाने स्थाने पूर्वा-परविरोधः, येन स्पष्टं स्यात्, यत् 'कथित-मनुस्मृतिः भृगुणा श्राविता ऋषीन् प्रति' न एकस्य भृगोः कार्यं। न जाने कियन्तः 'भृगवः' अस्याः लेखकाः, वस्तुतः कूटमिश्रणकर्त्तारः। का वास्तविक-मनुस्मृतिः, क्व सा पलायमाना इति सर्वं अन्वेषणीयं विद्वद्भिः। यदि वस्तुतः इदं 'मनु-प्रणीत-शास्त्रं मनुस्मृतिः नाम, तदा कथं नहि

'श्राद्धे मधुपर्के यज्ञे च पशुहिंसा अद्य क्रियते ?'

इति अस्माकं सनातनधर्मावलम्बिभिः आर्यसमाजसदस्यैः ऋषि-दयानन्दस्य अनुयायिभिः प्रश्नः ? महर्षि दयानन्देन 'मनुस्मृतेः' प्रमाणत्वं स्वीक्रियते, कतिपयान् श्लोकान् विहाय, ये क्षेपकाः तन्मते, परन्तु के के श्लोकाः क्षेपकाः, तेन महर्षिणा, उत तस्य अनुयायिभिः इदानीं यावत् नहि स्पष्टीक्रियन्ते सामूहिक-रूपेण यथा सार्वदेशिक-आर्य-प्रतिनिधिसभया। न जाने केन भयेन अन्धपरम्परया वा, इदं अन्वेषणकार्यं सनातनधर्मिभिः, आर्यसमाजिभिः तेषां संस्थाभिः नहि क्रियते। मानसिकदासतायाः इदं अतर्क्यं ज्वलत्प्रमाणं। अस्माकं शासकाः तु प्रायः आंग्ल-भाषा-साहित्य-सभ्यतादि-विमोहिताः, अतः तेषां विचारे, यदि श्वः संस्कृतभाषा साहित्यं च नश्येत्, तदा अद्य कथं न नश्येत्? ते तु किमपि उपयोगि कल्याणकरं वा संस्कृतभाषायां साहित्ये च नहि अवलोकयन्ति। अतः

'यथा राजा तथा प्रजा' इति

इमे सर्वे मिलित्वा अज्ञानान्धकारस्य सुखगाढनिद्रायां स्वपन्ति। 'सर्वं कुशलं एव, सर्वं अमृतं एव' इति तेषां घोषः अर्धप्रबोधदशायां येन भूयः अज्ञानान्धकारमयं गाढनिद्रासुखं अनन्तकालपर्यन्तं

लभेरन्, वेदधर्मः तिष्ठेत् न वा, संस्कृतं संस्कृतसाहित्यं तिष्ठेत् न वा, भारतीयाः, भारतीयता, भारतं तिष्ठेत् न वा ? ईदृशानां कथित-भारतीयानां ईश्वरोऽपि कथं सहायकः स्यात् ? अस्तु, यत् तिष्ठति संस्कृतसाहित्ये क्षेपकादिरूपे तत्तु विद्यते एव ।

**उपनिषत्सु अध्यात्मग्रन्थेषु वेदव्याख्यातृषु अद्य किं विद्यते ?**

छान्दोग्योपनिषदि विद्यते यथा :—

स यः एवं एतत् वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति, मिथुनात् मिथुनात् प्रजायते, सर्वं आयुःएति, ज्योग् जीवति महान्, प्रजया पशुभिः भवति महान् कीर्त्या, न कांचन परिहरेत् तत् व्रतं ।

( २-१३-२ )

व्याख्याः—आद्यशङ्कराचार्यस्य नाम्नि व्याख्या दीयते यथा—

'.........कांचित् कांचन अपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत् समागमार्थिनीं ।' इति ।

व्यभिचारस्य कयाऽपि स्त्रिया सह पूर्णस्वतन्त्रता दीयते अत्र । अध्यात्मवादिग्रन्थेषु, यत्र केवलं आत्मनः परमात्मनः विचारः विद्यते, एतादृशः घोरव्यभिचारवादः केन ऋषि-महर्षिणा दातुं शक्यते । केनाऽपि सदाचारि-सभ्यविदुषा एतादृशं दुष्कार्यं कर्त्तुं नहि शक्यते वाममार्गिणा विना, पञ्चमकारमैथुनादि-प्रचारकेण विना, वेदधर्मविरोधिना विना, इति सूर्यवत् स्पष्टं । आश्चर्यं तु इदं एव, यत् व्याख्या आद्यशङ्कराचार्यस्य नाम्नि विद्यते, यः योगी, सदाचारी, महाविद्वान् वेदज्ञः आसीत् । किं स कथयितुं शक्नोतिस्म, यत् 'कांचन अपि स्त्रियं न परिहरेत् समागमार्थिनीं' ? इदं



न केवलं अस्माकं शास्त्राणां, आद्यशंकराचार्याणां, अपितु मातॄणां,

निर्विवादं। परन्तु एतस्यां 'भृगुस्मृतौ अपि' स्थाने स्थाने पूर्वा-परविरोधः, येन स्पष्टं स्यात्, यत् 'कथित-मनुस्मृतिः भृगुणा श्राविता ऋषीन् प्रति' न एकस्य भृगोः कार्यं। न जाने कियन्तः 'भृगवः' अस्याः लेखकाः, वस्तुतः कूटमिश्रणकर्त्तारः। का वास्तविक-मनुस्मृतिः, क्व सा पलायमाना इति सर्वं अन्वेषणीयं विद्वद्भिः। यदि वस्तुतः इदं 'मनु-प्रणीत-शास्त्रं मनुस्मृतिः नाम, तदा कथं नहि

'श्राद्धे मधुपर्के यज्ञे च पशुहिंसा अद्य क्रियते ?'

इति अस्माकं सनातनधर्मावलम्बिभिः आर्यसमाजसदस्यैः ऋषि-दयानन्दस्य अनुयायिभिः प्रश्नः ? महर्षि दयानन्देन 'मनुस्मृतेः' प्रमाणत्वं स्वीक्रियते, कतिपयान् श्लोकान् विहाय, ये क्षेपकाः तन्मते, परन्तु के के श्लोकाः क्षेपकाः, तेन महर्षिणा, उत तस्य अनुयायिभिः इदानीं यावत् नहि स्पष्टीक्रियन्ते सामूहिक-रूपेण यथा सार्वदेशिक-आर्य-प्रतिनिधिसभया। न जाने केन भयेन अन्धपरम्परया वा, इदं अन्वेषणकार्यं सनातनधर्मिभिः, आर्यसमाजिभिः तेषां संस्थाभिः नहि क्रियते। मानसिकदासतायाः इदं अतर्क्यं ज्वलत्प्रमाणं। अस्माकं शासकाः तु प्रायः आंग्ल-भाषा-साहित्य-सभ्यतादि-विमोहिताः, अतः तेषां विचारे, यदि श्वः संस्कृतभाषा साहित्यं च नश्येत्, तदा अद्य कथं न नश्येत्! ते तु किमपि उपयोगि कल्याणकरं वा संस्कृतभाषायां साहित्ये च नहि अवलोकयन्ति। अतः

'यथा राजा तथा प्रजा' इति

इमे सर्वे मिलित्वा अज्ञानान्धकारस्य सुखगाढनिद्रायां स्वपन्ति। 'सर्वं कुशलं एव, सर्वं अमृतं एव' इति तेषां घोषः अर्धप्रबोधदशायां येन भूयः अज्ञानान्धकारमयं गाढनिद्रासुखं अनन्तकालपर्यन्तं

लभेरन्, वेदधर्मः तिष्ठेत् न वा, संस्कृतं संस्कृतसाहित्यं तिष्ठेत् न वा, भारतीयाः, भारतीयता, भारतं तिष्ठेत् न वा ? ईदृशानां कथित-भारतीयानां ईश्वरोऽपि कथं सहायकः स्यात् ? अस्तु, यत् तिष्ठति संस्कृतसाहित्ये क्षेपकादिरूपे तत्तु विद्यते एव ।

## उपनिषत्सु अध्यात्मग्रन्थेषु वेदव्याख्यातृषु अद्य किं विद्यते ?

छान्दोग्योपनिषदि विद्यते यथा :—

स यः एवं एतत् वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति, मिथुनात् मिथुनात्प्रजायते, सर्वं आयुःएति, ज्योग् जीवति महान्, प्रजया पशुभिः भवति महान् कीर्त्या, न कांचन परिहरेत् तत् व्रतं ।

( २–१३–२ )

व्याख्याः—आद्यशङ्कराचार्यस्य नाम्नि व्याख्या दीयते यथा—

'.........कांचित् कांचन अपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत् समागमार्थिनीं ।' इति ।

व्यभिचारस्य कयाऽपि स्त्रिया सह पूर्णस्वतन्त्रता दीयते अत्र । अध्यात्मवादिग्रन्थेषु, यत्र केवलं आत्मनः परमात्मनः विचारः विद्यते, एतादृशः घोरव्यभिचारवादः केन ऋषि-महर्षिणा दातुं शक्यते । केनाऽपि सदाचारि-सभ्यविदुषा एतादृशं दुष्कार्यं कर्त्तुं नहि शक्यते वाममार्गिणा विना, पञ्चमकारमैथुनादि–प्रचारकेण विना, वेदधर्मविरोधिना विना, इति सूर्यवत् स्पष्टं । आश्चर्यं तु इदं एव, यत् व्याख्या आद्यशङ्कराचार्यस्य नाम्नि विद्यते, यः योगी, सदाचारी, महाविद्वान् वेदज्ञः आसीत् । किं स कथयितुं शक्नोति, यत् 'कांचन अपि स्त्रियं न परिहरेत् समागमार्थिनीं' ? इदं



न केवलं अस्माकं शास्त्राणां, आद्यशंकराचार्याणां, अपितु मातृणां,

स्वसृणां, भारतीयस्त्रीणां, सतीनां सच्चरित्राणां निन्दा। किं अस्माकं धर्माचार्यैः, साधुभिः संन्यासिभिः, सद्भिः संस्कृतपण्डितैः नहि अवलोक्यते, यत् एतेषु धूर्त्तवचनेषु, कूटमिश्रणेषु, शोधः आवश्यकः सद्यः ?

वृहदारण्यकोपनिषदि विद्यते यथाः—

'अथ यः इच्छेत् पुत्रः मे पण्डितः विगीतः समितिंगमः शुश्रुषितां वाचं भाषिता जायेत, सर्वान् वेदान् अनुब्रवीत् सर्वं आयुः इयात् इति मांसौदनं पाचयित्वा सर्पिष्मन्तं अश्नीयातामीश्वरौ जनयित वा औक्षेण वाऽऽर्षभेण वा।'

व्याख्याः—अत्र स्पष्टतया परामर्शः शिक्षा वा दीयते, यत् कोऽपि पुरुषः इच्छेत् चेत्, यत् तस्य पुत्रः वेदज्ञः आदि भवेत्, तदा स पुत्रः वृषभादेः मांसं पाचयित्वा भक्षयेत् इति। प्रश्नः तु अयं एव, यत् उपनिषत्सु एतादृशी असम्बद्धा वृषभादेः मांसभक्षण-वार्त्ता कथं आगता ? उत्तरं इदं, यत् केनाऽपि वेदविरोधिना वाममार्गिणा मांसमद्यमैथुनादि-समर्थकेण, पण्डितानां हितमिषेण, तत्र स्थापिता। यदि वयं संस्कृतज्ञाः इदं अपि ज्ञातुं न शक्नुमः, तथा एतेषां सहस्रशः लक्षशः कूटमिश्रणानां दूरीकरणे उद्यताः न भवामः, तदा अस्माकं पतनस्य पराकाष्ठा इति।

'कुलार्णव' ग्रन्थे विद्यते यथा :—

मद्यमांसविहीनेन न कुर्यात् पूजनं शिवे।
न तुष्यामि वरारोहे, भगलिंगामृतं विना।



व्याख्या :—शिवस्य महादेवस्य पार्वतीं प्रति उक्तिः विद्यते,

यत् कोऽपि मम पूजां न कुर्यात्, यः मद्यमांसादिसेवी नास्ति अर्थात् शिवभक्तस्य कृते मद्यमांसादिसेवनं आवश्यकं, महादेवस्य स्वत एव वचनेषु। किं शिवभक्ताः इदं सर्वं सोढुं शक्नुवन्ति ग्रन्थेषु ? अन्यथा शिवपूजकानां कृते मद्यमांसादिसेवनं अनिवार्यं स्यात्, यदि तेषां महादेवे श्रद्धा भक्तिश्च। परन्तु शिवपूजकाः अपि अत्र ध्यानं न ददति सर्वस्मिन् भारते विश्वे च, यत्र यत्र ते स्युः ? अहो! मानसिकदासतायाः अज्ञानान्धकारतायाः निर्जीवतायाः पराकाष्ठा इयं। कीदृशाः अस्माकं शिवभक्ताः, जगद्गुरवः शङ्कराचार्याः, ये शिवपूजां उपदिशन्ति, तेऽपि ध्यानं नहि ददति, यत् तेषां कथित-धर्म-ग्रन्थेषु कीदृशाः भयङ्करसर्पादयः कूटमिश्रणरूपाः विद्यन्ते, येषु कूटमिश्रणेषु एकैकं अपि धर्मनाशाय अलं। परन्तु कदाचित् इमे भक्ताः धर्माचार्याः विचारयन्ति, इमानि कूटमिश्रणानि शिवभूष-णानि सर्पादिवत्, यैः भूषितः मादकद्रव्यसेवी च अयं देवानां देवः अवलोक्यते तस्य भक्तैः सम्प्रति।

स्थाली-पुलाक-न्यायेन अस्माभिः कतिपयानि उदाहरणानि दत्तानि, येन ज्ञातं स्यात्, यत् धर्मग्रन्थेषु शोधकार्यस्य कीदृशी महती आवश्यकता विद्यते। अन्यासां देवतानां इन्द्र–ब्रह्मा–विष्णु प्रभृतीनां एतादृशी एव दुर्दशा तेषां भक्तैः कृता विद्यते पुरा-णादिषु। अत एव अहं कथयामि, यत् न ईश्वरस्य, न देवतानां मुक्तजीवानां, न महापुरुषाणां महायोगिनां पतनं जायते, अपितु मानवस्य, मानवसमाजस्य राष्ट्रस्य च पतनं भवति। पतितः मानवः समाजः वा स्वधर्मादिग्रन्थान् स्वतएव भ्रष्टीकरोति, स्वभ्रष्टा-त्मानं अवलोकयितुं दर्पणवत् साहित्ये। तस्य एव भ्रष्टीभूतस्य

मानवस्य समाजस्य च 'भ्रष्ट-छाया' पतति साहित्ये। परन्तु सतां

विदुषां कर्त्तव्यं 'शोधनं' एतादृशस्य कथित-साहित्यस्य, पतितानां उद्धाराय।

## परन्तु शोधकार्यस्य पूर्वं किं आवश्यकं ?

परन्तु शोधकार्यस्य पूर्वं इदं नितान्तं आवश्यकं, यत् सर्वेषां धार्मिकग्रन्थानां गद्यपद्यादि-मयानां स्फुटरूपेण प्रकाशनं स्यात्। अनन्तरं शोधकार्यं कृतं स्यात्। सर्वप्रथमं तु इदं आवश्यकं, यत् ग्रन्थानां अनेन रूपेण प्रकाशनं स्यात्, येन पठने अर्थज्ञाने सौविध्यं सम्पद्येत।

## तदा ग्रन्थानां स्फुट-प्रकाशनं किं ?

ग्रन्थानां स्फुट-प्रकाशनं इदं, यत् ग्रन्थानां वाक्य-पदेषु सन्धिः संयोगश्च न तिष्ठेत्, अर्थात् संस्कृत-व्याकरणानुसारं संस्कृत-पदस्य यद्रूपं भवति तदेव प्रयोक्तव्यं। यथा यदि व्याकरणानुसारं 'रामः' इति पदं भवति, तदा सर्वेषु वाक्येषु 'रामः' इत्येव तिष्ठेत्, न तु अनेन प्रकारेण दीयेत यथा

'रामो गच्छति, रामस्तिष्ठति, रामश्शेते' इत्यादि।

यतो हि अनेन मार्गेण सर्वे संस्कृतग्रन्थाः कादम्बरीवत् नीताः दुरूहाः, जटिल-जटिलाः पठने, पदज्ञाने, अर्थज्ञाने च दुस्साध्याः। संस्कृतपदानां सन्धिसंयोगकारणात् अर्थज्ञानादिकं प्रायः दुस्साध्यं इव भवति। प्रथमं पदच्छेदः मनसि, स्फुटः वा, आवश्यकः, येन पदज्ञानं, अनन्तरं अर्थज्ञानं सम्भवेत्। परन्तु यैः संस्कृतव्याकरणं ध्यानपूर्वकं पठितं, ते जानन्ति, यत् पदानि पृथक्-पृथक् भवितुं अर्हन्ति ग्रन्थेषु, यदि पदेषु सन्ध्यादयः कृताः स्युः। इयं एका अतिरिक्ता महाविपत्तिः, येन अर्थस्य अनर्थः सरलतया कर्त्तुं शक्यते केनाऽपि पक्षे विपक्षे

वा, लेखकाशय-विरुद्धं। संस्कृतविद्यार्थिनां कृते सर्वप्रथमं इदं आवश्यकं, यत् संस्कृतव्याकरणानुसारं यत्पदस्य यद्रूपं भवति तत् ज्ञातव्यं। संस्कृतपदरचना सन्धिसंयोगनियमाश्रिता इतिज्ञातवृत्तं। अत्रैव सन्धिसंयोगस्य उपयोगिता, यस्मात् सन्धिसंयोगनियमानां रचनां व्याकरणे महामुनि–वैय्याकरण-पाणिनिः, अन्येऽपि वैय्याकरणाः कृतवन्तः।

## गद्य-साहित्यं

गद्य-संस्कृतसाहित्यं तु अल्पं एव पद्यसंस्कृतसाहित्यापेक्षया इति ज्ञातवृत्तं। अस्य गद्यसाहित्यस्य प्राचीनस्य स्फुटप्रकाशनं तु सरलतया भवितुं अर्हति। केवलं इदं एव करणीयं, यत् वाक्य-पदानि पृथक् २ क्रियेरन्, येन पठने, अर्थज्ञाने, सौविध्यं सम्पद्येत। अद्य विज्ञानयुगानुसारि संस्कृतं स्यात्, तदा कोऽपि पठेत् अन्यथा कदापि नहि। कादम्बरीवत् गद्यसंस्कृतग्रन्थाः जटिल-जटिलाः दीर्घसमासबहुलाः अपि सरलाः भवितुं अर्हन्ति, यदि वाक्य–पदानि पृथक् २ दीयेरन्। अनेन मार्गेण ग्रन्थलेखकस्य काऽपि हानिः न स्यात्। तस्य सा एव भाषा तिष्ठेत् ग्रन्थे, या प्रयुक्ता तेन। परन्तु तस्य ग्रन्थस्य पठनपाठने सौविध्यं स्यात् पाठकानां, विशेषतया विद्यार्थिनां। प्रथमं पद-ज्ञानं आवश्यकं विद्यार्थिनां, येन तेषु दृढतमं संस्कृतज्ञानं स्यात्। इदं तु पूर्णतया स्पष्टं एव। येन अस्माकं प्राचीनमहापण्डितानां ग्रन्थानां देशे विदेशेषु प्रचारः प्रसारश्च स्यात्, तत्कार्यं अवश्यमेव करणीयं, इति अस्माकं सत्याग्रहः। अयं प्रकाशन-विधिः प्राचीन-ग्रन्थानां पूर्णतया व्याकरणसम्मतः, यः गताध्यायेषुस्पष्टीकृतः। अद्य निर्विवादः अयं विषयः। यद्यपि कोऽपि प्रायशः सामान्य-

नियमः नास्ति संस्कृतव्याकरणे, यत् वाक्य-पदेषु सन्धिः वैकल्पिकः, तथापि मन्येत चेत् दुराग्रहात्, न कार्यः इच्छाधीनत्वात् सौविध्याय। पदरचनानन्तरं पुनः पुनः संस्कृतपदेषु स्वरूपहानिः न बुद्धिमत्ता संस्कृतज्ञानां, येन मार्गेण अविवेकपूर्णेन तैः संस्कृतं ग्रन्थगतं मृतप्रायं च कृतं।

## पद्यसंस्कृतसाहित्यं

विपुलसंस्कृतसाहित्यं पद्ये विद्यते। आश्चर्यं यत् अद्य आयुर्वेद-ज्योतिष-गणित-विज्ञानादिविषयेषु अपि साहित्यं पद्यमयं मिलति, येन शुष्कविज्ञानविषयाणां ज्ञानेऽपि महत् काठिन्यं अनुभूयते तत्तद्विषयपाठकै विद्यार्थिभिः। एतादृशानां विज्ञान-गणित-ज्योतिष-आयुर्वेदादिविषयाणां, पठनपाठनं, तेषु विषयेषु अनुसन्धानादिकं गद्ये भवितुं अर्हति। पद्यकारणात् एतेषां विषयाणां अभिवृद्धिः अनुसन्धानं च सर्वथा अवरुद्धं। पद्येऽपि वाक्यानि तु भवन्ति एव, यद्यपि गद्यवत् नहि भवन्ति, अतः एतेषां सर्वेषां ग्रन्थानां अन्वयसहितं गद्ये प्रकाशनं कृतं स्यात्। न इमे वस्तुतः काव्यग्रन्थाः, येषु कोऽपि काव्य-चमत्कारः गुणः वा स्यात्, येन ते उत्कृष्ट-काव्य-ग्रन्थाः इति मन्येरन्। ते तु प्रायः श्लोकेषु विद्यन्ते, सर्वथा शुष्काः, काव्यगुणविरहिताः। अतः एते सर्वे ग्रन्थाः पुराणादयः अपि इतिहासादिग्रन्थाः, तात्कालिकं एव गद्ये प्रकाशिताः स्युः। वाक्यपूर्णं तु आवश्यकं स्यात्, यत्र श्लोकेषु पूर्णवाक्यं नास्ति। वैद्य-सम्मेलनेन आयुर्वेदग्रन्थानां गद्यरूपे प्रकाशनं कृतं स्यात्, तथैव अन्यैः सम्मेलनैः स्व-स्व-विषयं अवलम्ब्य। अनेन मार्गेण प्रायः ... वर्षेषु पूर्णं साहित्यं आयुर्वेद-गणित-ज्योतिष-

विज्ञान-इतिहासादिकं संस्कृतगद्ये स्यात्। तदनन्तरं अनुसन्धानं सम्भवेत् तत्तद्विषयेषु इति स्पष्टं।

कतिपय-वैद्यादयः कथयन्ति, यत् अस्माभिः इदं प्रकाशनं करणीयं ग्रन्थानां अस्मिन् रूपे, परन्तु इदं कदाचित् सम्भवं नास्ति विपुलसाधनसमयाभावात्। राष्ट्रियं कार्यं इदं, अतः तत्तद्विषयक-सम्मेलनैः भारतीयसर्वकारः निवेदनीयः एकस्य एतादृशस्य केन्द्रीयविभागस्य स्थापनाय, यत्र प्राचीनसंस्कृतग्रन्थानां अनुसन्धानपूर्वकं गद्ये प्रकाशनं स्यात्, तथा नवीनसाहित्यरचना कृता स्यात् एतेषु विषयेषु केवलं गद्ये, येन भारतकल्याणं भवेत्। सर्वासां स्मृतीनां सूत्रग्रन्थानां उपनिषदादीनां सरलतया गद्ये प्रकाशनं स्यात् इत्यपि ज्ञातव्यं।

## विशुद्ध-काव्य-ग्रन्थाः पिंगलशास्त्र-युक्ताः

वाल्मीकिरामायणं, वेदव्यासमहाभारतं, उत्कृष्टकाव्यग्रन्थाः, यद्यपि राष्ट्रियेतिहास-संस्कृति-केन्द्रभूताः, परन्तु ते तिष्ठेयुः पद्ये। तेषां अपि प्रकाशनं यथासाध्यं पृथक् पृथक् पदेषु क्रियेत काव्य-लालित्यं, पिंगलशास्त्रं संरक्ष्य। येषु पद्यग्रन्थेषु शास्त्रीय-काव्य-रचना, तत्र तु एतादृशं ध्यानं रक्षणं आवश्यकं। ये काव्यग्रन्थाः महाकविकालिदासादीनां विद्यन्ते, ये 'महाकाव्यानि' कथ्यन्ते, तत्र एतादृशी सावधानता नितान्तं आवश्यकी। इदं क्षेत्रं केवलं साहित्यमर्मज्ञानां उत्कृष्टकवीनां पिंगलशास्त्रज्ञातॄणां, येन काऽपि काव्य-गुण-हानिः न स्यात्। इदं क्षेत्रं मादृशानां क्षुद्रपंडितानां शास्त्र-साहित्य-असमर्मज्ञानां नास्ति, न सर्वकारस्य अपि। परन्तु सर्वकारेण एतादृशं महत् राष्ट्रियकार्यं महापंडितानां साहाय्येन कर्त्तुं शक्यते तत्र संस्कृतविश्वविद्यालयेषु कारयितुं शक्यते।

तथापि अहं एकः क्षुद्रविचारकः, अस्य ग्रन्थस्य लेखकः। केन

प्रकारेण एतादृशानां महाकाव्यानां प्रकाशनं स्फुटतया अर्थात् यथासाध्यं पृथक् २ पद-दानेन भवितुं अर्हति काव्य-हानिं विना इति मया एकेन उदाहरणेन स्पष्टीक्रियते स्थालीपुलाकन्यायेन। श्रीमद्भगवद्गीता, एकं उत्कृष्टकाव्यं, महाभारतमध्ये एकं अमूल्य-रत्नं, न केवलं भारतेवर्षे अपितु सर्वस्मिन् विश्वे श्रद्धया पठ्यते। अयं ग्रन्थः अनुष्टुप् छन्दसि विद्यते, यस्य प्रत्येकं चरणे १६ वर्णाः विद्यन्ते। गीतायाः अनेन प्रकारेण लेखनेऽपि, प्रकाशने च छन्दसः रक्षा भवितुं अर्हति, परन्तु पठने, पदज्ञाने अर्थज्ञाने च महत् सौविध्यं सम्पद्येत। अस्माभिः सर्वैः ज्ञातव्यं, यत् अद्य अस्माकं संस्कृतग्रन्थाः न केवलं भारते पठ्यन्ते अपितु विश्वेऽपि। द्वितीयं अद्य प्रकाशन-साधनानि अपि विद्यन्ते। अतः येन मार्गेण ग्रन्थानां मुद्रणे प्रकाशने सौविध्यं सम्पद्येत, तदपि करणीयं, अन्यथा संस्कृतसाहित्यं सदैव मृतं इव तिष्ठेत्। गीतायाः प्रकाशनस्य प्रकारद्वयं अत्र दीयते कांचित् अपि हानिं विना यथाः—

'धर्मक्षेत्रे कुरुक्षेत्रे समवेताः युयुत्सवः।
मामकाः पाडवाश्चैव किम् अकुर्वत संजय॥
दृष्ट्वा तु पांडवानीकं व्यूढं दुर्योधनः तदा।
आचार्यम् उपसंगम्य राजा वचनम् अब्रवीत्॥
पश्यैतां पांडुपुत्राणाम् आचार्य महतीं चमूं।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥

द्वितीयप्रकारः अयं, यत् 'मः अनुस्वारः' इति सूत्रबलात् हलन्त म् स्थाने अनुस्वारः दीयेत। अयं विधिःन केवलं व्याकरणसम्मतः, अपितु प्राचीनतमलेखैःसमर्थितः विद्यते। अतः प्रकारद्वयं अपि साधु इति ज्ञातव्यं।

व्याख्या :—अत्र १६ वर्णाः यथापूर्वं छन्दसः विद्यन्ते, परन्तु येषां पदानां पृथक् २ दानं यथाविधि सम्भवं तत्कृतं, येन शब्दज्ञाने अर्थज्ञाने, गायनेऽपि सौविध्यं स्यात्। पदानां यथासाध्यं प्राचीन-काव्येऽपि व्याकरण-सिद्धं स्वरूपरक्षणं आवश्यकं, येन संस्कृतं श्रवणमात्रेण आगच्छेत्, यथा सर्वासां जीवितभाषाणां ज्ञानं सम्भ-वति श्रवणमात्रेण इति सिद्धान्तः। वेदोऽपि प्रथमं 'श्रुतिः' एव आसीत्। अनेन प्रकारेण सर्वेषां काव्यग्रन्थानां प्रकाशनं स्यात् सरलतया विश्वलाभाय।

## मुद्रकाणां प्रकाशकानां कृते एकः महत्वपूर्णः क्रान्तिकारिपरामर्शः

मुद्रणे सौविध्यं वर्णनातीतं आनयनाय इदं उचितं, यत् संस्कृतग्रन्थानां मुद्रणे शिरःरेखा न दीयेत। सर्वथा अनावश्यकं विलम्बकारि इदं कार्यं। केवलं घ, ख इति वर्णाः शिरःरेखासहिताः तिष्ठेयुः, येन ध, र, व वर्णानां विषये भ्रमः न स्यात्। मुद्रणालय-चालकैः प्रकाशकैश्च अस्मिन् परामर्शे गम्भीरतया विचारः कार्य्यः, तथा सर्वकारेण अपि, यतोहि सर्वकारः संस्कृतलिपौ हिन्द्यादि-ग्रन्थानां बहुप्रकाशनं करोति। लिपियन्त्रं 'टाइपराइटरः नाम' शिरः रेखां विनाऽपि भवेत्।

अधस्तात् कतिपयविषयेषु आवश्यकेषु विस्तृतरूपेण विचारः क्रियते अस्माभिः, येन सर्वं आवश्यकं ज्ञातं भवेत् विद्वद्भिः।

## अनावश्यक-अश्लील-अंशाः दूरी-करणीयाः

वस्तुतः उचितं तु इदं एव, यत् नवीन–लेखनशैल्यां गद्य-संस्कृत-ग्रन्थानां प्रकाशनेन सह, तेषां सर्वे अनावश्यकाः, अश्ली-लादि–अंशाः दूरीकृताः स्युः, येन अस्माकं साहित्यं निन्दितं न

स्यात्। अश्लील–अंशाः अपि विद्यन्ते यत्र तत्र, परन्तु अनावश्यकाः अंशाः तु सर्वत्र एव अवलोक्यन्ते। यदि एतेन नवीन-प्रकाशनेन सह, ग्रन्थानां 'सम्पादनं, संशोधनं' अपि स्यात, तदा वरं। यदि काऽपि भारतीयपण्डितसभा, कतिपयप्रधान-पंडिताः वा एकीभूय 'एतत् शोधकार्यं' कुर्युः, तदा शोभनं भवेत्। प्रायः द्विसहस्रवर्षेभ्यः तु अस्माकं संस्कृत-साहित्ये शोध-कार्यं जातं एव नहि। अतः 'भारतं' महाभारतं', 'रामायणं' महारामायणं इत्यादि जातं। 'क्षेपकाः' सम्मिश्रणरूपेण तु सर्वत्र एव प्राप्यन्ते, प्रायः सर्वेषु ग्रन्थेषु। येन केनाऽपि, यस्य हस्ते कोऽपि ग्रन्थः पतितः, तस्मिन् क्षेपकाः दत्ताः, ग्रन्थस्य तस्य अंगत्वेन', येन 'मिश्रणं' न ज्ञातं स्यात्। परन्तु ग्रन्थेषु अपि 'चौरकार्यं तु चौरकार्यं एव', ज्ञानं तु भवति एव, यत् अत्र अत्र मिश्रणं कृतं। यत् शोध-कार्यं अद्य पुण्यपत्तनादिनगरेषु चलति, तेन सरलतया ज्ञातुं शक्यते, यत् प्रायः सर्वेषु ग्रन्थेषु एतादृशं मिश्रणं विद्यते। एतादृशाः क्षेपकरूपाः अनावश्यक-अंशाः तु प्रायः सर्वत्र प्राप्यन्ते, परन्तु अश्लील-असभ्य-अंशाः अपि कदापि कदापि प्राप्यन्ते, यैः अस्माकं साहित्यं, सभ्यता, संस्कृतिः, भारतीयसमाजः च निन्दितः लज्जितः च भवति। अस्माभिः एतादृशाः अंशाः अपि उदाहरणरूपेण दास्यन्ते यथावसरं, परन्तु अयं विषयः तु पण्डितानां ज्ञाने विद्यते। यदि एतादृशं शोध-कार्यं इदानीं कर्त्तुं नहि शक्यते पण्डितैः, तदा न्यूनाति न्यूनं प्रकाशनं तु प्राचीन-ग्रन्थानां नवीनशैल्यां भवेत्, येन इदं ज्ञातं स्यात्, यत् अस्माकं ग्रन्थेषु किं किं विद्यते, आवश्यकं, अनावश्यकं, अश्लीलादिकं। अस्माकं अन्तिके



बहु–सामग्री विद्यते एतादृशी, परन्तु विस्तार–भयात् तत्सर्वं दातुं

नहि शक्यते, परन्तु 'स्थाली–पुलाक–न्यायेन' उदाहरणं तु दास्यते एव यथासमयं यथास्थानं च।

### तदा शोधकार्यं, सम्पादन-कार्यं च किं ?

शोध-कार्यं तु इदं एव, यत् संस्कृत-ग्रन्थेषु 'क्षेपकाः' कुत्र कुत्र विद्यन्ते, तथा कथं, कदा केन वा कृतं एतादृशं सम्मिश्रणं ? ग्रन्थ-लेखकेन वस्तुतः किं लिखितं ग्रन्थे, इत्येव प्रधानोद्देश्यं न्यूनातिन्यूनं इदानीं, संस्कृत-साहित्य-शोधकार्ये। यदि ग्रन्थस्य वह्वयः पाण्डु-लिपयः विद्यन्ते, तदा तासु सर्वासु का पाण्डु-लिपिः, वस्तुतः लेखकस्य, इत्यादि, शोध-कार्ये गण्यते सामान्यतया । परन्तु 'सम्पादन-कार्ये' भाषा-सुधारः प्रधानं उद्देश्यं भवति, येन ग्रन्थस्य भाषा युगानुकूला स्यात्। तत्र आवश्यकं संशोधनं सुधारः च क्रियते, तथा अश्लीलादि अंशाः, यदि लेखकस्य अपि स्युः, दूरी-क्रियन्ते। सम्पादन-कार्ये शोध-कार्यस्य अपि सामान्यतया समा-वेशः भवति, परन्तु शोध-कार्ये सम्पादनं अर्थात् भाषादिसुधारः प्रायः नहि क्रियते। यादृशी भाषा लेखकेन दीयते, सा एव तिष्ठेत् शोध-कार्ये। वस्तुतः शोध-कार्यं, सम्पादनकार्यं च सह एव चलति, तथा चलितुं शक्नोति। अत्र कोऽपि विरोधः नास्ति। ये महानु-भावाः आंग्लभाषाविदः, ते तु जानन्ति एव, यत् 'शैक्सपियर' इति जगद्-विख्यात-नाटककारस्य ग्रन्थेषु बहुशोध-सम्पादन-कार्यं जातं, येन तानि नाटकानि आधुनिकभाषारूपे नीतानि। यत्र तत्र भाषा-सुधारोऽपि प्रचुर-मात्रायां जातः। अस्मात् कारणात् 'शैक्सपियर' महाभागस्य 'नाटकानि संसारे उत्कृष्ट-साहित्यं' इति मन्यते अद्य। बहुकालपर्यंतं एतेषु नाटकेषु अन्येषु आंग्ल-ग्रन्थेषु अपि शोध-सम्पादनादि-कार्यं सञ्जातं, यत् आंग्लदेशीयैः महाविद्वद्भिः कृतं

स्यात्। अश्लील–अंशाः अपि विद्यन्ते यत्र तत्र, परन्तु अनावश्यकाः अंशाः तु सर्वत्र एव अवलोक्यन्ते। यदि एतेन नवीन-प्रकाशनेन सह, ग्रन्थानां 'सम्पादनं, संशोधनं' अपि स्यात, तदा वरं। यदि काऽपि भारतीयपण्डितसभा, कतिपयप्रधान-पंडिताः वा एकीभूय 'एतत् शोधकार्यं' कुर्युः, तदा शोभनं भवेत्। प्रायः द्विसहस्रवर्षेभ्यः तु अस्माकं संस्कृत-साहित्ये शोध-कार्यं जातं एव नहि। अतः 'भारतं' महाभारतं', 'रामायणं' महारामायणं इत्यादि जातं। 'क्षेपकाः' सम्मिश्रणरूपेण तु सर्वत्र एव प्राप्यन्ते, प्रायः सर्वेषु ग्रन्थेषु। येन केनाऽपि, यस्य हस्ते कोऽपि ग्रन्थः पतितः, तस्मिन् क्षेपकाः दत्ताः, ग्रन्थस्य तस्य अंगत्वेन', येन 'मिश्रणं' न ज्ञातं स्यात्। परन्तु ग्रन्थेषु अपि 'चौरकार्यं तु चौरकार्यं एव', ज्ञानं तु भवति एव, यत् अत्र अत्र मिश्रणं कृतं। यत् शोध-कार्यं अद्य पुण्यपत्तनादिनगरेषु चलति, तेन सरलतया ज्ञातुं शक्यते, यत् प्रायः सर्वेषु ग्रन्थेषु एतादृशं मिश्रणं विद्यते। एतादृशाः क्षेपकरूपाः अनावश्यक-अंशाः तु प्रायः सर्वत्र प्राप्यन्ते, परन्तु अश्लील-असभ्य-अंशाः अपि कदापि कदापि प्राप्यन्ते, यैः अस्माकं साहित्यं, सभ्यता, संस्कृतिः, भारतीयसमाजः च निन्दितः लज्जितः च भवति। अस्माभिः एतादृशाः अंशाः अपि उदाहरणरूपेण दास्यन्ते यथावसरं, परन्तु अयं विषयः तु पण्डितानां ज्ञाते विद्यते। यदि एतादृशं शोध-कार्यं इदानीं कर्त्तुं नहि शक्यते पण्डितैः, तदा न्यूनाति न्यूनं प्रकाशनं तु प्राचीन-ग्रन्थानां नवीन-शैल्यां भवेत्, येन इदं ज्ञातं स्यात्, यत् अस्माकं ग्रन्थेषु किं किं विद्यते, आवश्यकं, अनावश्यकं, अश्लीलादिकं। अस्माकं अन्तिके बहु–सामग्री विद्यते एतादृशी, परन्तु विस्तार–भयात् तत्सर्वं दातुं

नहि शक्यते, परन्तु 'स्थाली–पुलाक–न्यायेन' उदाहरणं तु दास्यते एव यथासमयं यथास्थानं च।

## तदा शोधकार्यं, सम्पादन-कार्यं च किं ?

शोध-कार्यं तु इदं एव, यत् संस्कृत-ग्रन्थेषु 'क्षेपकाः' कुत्र कुत्र विद्यन्ते, तथा कथं, कदा केन वा कृतं एतादृशं सम्मिश्रणं ? ग्रन्थ-लेखकेन वस्तुतः किं लिखितं ग्रन्थे, इत्येव प्रधानोद्देश्यं न्यूनातिन्यूनं इदानीं, संस्कृत-साहित्य-शोधकार्ये। यदि ग्रन्थस्य बह्वयः पाण्डु-लिपयः विद्यन्ते, तदा तासु सर्वासु का पाण्डु-लिपिः, वस्तुतः लेखकस्य, इत्यादि, शोध-कार्ये गण्यते सामान्यतया । परन्तु 'सम्पादन-कार्ये' भाषा-सुधारः प्रधानं उद्देश्यं भवति, येन ग्रन्थस्य भाषा युगानुकूला स्यात्। तत्र आवश्यकं संशोधनं सुधारः च क्रियते, तथा अश्लीलादि अंशाः, यदि लेखकस्य अपि स्युः, दूरी-क्रियन्ते। सम्पादन-कार्ये शोध-कार्यस्य अपि सामान्यतया समा-वेशः भवति, परन्तु शोध-कार्ये सम्पादनं अर्थात् भाषादिसुधारः प्रायः नहि क्रियते। यादृशी भाषा लेखकेन दीयते, सा एव तिष्ठेत् शोध-कार्ये। वस्तुतः शोध-कार्यं, सम्पादनकार्यं च सह एव चलति, तथा चलितुं शक्नोति। अत्र कोऽपि विरोधः नास्ति। ये महानु-भावाः आंग्लभाषाविदः, ते तु जानन्ति एव, यत् 'शैक्सपियर' इति जगद्-विख्यात-नाटककारस्य ग्रन्थेषु बहुशोध-सम्पादन-कार्यं जातं, येन तानि नाटकानि आधुनिकभाषारूपे नीतानि। यत्र तत्र भाषा-सुधारोऽपि प्रचुर-मात्रायां जातः। अस्मात् कारणात् 'शैक्सपियर' महाभागस्य 'नाटकानि संसारे उत्कृष्ट-साहित्यं' इति मन्यते अद्य। बहुकालपर्यंतं एतेषु नाटकेषु अन्येषु आंग्ल-ग्रन्थेषु अपि शोध-



सम्पादनादि-कार्यं सञ्जातं, यत् आंग्लदेशीयैः महाविद्वद्भिः कृतं

क्रियते च। अनेन शोधादिकार्येण नाटकानि 'विशुद्ध-स्वर्णं' जातानि। अस्माकं गद्य-पद्य-संस्कृत-ग्रन्थानां एतादृशः 'संस्कारः शोधः वा, आवश्यकः, येन तत्सर्वं 'उत्कृष्ट-साहित्यं जगतः' इति मन्येत। महाकविः कालिदासः, महानाटककारः, यः प्राधान्यं भजते संसारे, परन्तु तस्य अपि नाटकादि-महाग्रन्थेषु शोध-सम्पादनादि आवश्यकं कार्यं नहि क्रियते। एतस्य महानाटककारस्य जीवनवृत्तं अपि पूर्णं नास्ति।

वस्तुतः जीवितभाषासु शोधादि–कार्यं सदैव चलति, अन्यथा भाषा-साहित्यादेः कदाऽपि अभिवृद्धिः उन्नतिः न स्यात्। यावत् एतादृशं शोध-सम्पादनादि-कार्यं संस्कृतेऽपि नहि करिष्यते, तावत् संस्कृतभाषायाः साहित्यस्य च उन्नतिः असम्भवा स्यात्। महाश्चर्यस्य वार्ता, यत् अस्माभिः भारतीयैः संस्कृत-साहित्यात् अश्लील-क्षेपकादि-अंशाः अपि नहि दूरी-क्रियन्ते। संस्कृत-ग्रन्थेषु यत् अद्य प्राप्यते, तत्सर्वं प्रायः लेखकस्य नास्ति, तथा 'सर्वं स्वर्णं, अमृतं वा' नास्ति। तेषु सर्वेषु प्रायः 'विषं' अपि विद्यते। अतः 'विषस्य' क्षेपकादिरूपस्य दूरीकरणं नितान्तं आवश्यकं कार्यं। यदि सूक्ष्म-दृष्ट्या अवलोकितं स्यात्, तदा शोध-कार्यं, सम्पादन-कार्यं च एकं एव। शोधः सम्पादनं च इति शब्द-द्वये अर्थभेदोऽपि नास्ति। शब्द-द्वयस्य अर्थः 'साहित्यात् दोषाणां दूरी-करणं' इत्येव विद्यते। विविध-प्रकाराणां दोषाः भवितुं अर्हन्ति यथा क्षेपकादयः, भाषा-दोषाः, भाषायां आवश्यक–सुधारादयः, इति सर्वं आगच्छति एव। अतः शोध–कार्यें सम्पादन-कार्ये वा कोऽपि भेदः कर्त्तुं नहि शक्यते सूक्ष्म-दृष्ट्या।

## अन्तिमः संस्कृत-साहित्यस्य सुधारः



गद्य-पद्य-संस्कृतसाहित्यस्य अन्तिमः सुधारः अयं अपि

भवितुं अर्हति, यत् संस्कृतव्याकरणे यत्र तत्र यानि संशोधनानि सुधाराः वा विद्वद्भिः स्वीकृताः स्युः, तान् सुधारान् आधारीकृत्य साहित्यस्य प्रकाशनं स्यात्, येन सम्पूर्ण-प्राचीन-साहित्यं भाषादि-विचारेण युगानुसारि स्यात्। यथा यदि चतुर्लकाराः लट्, लृट्, लङ्, लिङ् (विध्यादिषु) रूपाः आधुनिकव्यावहारिक-संस्कृते सर्वैः स्वीकृताः स्युः, तथा द्विवचन-निस्सारणं अपि स्वीकृतं स्यात्, तथा अन्येऽपि आवश्यक-सुधाराः स्वीक्रियेरन् विद्वद्भिः, तदा सुधारानुसारि संस्कृत-साहित्यस्य प्रकाशनं भवेत्। धातवः तु ते एव तिष्ठेयुः, यदि चतुर्लकाराणां अपि प्रयोगः स्यात्, १० लकाराणां स्थाने। यदि द्विवचनस्य, सर्वथा अनावश्यकस्य निस्सारणं स्वीक्रियेत, तदा व्याकरणे एते अन्ये उपायाः विद्यन्ते, यत् द्विवचनस्य प्रयोजनं सिद्धं भवेत्। सर्वे विद्वांसः जानन्ति एव, यत् 'जनद्वयं' इत्यादि प्रयोगाः व्याकरण-सम्मताः, येन द्विवचनस्य सम्यक्तया कार्यं भवति। एतेन सुधार-द्वयेन प्रायः ४० लक्ष-पदानां न्यूनता क्रिया-संज्ञादिषु जायते। कीदृशः महान् लाभः, यः वर्णने न आगच्छति ? तदा क्रियासु, संज्ञासु केवलं एकवचनं बहुवचनं च तिष्ठेत्, तथा द्विवचनस्य कार्यं अन्यैः उपायैः पूर्ववत् स्यात्। क्रान्तकारी सरलोपयः अयं, यः सहसा संस्कृतं आधुनिकं व्यावहारिकं च करोति। तदा संस्कृतं एव देशस्य राष्ट्रादिभाषा स्यात् अविलम्बेन।

अयं तु संस्कृतज्ञस्य अधिकारः, यत् स केवलं चतुर्लकाराणां प्रयोगं कुर्यात्, तथा द्विवचनस्य प्रयोगं न कुर्यात्। अयं सुधारः संस्कृते शीघ्रं आगच्छेत् चेत्, तदा स्वतएव प्रचीन-संस्कृत-साहित्य-प्रकाशनं अस्मिन् रूपे स्यात्। अत्र का विचिकित्सा, का

विप्रतिपत्तिः ? अस्मिन् रूपे गद्य-पद्य-संस्कृत-साहित्यं चिरस्थायि स्यात्, यावत् सूर्यः च चन्द्रः च। अधः पद्य-संस्कृत-साहित्यस्य सम्बन्धे किं अपि विशेषरूपेण कथ्यते।

## संकृस्त 'पद्य' साहित्यं

मया पूर्वं निवेदितं, यत् गद्य-संस्कृत-साहित्यं तु अल्पं एव, पद्य-संस्कृत-साहित्यस्य अपेक्षया। अस्मिन् संबन्धे महा-महाध्यापक-पं० राज, पं० श्रीगोपालशास्त्री, सभापति, काशी पंडित सभा, महाभागाः, किं लिखन्ति, ध्यानपूर्वकं पठनीयं सर्वैं विद्वद्भिः। ते लिखन्ति एकस्मिन् पत्रे

'भागवतस्य पञ्चम-स्कन्धे पद्याभावः (पद्य-अभावः) सर्वाणि गद्यमयानि एव प्रबन्धानि। तच्च दण्डक-पद्यं कथ्यते। वर्णिक-मात्रिक-बन्धनैः मुक्तानि इत्यस्य उदाहरणं पञ्चमस्कन्धे'

अनेन कथनेन पूर्णतया सिद्ध्यति, यत्, पुराणकालेऽपि एतादृश्यः काव्य-रचनाः भवन्तिस्म, यासु पिंगल-शास्त्रस्य बन्धनं नास्ति। अतः काव्यस्य रचना 'निर्बन्धं' अर्थात् पिंगलशास्त्रबन्धन-रहिता भवतिस्म प्राचीनभारते, इति सिद्धं। वस्तुतः पिंगल-शास्त्रं 'सहायतार्थं' भवति। उत्कृष्टपद्यरचनायां उत्कृष्ट-भावः, पद-लालित्यादिगुणाः आवश्यकाः, पिंगलशास्त्रानुसारं सा रचना भवेत् न वा इति स्थितिः। कवौ यदि 'कवित्व-शक्तिः' विद्यते, तदा तस्य एव 'काव्यं' उत्कृष्टं स्यात्, पिंगलशास्त्रबन्धः तत्र भवेत् न वा। एतेषां प्राचीन-काव्यानां प्रकाशनं तु सरलं आधुनिकरूपेऽपि।

## पिंगल-शास्त्रस्य किं प्रयोजनं ?

यद्यपि विविध-पिंगल-शास्त्रेषु यत्र तत्र भिन्नता अवलोक्यते,

तथा किं काव्यं, इति विषयेऽपि भिन्न-भिन्न-परिभाषाः दीयन्ते,

तथापि पिंगल-शास्त्रस्य 'काव्ये' यथासाध्यं मर्यादा-संरक्षणाय उपयोगिता विद्यते। कवेः सहायतार्थं इदं शास्त्रं। शास्त्राणां भिन्नता-कारणात्, तथा स्वाभाविक-सहज-काव्य-मार्गे बाधकत्वात् शास्त्रस्य अक्षरशः पालनं प्रायः असम्भवं। अस्माकं कथनस्य पुष्टौ इदं एव 'अतर्क्यं प्रमाणं', यत् 'काव्य-ग्रन्थेषु' अक्षरशः कथित-नियमादि-पालनं नहि अवलोक्यते। प्रत्यक्षस्य किं प्रमाणं? यथा ऊर्णनाभितः तन्तुः स्वतएव निस्सरति, तथैव कविभ्यः स्वत एव 'काव्यं' बहिर् आगच्छति। तत्र पिंगलादि-बन्धनं कुत्र? बन्धनं एतादृशं भवेत् चेत्, तदा 'काव्यं' कदापि न सम्भवेत्, कदापि बाहिर् न आगच्छेत्। कवयः तु जन्मतः, स्वभावतः कवयः, ते कृत्रिमनियमैः विविध-बन्धनैः उत्कृष्ट-काव्यं निर्मातुं नहि शक्यन्ते। व्यवहारे इदं एव कथनं अक्षरशः सत्यं। काव्य-मर्म-विषये संक्षेप-निवेदनस्य किं अपि विशेष-प्रयोजनं, तत् इदं, यत् काव्यं पिंगल-शास्त्रबन्धनेन विनाऽपि भवति। एतादृशं काव्यं अस्माकं संस्कृत-काव्यग्रन्थेषु पूर्वतः एव विद्यते। दण्डकादि-काव्यं अस्य तथ्यस्य एकं ज्वलत्प्रमाणं। आधुनिक-कविभिः आधुनिक-रचनाः क्रियन्ते, यासु रचनासु प्राचीन-पिंगलशास्त्र-बन्धनं नास्ति। वस्तुतः तत्र किं अपि प्राचीनं, नवीनं वा बन्धनं नास्ति।

## तदा कीदृशं काव्य-लेखनं?

यदि पिंगल-नियमानां भङ्गः अवलोक्यते, तथा स्वेच्छानुसारं अपि काव्यं भवति, यत्र किं अपि बन्धनं नास्ति, तदा कथं न एतादृशं लेखनं काव्यानां स्यात्, येन पठने अर्थज्ञाने सौकर्यं



सम्पद्येत। केवलं एकः नियमः तु अवश्यमेव पालनीयः, यत् पठने

प्रवाहत्वं अबाधत्वं आगच्छेत्, तथा यथासाध्यं पदानि स्वरूपे पृथक् पृथक् तिष्ठेयुः ।

**अद्य मनु-स्मृतौ विद्यते यज्ञादयः न मांसेन विना इत्यादि :--**

यज्ञार्थं पशवः सृष्टाः स्वयं एव स्वयंभुवा ।
यज्ञस्य भूत्यै सर्वस्य, तस्मात् यज्ञे वधः अवधः ॥ ३९ ॥
यज्ञार्थं ब्राह्मणैः वध्याः प्रशस्ताः मृगपक्षिणः ।
भृत्यानां चैव वृत्यर्थं अगस्त्यः हि आचरत् पुरा ॥ २२ ॥
बभूवुः हि पुरोडाशाः भक्ष्याणां मृगपक्षिणां ।
पुराणेषु अपि यज्ञेषु ब्रह्मक्षत्रसवेषु च ॥ २३ ॥
प्रोक्षितं भक्षयेत् मांसं, ब्राह्मणानां च काम्यया ।
यथाविधि नियुक्तः तु, प्राणानां एव च अत्यये ॥ २७ ॥
प्राणस्य अन्यं इदं सर्वं, प्रजापतिः अकल्पयत् ।
स्थावरं जंगमं चैव, सर्वं प्राणस्य भोजनं ॥ २८ ॥
क्रीत्वा स्वयं वाऽपि उत्पाद्य, परोपकृत एव वा ।
देवान् पितृन् च अर्चयित्वा खादन् मांसं न दुष्यति ॥३२॥
असंस्कृतान् पशून् मन्त्रैः, न अद्यात् विप्रः कदाचन ।
मन्त्रैः तु संस्कृतान् अद्यात्, शाश्वतं विधिं आस्थितः ॥३६॥
ओषध्यः पशवः वृक्षाः तिर्यञ्चः पक्षिणः तथा ।
यज्ञार्थं निधनं प्राप्ताः, प्राप्नुवन्ति उत्सृतीः पुनः ॥४०॥
मधुपर्के च यज्ञे च पितृदैवतकर्मणि ॥
अत्र एव पशवः हिंस्याः, न अन्यत्र इति अब्रवीत् मनुः ॥४१॥
एषु अर्थेषु पशून् हिंसन्, वेदतत्त्वार्थवित् द्विजः ।
आत्मानं च पशुं चैव, गमयति उत्तमां गतिम् ॥४२॥
(५ अध्याय)

## श्राद्धे मधुपर्के च मांस-भक्षणं

नियुक्तः तु यथान्यायं, यः मांसं न अत्ति मानवः ।
स प्रेत्य पशुतां याति, संभवान् एकविंशतिम् ॥ ३५ ॥
(पंचमः अध्याय)

## मांसभक्षणेन पितॄणां अनन्तकालपर्यन्तं तृप्तिः

कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्याय एव कल्पन्ते, मुन्यन्नानि च सर्वशः ॥२७२॥
( मनु० अध्याय ३ )

## शूद्राणां कृते दण्डः

एकजातिः द्विजातीन् तु वाचा, दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयात् छेदं, जघन्यप्रभवः हि स ॥२७०॥
नामजातिग्रहं तु एषां, अभिद्रोहेण कुर्वतः ।
निक्षेप्यः अयोमयः शंकुः ज्वलन् आस्ये दशांगुलः ॥२७१॥
धर्मोपदेशं दर्पेण विप्राणां अस्य कुर्वतः ।
तप्तं आसेचयेत् तैलं, वक्त्रे श्रोत्रे च पार्थिवः ॥२७२॥
येन केनचित् अङ्गेन हिंस्यात चेत् श्रेष्ठं अन्त्यजः ।
छेत्तव्यं तत्तदेव अस्य, तत् मनोः अनुशासनम् ॥२७६॥
पाणिं उद्यम्य दण्डं वा, पाणिच्छेदनं अर्हति ।
पादेन प्रहरन् कोपात्, पाद-छेदनं अर्हति ॥२८०॥
केशेषु गृह्णतः हस्तौ छेदयेत् अविचारयन् ।
पादयोः दाढिकायां च ग्रीवायां वृषणेषु च ॥२८३॥
अवनिष्ठीवतः दर्पात्, द्वौ ओष्ठौ छेदयेत् नृपः ।

अवमूत्रयतः मेढ्रं, अवशर्धयतः गुदम् ॥२८२॥

सहासनं अभिप्रेप्सुः उत्कृष्टस्य अपकृष्टजः ।
कट्यां कृताङ्कः निर्वास्यः स्फिचं वा अस्य अवकर्तयेत् ॥२८१॥
(अध्यायः ८, मनु० )

के शूद्राः इति प्रश्नः ? किं अद्य इदं सर्वं कुकृत्यं कथित-दण्ड रूपं भवितुं अर्हति ? अहं तु मन्ये, सर्वे वेदधर्मावलम्बिनः अद्य शूद्राः अज्ञानिनः इव जाताः सन्ति वेद-ज्ञान-राहित्यात्, यतोहि वेद-ज्ञानेन एव द्विजत्वं सम्भवं । अन्यथा सर्वे 'एकजातयः' एव, इति अत्र मनु-स्मृति-प्रमाणं । दुःखं तु इदं एव, यत् 'दुष्टकार्यस्य कृतेऽपि' मनोः प्रमाणं, तस्य महात्मनः एव नाम गृह्यते, येन किं अपि एतादृशं लिखितं न वा ? यदि अद्य कथित-शूद्राः अन्त्यजाः 'वेदधर्मस्य त्यागं' कुर्वन्ति, तथा बौद्ध-मुसलमान-ईसाई-विधर्मिणः भवन्ति, तदा किं आश्चर्यं ? आश्चर्यं तु वस्तुतः इदं एव, यत अपमानितेऽपि, धर्माधिकारवंचितेऽपि ते धर्मे तिष्ठन्ति। अवश्यमेव इदं सर्वं 'क्षेपकः' वाममार्गिभिः, अस्माकं शत्रुभिः मनु-स्मृतौ लिखितं । अस्य सर्वस्य अविचारेण निष्कासनं विधेयं इति जाति-धर्म-राष्ट्र-दृष्ट्या आवश्यकं । वेदे एतादृशं कुत्र अपि नास्ति ।

विद्वांसः जानन्ति एव, यत् मनुस्मृति-याज्ञवल्क्यस्मृतिः इत्यादि स्मृतिषु 'दासता-प्रथा इत्यादि, तथा अन्याः दूषितवार्ताः' विद्यन्ते । तत्सर्वं दातुं नहि शक्यते । अस्माकं उद्देश्यं तु इदं एव, यत् प्रायः सर्वे संस्कृत-ग्रन्थाः, विशेषतया धर्म-ग्रन्थाः, 'संशोधनं, सम्पादनं च अर्हन्ति', यतोहि तेषु एतादृश्याः अपि वार्ताः विद्यन्ते, येन अस्माकं समाजः, राष्ट्रं, धर्मः च लोके निन्दितः भवति। दौर्भाग्यं हि एतत् अस्माकं, यत् 'ईश्वर-वेद-धर्म-मनु-याज्ञवल्क्ये-

त्यादि नाम्नि' अस्माभिः कुकृत्यं क्रियते। इदं सर्वं नहि शोभते, नहि स्थातुं शक्नोति, यदि वयं भारतोत्कर्षं धर्मोत्कर्षं च इच्छामः। संस्कृत-साहित्ये शल्य-चिकित्सा इदानीं, तथा प्रत्येकं २५ वर्षानन्तरं आवश्यकी, तदा भारतीयसमाजः उन्नतः स्यात्।

## तदा सूत्र-ग्रन्थानां किं स्यात् ?

अद्य तु वैज्ञानिकं युगं एव। सर्वाः सुविधाः मुद्राणादेः प्राप्यन्ते। अतः सूत्र-ग्रन्थाः न्यूनातिन्यूनं अनेन प्रकारेण प्रकाशिताः स्युः, येन पठने, तथा सरलतया अर्थज्ञाने आगच्छेयुः। सूत्राणां अपि यथासाध्यं पदच्छेदपूर्वकं लेखनं भवेत् वाक्येषु यथा।

## योग-दर्शनं

१—अथ योगानुशासनं।

२—योगः चित्त-वृत्ति-निरोधः ( इति भवति )

३—तदा द्रष्टुः स्वरूपे अवस्थानं ( सम्पद्यते )

४—वृत्तयः पंचतय्यः क्लिष्ट-अक्लिष्टाः इति ( भवन्ति )

५—प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः(पंचवृत्तयः भवन्ति)

## अष्टाध्यायी व्याकरणस्य लेखनं कथं स्यात् ?

अयं विषयः अत्यन्त-महत्वपूर्णः। सर्वासु भाषासु व्याकरणं आवश्यकं, विशेषतया संस्कृतभाषायां, तस्याः पूर्णत्वात्, वैज्ञानिकत्वात्, सर्वभाषाणां जननीत्वात्। सा एव अमरा भाषा। अतः विशेषसावधानतया अस्माभिः सर्वैः कार्यं करणीयं, येन संस्कृतभाषा मृता, मृतप्राया वा न स्यात् अस्माकं व्यवहार-अभावात्। भाष्यते इति भाषा भवति, न अन्यथा। ग्रन्थीया संस्कृतभाषा न 'भाषा' अद्य। इदं तथ्यं सर्वैः संस्कृतज्ञैः ज्ञातव्यं। परन्तु प्रथमं संस्कृत-

व्याकरणं सरली-करणीयं, येन संस्कृतभाषा सरला, भाषण-व्यवहार-योग्या च स्यात्।

## अष्टाध्यायी सूत्राणां लेखनविधिः

अस्माभि अत्र स्वमतं दीयते, परन्तु विद्वद्‌भिः कस्यांचित् सभायां एकीभूय अन्यः निश्चयोऽपि कर्त्तुं शक्यते, यः तेषां मते उपयोगी स्यात्। अस्माकं निवेदनं तु इदं एव, यत् संस्कृत-व्याकरणं सरलं स्यात्। 'व्याकरणं द्वादशवर्षैः श्रूयते' इति कथनात् तु प्रथमं १२ वर्षाणि यावत् व्याकरणं पठेत् कोऽपि, अनन्तरं साहित्यादिकं। परन्तु अद्य कोऽपि १२ वर्षाणि यावत् केवलं व्याकरणं पठितुं नहि शक्नोति। अयं मार्गः प्रायः असम्भवः इदानीं। साहित्येन सह व्याकरणस्य पठनं भवितुं अर्हति। संस्कृत-व्याकरणं यस्मिन् रूपे अद्य विद्यते, तद् रूपं तु अत्यन्तं जटिलं नियम-रूपेण सन्धिबद्धं एकं 'ऐन्द्र-जालं' इति सुविदितं।

वयं इच्छामः, यत् या लेखन-शैली, व्याकरण-सम्मता, अस्माभिः प्रयुज्यते, उत यादृशी 'संस्कृत-भवितव्यम्' इति पत्रेण प्रयुज्यते, सा एव लेखनशैली सर्वेषां संस्कृत-ग्रन्थानां, विशेषतया विद्यालय-महाविद्यालय-विश्वविद्यालयस्य पाठ्य-पुस्तकानां स्यात्, येन संस्कृतप्रसारः सरलः स्यात्। सा एव लेखन-शैली संस्कृत-व्याकरणस्य अपि भवेत्। यदि अष्टाध्यायी-सूत्राणां लेखनं विस्तार-पूर्वकं स्यात्, तथापि हानिः नास्ति, यतोहि, मूले तु 'पाणिनेः व्याकरणं, तस्य एव नियमाः तिष्ठेयुः। किं अपि अन्तरं आगच्छेत् एव नहि। केवलं सूत्राणां पठने तेषां अर्थज्ञाने सौविध्यं सम्पद्येत यथा—

"वृद्धिः", (इति संज्ञा) आ, ऐ, औ (वर्णानां भवति) १।१।१

'गुणः' ( इति संज्ञा) 'अ, ए, ओ' (वर्णानां भवति) ।१।१।२।।
आदि आदि ।

## व्याख्या

अस्माकं विचारे 'सूत्रदानस्य, पुनः पदच्छेदस्य' काऽपि आवश्यकता नास्ति। सूत्रस्य एव वाक्ये, वाक्येषु वा एतादृशः आवश्यकः विस्तारः क्रियेत, येन सूत्रार्थः स्वतएव स्पष्टः स्यात्। संज्ञादि-प्रकरणं अवश्यमेव देयं, येन भ्रमः न स्यात्। या व्याख्या सूत्रस्य कृता स्यात, सा आधुनिकलेखन-शैल्यां, आधुनिक-संस्कृत-भाषायां, संशोधनादि-सहितायां भवेत, येन पठनमात्रेण व्याकरण-नियमानां ज्ञानं स्यात्। यदि संस्कृतज्ञाः इच्छन्ति संस्कृत-हितं तदा इदं कार्यं आवश्यकं।

## भारतीयजनतायाः कर्त्तव्यं

भारतीय संस्कृतविद्वदभिः किं किं करणीयं, अस्मिन् सम्बन्धे तु अस्माभिः विस्तृतरूपेण लिखित गतेषु पृष्ठेषु यथास्थानं, यथावस्तरं। एकस्मिन् शब्दे भूयोऽपि कथ्यते, यत् तैः सर्वैः निःसंकोच दैनिकादिकार्येषु केवलं संस्कृतेन एव व्यवहारः कार्य्यः, येन संस्कृतं भूयोऽपि देशस्य मातृ-राष्ट्र-राज-शिक्षा-भाषा भवेत् पूर्ववत्, विश्वे च विश्वभाषा। 'निरन्तराभ्यासः निरन्तरव्यवहारः' एकमात्रसाधनं, येन अभीष्ट-सिद्धिः स्यात्। मातृवर्गः छात्रवर्गश्च विशेषरूपेण संस्कृतज्ञानेन अलङ्करणीयः। 'मूलमन्त्रः' अयं, यत् संस्कृतपदं तद्रूपे एव प्रयोक्तव्यं, यद्रूपं व्याकरणानुसारं भवति। वाक्यपदेषु संधिः संयोगश्च कदापि न कार्य्यः, येन पदरूपं मातृछात्रवर्गीय सुस्पष्टं स्यात्, तथा श्रवणमात्रेण संस्कृतज्ञानं भवेत्।



भारतीयजनतायाः इदं कर्त्तव्यं, यत् भारतीयशासनं प्रान्तीय-

शासनानि च आग्रहपूर्वकं निवेदनीयानि, यत् संस्कृतमेव राष्ट्र-राज-शिक्षाभाषा भवेत् समग्रभारते आंग्लभाषास्थाने १९६५ ई० वत्सरे, अनन्तरं वा। अन्यथा शासनानि नेतारश्च स्पष्टतया सूचनीयाः, यत् भारतीयजनता तेषां पक्षे मतं न दास्यति आगामिनिर्वाचनेषु। परन्तु संस्कृतज्ञैः आत्मोदाहरणेन, शिक्षया, प्रचारादिभिः जनता बोधनीया, यत् संस्कृतेन एव देशोद्धारः सम्भवः।

## केन्द्रीयप्रान्तीयशासनैः किं करणीयं ?

एतैः सर्वैः शासनैः न विस्मरणीयं, यत् एका भारतीया भाषा आवश्यकी, या विदेशीय-आंग्लभाषायाः स्थानं गृह्णीयात्, अन्यथा भारतैक्यं न तिष्ठेत्, तथा भारतं छिन्नं भिन्नं स्यात्। यस्मिन् देशे संस्कृत-सदृशी प्राचीनतमा, महोन्नता, भारतीयसंस्कृतेः, प्राचीन-भारतीयगौरवपूर्णेतिहासस्य, अनादिकालतः, आधारभूता भाषा, तस्य भारतस्य कुत्र भयं, कथं राष्ट्रभाषा-अन्वेषणं ? सा भारतीया भाषा तु पूर्वतः एव प्राप्यते दायरूपे। क्षेत्रीयाः भाषाः तिष्ठेयुः स्व-स्व-क्षेत्रे, तासां नाशः न अभीष्टं कस्याऽपि बुद्धिमतः, विशेषतया संस्कृतज्ञानां। शनैः शनैः स्वतएव सर्वाः क्षेत्रीयभाषाः प्रकृतिरूपां 'स्व-प्रकृति-रूपं संस्कृतं' आप्नुयुः। अस्मिन् विषये शङ्का नास्ति। संस्कृत-वैज्ञानिक-प्राविधिक-पारिभाषिक-शब्दाः सर्वासु क्षेत्रीय-भाषासु प्रयोक्तव्याः। सर्वासां क्षेत्रीयभाषाणां लिपि-भेदस्य दूरं गते, सर्वाः क्षेत्रीयभाषाः अन्ते 'संस्कृतं' भवेयुः, इति।

## शासकानां मानसिक-दासता एव विलम्ब-कारणं

अधिकांशशासकानां, मानसिक-दासता एव संस्कृतस्य 'राष्ट्र-भाषात्वे' एकमात्रबाधा। यस्मिन् दिने मानसिक-दासता इयं दूरी भवेत्, तस्मिन् दिने संस्कृतं 'राष्ट्रभाषा' स्यात्। एतादृशी स्थितिः

नास्ति, यत् शासका: 'संस्कृत-महत्वं, तस्य राष्ट्रिय-जीवने स्थानं' न जानन्ति, परन्तु 'आत्म-विश्वास:' नास्ति। अस्मात् कारणात् हिन्दी अपि परित्यजन्ति, संविधानेऽपि घोषणां कृत्वा। विदेशीय-वस्तुषु तेषां प्रेम, आस्था च। अत: तेषां हृदये संस्कृतभाषायै क स्थानं ?

## शासनस्य कर्तव्यं

केन्द्रीय-शासनस्य इदं एव कर्त्तव्यं, यत् भारतीय-संविधाने आवश्यकं संशोधनादिकं कृत्वा 'संस्कृत-भाषां भारतस्य राष्ट्र-राज-शिक्षा-भाषां, विदेशीय-आंग्ल भाषा-स्थाने' उद्घोषयेत्। यथा अद्य आंग्लभाषा भारतीयविधानानां, कार्यालयानां, न्यायालयानां, विज्ञान-प्राविधिकादि-शिक्षणालयानां, तथा विदेशीय-अन्त:राज्यीय-पत्रव्यवहारादिभाषा, तथैव तिष्ठेत् संस्कृतभाषा। संस्कृतभाषाया: तानि सर्वाणि कार्याणि उद्घोषितानि स्यु:, यानि अद्य आंग्ल-भाषया क्रियन्ते। विदेशीय-आंग्लभाषया सह प्रेम, भारतीय संस्कृतभाषया सह ईर्ष्या-द्वेष:, इयं कीदृशी 'भारतीयता, भारतप्रेम च' ? अस्माभि: निर्विवादं बहुभि: अतर्क्य-प्रमाणै: सिद्धी-कृतं, यत् संस्कृतेन एव भारतीयशासनं, भारतीयैक्यं, भारतीयसंस्कृत्यादिकं स्थातुं शक्नुवन्ति, एवमेव संस्कृतेन एव क्षेत्रीयभाषा-समस्या समा-धातुं शक्यते, न अन्यथा।

यदि सर्वथा मृता, विस्मृता च हेब्रूभाषा इजराइल-राज्ये राष्ट्रा-दिभाषा भवितुं अर्हति, तदा कथं न प्राचीनतमा, सर्वोन्नता भारतीया संस्कृतभाषा भारते ? अस्य उत्तरं किं अपि भवितुं न अर्हति, दुराग्रहं विहाय। यदि इदं कार्यं तात्कालिकं नहि क्रियते, तदा तु



मानसिक-दासताया:, अदूरदर्शिताया: पराकाष्ठा। वयं इच्छाम:,

यत् केन्द्रीयसर्वकार: सद्बुद्धिं आप्नुयात, तथा क्षेत्रीय-भाषा-नीति-कारणात् भारतनाशं न कुर्यात् ' अनेन निश्चय-मात्रेण क्षेत्रीयभाषा-गृह-युद्धं समाप्तं स्यात्, यत् भयङ्कररूपं इदानीं धारयति ।

(१) सर्वेषु भारतस्य विद्यालय–महाविद्यालय–विश्वविद्यालयेषु 'संस्कृतस्य पठनपाठनं अनिवार्यं' कृतं स्यात्, न्यूनातिन्यूनं १० वर्षाणां कृते सर्वप्रथमं ।

(२) संस्कृतस्य पठनपाठनं क्षेत्रीयभाषया सह चलेत् अर्थात् त्रिदिनानि यावत् संस्कृतं तथा त्रिदिनानि यावत् क्षेत्रीय-भाषा एकस्मिन् सप्ताहे विद्यालयादिषु ।

(३) सर्वेषां विद्यालयीय-महाविद्यालयीय-विश्वविद्यालयीय-पाठ्य-पुस्तकानां 'आधुनिक-लेखन-परिपाटीं' अवलम्ब्य प्रकाशनं स्यात् , या लेखनपरिपाटी 'आदर्श-रूपत्वेन' अस्मिन् ग्रन्थे दीयते, उत 'संस्कृत-भवितव्यम् नागपुरं' इति साप्ताहिक-संस्कृत-पत्रे अवलोक्यते ।

(४) एक: केन्द्रीयसंस्कृत-विभाग: स्थापनीय:, यस्मिन् संस्कृतस्य आधुनिकी–करणार्थं अन्वेषणं स्यात्, विज्ञान–अर्थशास्त्रादि-विषयेषु नवीनसाहित्यस्य निर्माणं स्यात्, तथा प्राचीन-साहित्य-विषयेऽपि अन्वेषणं स्यात् , तथा उपयोगि–ग्रन्थानां प्रकाशनादिकं अपि भवेत् ।

(५) दशवर्षं यावत् अर्थात् १६७० ई० वत्सरं यावत् विदेशीय-आंग्लभाषा भारतस्य 'राष्ट्र-राज-शिक्षाभाषा' पूर्ववत् तिष्ठेत् । अनन्तरं संस्कृतमेव आंग्लभाषाया: स्थानं गृह्णीयात् । अन्य-न्तरं सर्वप्रकारेण प्रोत्साहनं दीयेत, येन संस्कृतं जनभाषा

भवेत् पूर्ववत् । किं अपि असाध्यं नास्ति लोके, यदि 'निश्चयः' स्यात् । यत् 'अद्य असम्भवं इव' श्वः 'सम्भवं' स्यात् इति निश्चितं । 'असम्भवशब्दः' तु कदाचित् भारतीयानां संस्कृत-ज्ञानां शब्द-कोषे नास्ति ।

(६) प्राचीन-संस्कृत-साहित्यात् तत्सर्वं 'क्षेपकादिकं' निस्सारितं स्यात्, यत् दासता-काले अस्माकं शत्रुभिः दत्तं, तथा यत् स्पष्टतया अस्माकं संस्कृति-सभ्यता-इतिहासादि-विरोधि, तथा अश्लीलादिकं च ।

(७) सर्वप्रथमं एतादृशः प्रयत्नः कार्यः, येन सर्वासां क्षेत्रीयभाषाणां लिपिः संस्कृतलिपिः स्यात्, येन सर्वासां क्षेत्रीयभाषाणां पठन-पाठनं सरलं स्यात्, तथा सरलतया विचार-विनिमयः सम्भवेत् ।

(८) शनैः शनैः सर्वाः क्षेत्रीयभाषाः राष्ट्र-नीत्या 'मूलं संस्कृतं' इति दिशि नीताः स्युः ।

(९) अन्ते राष्ट्र-नीत्या, भारतीयानां 'राष्ट्रिय–सद्भावनया' केवलं 'संस्कृतं एव भारतस्य मातृ–राष्ट्र–राज–शिक्षा भाषा' तिष्ठेत् पूर्ववत् । भारतं अनेन मार्गेण 'संस्कृतमयं, स्वर्णमयं' भूत्वा 'भूयोऽपि जगद्-गुरुत्वं' आप्नुयात्, इति अस्माकं 'उद्देश्यं' ईश्वर-प्रेरितं ।

(१०) यदि संस्कृतं 'अनिवार्यं' सत्वरं कृतं स्यात् विद्यालयादिषु आधुनिक–रूपे, तदा अवश्यं 'भारत–त्राणं, सर्वदुखहरणं, अनन्तरं विश्वकल्याणं च स्यात् । संस्कृत–साहित्यस्य शोध-कार्यं अपि आवश्यकं, येन अस्माकं प्रमादात्, विदेशीय-



शासकानां कुचक्रात्, शत्रुत्वात्, यत् यत् अश्लीलं, असभ्यं,

अनर्गलं, विरुद्धं, भारतीयसंस्कृति-गौरवादिघातकं, क्षेपकादिरूपं संस्कृत-साहित्ये मिश्रितं, येन भारतीयाः लोके क्षुद्राः, निन्दिताः, असभ्याः, जांगलिकाः सिद्धाः भवन्ति, तत्सर्वं सत्वरं निष्कासनीयं, अविचारेण दूरीकरणीयं।

(११) सामान्य-सदाचार-शिक्षा, सम्प्रदायवादं विहाय, विद्यार्थिभ्यः दीयेत विद्यालयादिषु या प्रचुरमात्रायां संस्कृत-साहित्ये विद्यते। अनेन एव भारतीयविद्यार्थिषु सदाचारः, गुरुभक्तिः, चारित्र्यं, अनुशासनता च सम्पद्येत।

(१२) देश-भक्तेः शिक्षा अनिवार्या स्यात्, एवमेव सैन्य-व्यायामस्य, तथा योग-आसनानां, येन भारतीयविद्यार्थिनः स्वस्थाः, देशरक्षायै समर्थाः स्युः।

(१३) सदाचार-देशभक्तिः-योगासनादि-विषये नवीन-साहित्यस्य निर्माणं, सरलतमे, आधुनिके संस्कृते कृतं स्यात्, येन विद्यार्थिनः आरम्भतः सदाचारिणः देश-भक्ताः स्वस्थादयः भवेयुः।

## एकः भारतीयन्यायः आवश्यकः

(१४) यथा आंग्लभाषया अद्य सर्वः न्यायः भारते चलति, तथैव एका भारतीयभाषा आवश्यकी, यस्यां अयं न्यायः पूर्ववत् चलेत् भारते। अद्य तु सर्वं विधि-साहित्यं आंग्लभाषायां विद्यते, एवमेव सर्वाणि विधानानि, तथा अन्यानि प्रान्तीयविधानानि अपि। भारतीयन्यायस्य एका पद्धतिः अपि विद्यते, यां अवलम्ब्य देशे कार्यं भवति। अद्य सर्वं विधि-साहित्यं विधानानि, प्रान्तीय-उच्चन्यायालयानां, एवमेव सर्वोच्च-न्यायालयस्य आदर्श-निर्णयाः आंग्लभाषायां मिलन्ति, येन

सौविध्यं सम्पद्यते। अस्मात् कारणात् एकः वाकील-संघोऽपि भवितुं अर्हति, अस्ति च। यदि प्रान्ते प्रान्ते पृथक् पृथक् १५ देशीयभाषासु विधानानि तथा प्रान्तीय-विधि-साहित्यं स्यात् तथा प्रान्तीय-उच्चन्यायालय-पर्यन्तं न्यायः क्षेत्रीयभाषायां भवेत्, तदा भारतीयन्यायस्य, न्यायपद्धतेश्च का दशा भविष्यति, इति सर्वं गम्भीरतया विचारणीयं? तदा सर्वोच्च न्यायालयस्य कथं आवश्यकता, उपयोगिता च? सर्वोच्चन्यायालये का भारतीया भाषा स्थास्यति, यस्यां निर्णयाः दीयेरन्? किं १५ क्षेत्रीय-भाषासु विविध-प्रान्तीय-उच्च-न्यायालयेभ्यः 'निर्णयाः' आगमिष्यन्ति निर्णयार्थं? तदा सर्वोच्चन्यायालस्य कीदृशी दुःस्थितिः स्यात्?

(१५) ये संस्कृत-विद्यालय-महाविद्यालय-विश्वविद्यालयाः विद्यन्ते भारते, तेषु तु संस्कृतं, तथा सर्वे अन्ये विषयाः संस्कृत-माध्यमेन एव पाठिताः स्युः। केवलं साहित्यस्य पठन-पाठनं न स्यात्, येन संस्कृत-विद्यार्थिनः कूप-मण्डूकाः, लोक-व्यवहारे अकुशलाः न भवेयुः? विद्यार्थिनः सर्वेषु संस्कृतविद्यालयादिषु विदेशीय-आंग्लभाषावत् संस्कृतं वदेयुः, विशेषतया आध्यापकाः, येन प्रोत्साहनं आप्नुयुः विद्यार्थिनः।

(१६) केन्द्रीय-प्रान्तीय-सर्वकारैः, विशेषतया, तेषां शिक्षाविभागैः देशस्य सार्वजनिक-संस्कृतसंस्थाभिः नवीन-साहित्यनिर्माणं सर्वेषु विषयेषु करणीयं।

अनेन मार्गेण 'संस्कृत-मयं' भारतं 'वेद-मयं' भूत्वा भूयोऽपि देवता-तुल्यं स्यात् जगति, तथा जगत् अपि अन्ते वेद-मयं भूत्वा वेदद्वारेण ईश्वर-प्राप्तिं कुर्यात्, यत् मानव-जीवनस्य चरमो-

देश्यं। 'वेद:' कथं ईश्वरीयज्ञानं' तथा कथं तेन ईश्वरीय-ज्ञानेन ईश्वर-प्राप्ति:, इति सर्वं अस्य ग्रन्थस्य द्वितीयभागस्य 'वेद:' इति नामकस्य विषय: स्यात्। 'लोक-भाग:' समाप्त: ईश्वर कृपया, य: लोकाभ्युदयाय कल्पते। 'वेद-भाग:' नि:श्रेयसाय कल्पते, येन मानव: 'लोकं सुखमयं' कृत्वा 'आत्मानं, ईश्वरतत्वं च, ज्ञात्वा चिर-मुक्ति-सुखं आप्नुयात्। एवं भवेत्, इति अस्य भागस्य समाप्ति-समारोहे, ईश्वरं प्रति, अस्माकं-विनम्र-प्रार्थना।

॥ इतिशम् ॥

## 'लोक-भाग:' समाप्त:

# वेद-भागः

## सप्तमः अध्यायः

### प्रश्नः

### कः वेदान् उद्धरिष्यति ?

'विद्वांसः मत्सरग्रस्ताः, देववाणी मुमूर्षति,
शासनं दस्युकप्रायं, प्रज्ञा विलयतां गता ।
इत्थं व्यतिकरे सत्यं, कः वेदान् उद्धरिष्यति ?
शास्त्राणि विलयं यान्तु, दुष्कलिः प्रभूतां गतः ।
आत्मभरत्वं सर्वान् हि गुणान्, संच्छाद्य तिष्ठति,
हिरण्याक्षाः तपोहीनाः, दारिद्र्यपरिकर्षिताः ।
स्वाध्यायव्रतहीनाश्च, स्वाभिमानविहिंसकाः,
नरीनृत्यन्ति विप्राः, जाल्मद्वारेषु लोलुपाः ।

कैलासचन्द्र मिश्र एम० ए०,
अध्यक्ष, संस्कृतविभाग, आगरा कॉलिज, आगरा उ० प्र०

---

### उत्तरं

अयं ग्रन्थः भगवतः वेदान् उद्धरिष्यति, यथा 'कीदृशं संस्कृतम् ?' ग्रन्थः १६४६ ई० वत्सरे प्रकाशितः संस्कृतं उद्धृतवान् ।

गतैकादशवर्षेषु तेन ग्रन्थेन कदाचित् युगान्तरं आनीतं संस्कृत-संसारे, अत्र संस्कृतविद्वांसः प्रमाणं, तथा प्रत्यक्षं तत्कार्यं अपि, यत् देशे विदेशेषु भवति तदनुसारं, यस्य उल्लेखः अस्मिन् ग्रन्थे विद्यते यथास्थानं। तस्मिन् ग्रन्थे 'आधुनिकसंस्कृतस्य' दृढतमस्य, व्याकरण-सम्मतस्य, प्राचीनसंस्कृततः सम्बद्धस्य 'एका रूपरेखा दृढ़ाधारः च' दत्तोऽस्ति, यस्य उपरि भावि-विशाल संस्कृतभवनस्य रचना सम्भवेत्। तस्य कार्यस्य पूर्तिः अस्मिन् ग्रन्थे क्रियते, येन संस्कृतं विज्ञान-क्षमं युगानुसारि च स्यात्। अनेन आत्यन्तिकोद्धारः भवेत् देववाण्याः संस्कृतस्य। अत्र आधुनिकतमं संस्कृतं विद्यते, यत त्रिकालेषु तिष्ठेत्।

तथैव भगवतां वेदानां अपौरुषेयाणां, वैदिकसाहित्यस्य अपि, उद्धारः स्यात् अनेन ग्रन्थेन एकादशवर्षेषु। संस्कृतस्य वेदस्य च आत्यन्तिकोद्धाराय लेखकस्य जन्म, कदाचित् विशेषप्रयोजनपूर्णं अपि।

—लेखकः

---

## भगवान् वेदः कः ?

सर्वप्रथमं तु अयं एव प्रश्नः उपतिष्ठते, यत् वेदः कः ? अयं प्रश्नः स्वाभाविकः, यः केनाऽपि ज्ञानवता बुद्धिमता मानवेन कृतः स्यात्। परन्तु अस्य प्रश्नस्य उत्तरस्य पूर्वं, वयं पृच्छामः, यत् अस्य निखिलसृष्टेः ब्रह्माण्डस्य वा कः रचयिता ? द्वितीयः प्रश्नः अस्माकं अयं, यत् अस्य जगतः रचना कदा जाता ? यदा अस्माक प्रश्नद्वयस्य उत्तरं मिलेत, तदा वयं पूर्वप्रश्नस्य उत्तरं प्रदास्यामः, यत् वेदः कः ?

अस्माभिः शताध्यायेषु अनकर्यप्रमाणैः सिद्धं, यत् अस्य जगतः रचयिता कोऽपि मानवः भवितुं नहि अर्हति। केनाऽपि मानवेन

इदं कार्य कर्त्तुं नहि शक्यते, वैज्ञानिकेन अवैज्ञानिकेन वा। कीदृशोऽपि महान् भौतिकवैज्ञानिकः स्यात्, स सूर्यादेः निर्माणे रचने वा सर्वथा असमर्थः। जगत् अनन्तं विद्यते, यस्मिन् असंख्यसूर्यमण्डलानि-चन्द्रादीनि लोकलोकान्तराणि सन्ति, येषां गणनाऽपि असम्भवा मानवाय, क्व तेषां रचना ? एतादृशी विचित्र-व्यवस्थित-सूक्ष्मातिसूक्ष्मरचना विद्यते, यत् बुद्धौ अपि नहि समायाति, क्व तस्याः रचनं ? एकस्य वृक्षबीजस्य रचनाऽपि नहि कर्त्तुं शक्यते केनाऽपि वैज्ञानिकेन, तदा कथं स अस्य अनन्तनिखिलब्रह्माण्डस्य रचने समर्थः स्यात् ? अवलोकनीयं विचारणीयं च, यत् सूर्यः, यः अस्माकं पृथ्वीं प्रकाशं-तापादिना निवासयोग्यां करोति, स सूर्यः अस्माकं पृथ्वीतः प्रायः दशलक्षगुणः महाकायः, तथा प्रायः सप्तकोटिक्रोषदूरं विद्यते। तदा अनेकानि सूर्यमण्डलानि विद्यन्ते ब्रह्माण्डे, यस्य आद्यन्तं अपि ज्ञातुं नहि शक्नोति वैज्ञानिकः, अतः अस्य रचनायाः क्व प्रश्नः ? न केवलं एतत्, अपितु ज्ञातलोकाः, ये अस्माकं सूर्यमण्डलस्य अङ्गानि इव विद्यन्ते, तेषां अपि पूर्णज्ञानं नास्ति वैज्ञानिके। अज्ञात-विविध-सूर्यमण्डलानि, तेषां सम्बद्ध-लोकलोकान्तराणि अनन्तानि, येषां कदापि ज्ञानं न स्यात् वैज्ञानिके मानवे वा। किं कोऽपि मानवः वैज्ञानिकः वा सूर्यं, चन्द्रं, पृथ्वीं, जलं, वायुं, आकाशं, अग्निं, तारागणादिकं निर्मातुं शक्नोति ? उत्तरं मेलिष्यति कदापि नहि, अर्थात् केनाऽपि मानवेन वैज्ञानिकेन वा इयं अनन्तरचना कर्त्तुं नहि शक्यते।

तदा प्रश्नः अयं, यत् यदि केनाऽपि मानवेन वैज्ञानिकेन वा इयं रचना कर्त्तुं नहि शक्यते, तदा केन कृता इयं अनन्ता चित्र-विचित्रा सूक्ष्मातिसूक्ष्मा सुव्यवस्थिता रचना ? किं स्वतएव इयं

रचना जाता पञ्चभूतैः 'जडप्रकृतिः' नाम, उत वैज्ञानिकानां विद्युत्परमाणुभिः, उत एतैः अन्यैः जडतत्त्वैः पृथक् पृथक् मिश्रितैः वा कृता ? एतेषां जडतत्त्वानां अन्वेषणं, यैः इदं प्रत्यक्षजगत् निर्मितं विद्यते, इत्येव वैज्ञानिकानां पौरुषं। तथापि सर्वेषां तत्त्वानां अपि इदानीं यावत् अन्वेषणं नहि जायते। अनेन सिद्ध्यति मानवः कीदृशः अल्पज्ञः क्षुद्रः च जगतपेक्षया, परन्तु कीदृशः मिथ्या गर्वी, यत् विश्वनाशाय अद्य उद्यतः तिष्ठति अणु-विस्फोटकैः। इदं द्वितीयं पौरुषं मानवस्य, यत् लोकनाशः स्यात्, काऽपि चिन्ता नास्ति। अतः मानवः कीदृशः मूर्खोऽपि विद्यते।

तेन मानवेन कथितवैज्ञानिकेन राक्षसस्वभावयुक्तेन विचारोऽपि नहि क्रियते, यत् यदि तेन रचना नहि कर्त्तुं शक्यते, एतादृशी सुखमयी, आवश्यकी च मानवादिजीवनाय, तदा तस्याः न्यूनातिन्यूनं नाशः तु न क्रियेत। अन्वेषणं अनुसन्धानं आवश्यकमपि एतादृशं, येन सर्वेषां मानवानां जीवनं सुखमयं स्यात्, तथा सर्वेषां कृते भोजनं वस्त्रं गृहं च उपलब्धं स्यात्। लोकाभ्युदयः, न तु लोकनाशः मानवजीवनोद्देश्यं। तदा लोकनाशचिन्तास्थाने इयं चिन्ता मानवस्य उचिता, यत् स अन्वेषणं कुर्यात्, यत् अस्य जगतः रचयिता कः ? यस्य ईदृशी अनन्ता चित्रविचित्रा सूक्ष्मा व्यवस्था, प्रयोजनपूर्णा च रचना, तस्याः रचयिता कीदृशः विचित्रः अनन्तः सर्वज्ञः सर्वशक्तिमान् च स्यात् ? स रचयिता अवश्यमेव सर्वव्यापकः सर्वान्तर्यामी चैतन्यः स्यात्, यस्मिन् निर्मातरि इदं निखिलब्रह्माण्डं आमलकवत् तिष्ठति। ईन्सटनः वर्त्तमान-शताब्द्याः भौतिकवैज्ञानिकानां शिरोमणिः गुरुवत् आसीत्, यस्य भौतिकसिद्धान्तान् आधारीकृत्य विज्ञाने एतादृशी चमत्कारिप्रगतिः

क्रियते। स ईन्सटनः स्वमृत्योः पूर्वं कथितवान्, यत् काऽपि चैतन्या अनन्ता अदृष्टा शक्तिः तु विद्यते एव, यया एतादृशी चित्रविचित्र-रचना क्रियते, परन्तु अस्मासु तस्याः शक्तेः ज्ञानं नास्ति। इदं कथियित्वा तेन वैज्ञानिकाः परामृष्टाः, यत्ते जगतः नाशाय अणु-विस्फोटकादीनां निर्माणं न कुर्युः। वयं इमां चैतन्यां अनन्तां अदृष्टां जगद्निर्मात्रीं शक्तिं 'ईश्वरः' इति नाम कथयामः। वैज्ञानिकाः तु जानन्ति एव नहि इमां शक्तिं, अतः प्रायः नास्तिकाः जायन्ते, परन्तु वयं जानीमः एतां महाशक्तिं 'ईश्वरः नाम' वेदतः। सर्वप्रथमं प्रमाणं वेदशास्त्रं एव ईश्वरस्य सत्ता-शक्ति-रूप-गुणादीनां। 'वेदः' ईश्वरेण महत्या अनुकम्पया प्रत्येकं सर्गादौ देवतासकाशात् मानवस्य अभ्युदय-निःश्रेयससिद्धयर्थं दीयते, यदा तेन ईश्वरेण अस्य निखिल-ब्रह्माण्डस्य रचना क्रियते। येन ईश्वरेण 'मातापितावत्' मानवानां स्वामृतपुत्राणां शारीरिकजीवनयापनाय आत्यन्तिकसुखाय च सूर्य-चन्द्र-अग्नि-आकाश-वायु-जल-पृथ्वीत्यादयः दीयन्ते, किं तेन ईश्वरेण मानवानां आत्मिकोन्नतये 'ईश्वरीयज्ञानं वेदः नाम' नहि दास्यते, येन ते मानवाः 'स्वामृतमातरं पितरं च ईश्वरं नामकं आप्नुयुः चिरानन्दाय चिरमुक्तिसुखाय च। मुक्तिः अर्थात् ईश्वरप्राप्तिः मानव-जीवनस्य चरमोद्दश्यं इति ज्ञातव्यं सर्वैः मानवैः। यस्य ईश्वरस्य अनन्तरचनासु अदृष्टदृष्टासु अनन्तलोकलोकान्तररूपासु एकस्याः अपि सम्पूर्णज्ञानं नहि जायते मानवे, यथा वृक्षबीजस्य एवमेव प्रकृतेः कार्यजगतः आदिकारणस्य, तदा तस्य ईश्वरस्य जगन्निर्मातुः कथं पूर्णं ज्ञानं सम्भवेत् मानवे क्षुद्रजीवे मिथ्या गर्वान्विते इति ? अतः वेदस्य उत्पत्तिः, येन तं निर्मातारं निमित्तकारणं 'ईश्वरःनाम' तथा 'प्रकृतिं' उपादानकारणं जगतः, तथा 'आत्मानं' जानीयुः मानवाः

रचना जाता पञ्चभूतैः 'जडप्रकृतिः' नाम, उत वैज्ञानिकानां विद्यु-त्परमाणुभिः, उत एतैः अन्यैः जडतत्त्वैः पृथक् पृथक् मिश्रितैः वा कृता ? एतेषां जडतत्त्वानां अन्वेषणं, यैः इदं प्रत्यक्षजगत् निर्मितं विद्यते, इत्येव वैज्ञानिकानां पौरुषं। तथापि सर्वेषां तत्त्वानां अपि इदानीं यावत् अन्वेषणं नहि जायते। अनेन सिद्ध्यति मानवः कीदृशः अल्पज्ञः क्षुद्रः च जगतपेक्षया, परन्तु कीदृशः मिथ्या गर्वी, यत् विश्वनाशाय अद्य उद्यतः तिष्ठति अणु-विस्फोटकैः। इदं द्वितीयं पौरुषं मानवस्य, यत् लोकनाशः स्यात्, काऽपि चिन्ता नास्ति। अतः मानवः कीदृशः मूर्खोऽपि विद्यते।

तेन मानवेन कथितवैज्ञानिकेन राक्षसस्वभावयुक्तेन विचारोऽपि नहि क्रियते, यत् यदि तेन रचना नहि कर्त्तुं शक्यते, एतादृशी सुखमयी, आवश्यकी च मानवादिजीवनाय, तदा तस्याः न्यूनातिन्यूनं नाशः तु न क्रियेत। अन्वेषणं अनुसन्धानं आवश्यकमपि एतादृशं, येन सर्वेषां मानवानां जीवनं सुखमयं स्यात्, तथा सर्वेषां कृते भोजनं वस्त्रं गृहं च उपलब्धं स्यात्। लोकाभ्युदयः, न तु लोकनाशः मानवजीवनोद्देश्यं। तदा लोकनाशचिन्तास्थाने इयं चिन्ता मानवस्य उचिता, यत् स अन्वेषणं कुर्यात्, यत् अस्य जगतः रचयिता कः ? यस्य ईदृशी अनन्ता चित्रविचित्रा सूक्ष्मा व्यवस्था, प्रयोजनपूर्णा च रचना, तस्याः रचयिता कीदृशः विचित्रः अनन्तः सर्वज्ञः सर्वशक्तिमान् च स्यात् ? स रचयिता अवश्यमेव सर्वव्यापकः सर्वान्तर्यामी चैतन्यः स्यात्, यस्मिन् निर्मातरि इदं निखिलब्रह्माण्डं आमलकवत् तिष्ठति। ईन्सटनः वर्त्तमान-शताब्द्याः भौतिकवैज्ञानिकानां शिरोमणिः गुरुवत् आसीत्, यस्य भौतिक-सिद्धान्तान् आधारीकृत्य विज्ञाने एतादृशी चमत्कारिप्रगतिः

क्रियते । स ईन्सटनः स्वमृत्योः पूर्वं कथितवान्, यत् काऽपि चैतन्या अनन्ता अदृष्टा शक्तिः तु विद्यते एव, यया एतादृशी चित्रविचित्र-रचना क्रियते, परन्तु अस्मासु तस्याः शक्तेः ज्ञानं नास्ति । इदं कथयित्वा तेन वैज्ञानिकाः परामृष्टाः, यत्ते जगतः नाशाय अणु-विस्फोटकादीनां निर्माणं न कुर्युः । वयं इमां चैतन्यां अनन्तां अदृष्टां जगद्निर्मात्रीं शक्तिं 'ईश्वरः' इति नाम कथयामः । वैज्ञानिकाः तु जानन्ति एव नहि इमां शक्तिं, अतः प्रायः नास्तिकाः जायन्ते, परन्तु वयं जानीमः एतां महाशक्तिं 'ईश्वरः नाम' वेदतः । सर्वप्रथमं प्रमाणं वेदशास्त्रं एव ईश्वरस्य सत्ता-शक्ति-रूप-गुणादीनां । 'वेदः' ईश्वरेण महत्या अनुकम्पया प्रत्येकं सर्गादौ देवतासकाशात् मानवस्य अभ्युदय-निःश्रेयससिद्ध्यर्थं दीयते, यदा तेन ईश्वरेण अस्य निखिल-ब्रह्माण्डस्य रचना क्रियते । येन ईश्वरेण 'मातापितावत्' मानवानां स्वामृतपुत्राणां शारीरिकजीवनयापनाय आत्यन्तिकसुखाय च सूर्य-चन्द्र-अग्नि-आकाश-वायु-जल-पृथ्वीत्यादयः दीयन्ते, किं तेन ईश्वरेण मानवानां आत्मिकोन्नतये 'ईश्वरीयज्ञानं वेदः नाम' नहि दास्यते, येन ते मानवाः 'स्वामृतमातरं पितरं च ईश्वरं नामकं आप्नुयुः चिरानन्दाय चिरमुक्तिसुखाय च । मुक्तिः अर्थात् ईश्वरप्राप्तिः मानव-जीवनस्य चरमोद्देश्यं इति ज्ञातव्यं सर्वैः मानवैः । यस्य ईश्वरस्य अनन्तरचनासु अदृष्टदृष्टासु अनन्तलोकलोकान्तररूपासु एकस्याः अपि सम्पूर्णज्ञानं नहि जायते मानवे, यथा वृक्षबीजस्य एवमेव प्रकृतेः कार्यजगतः आदिकारणस्य, तदा तस्य ईश्वरस्य जगन्निर्मातुः कथं पूर्णं ज्ञानं सम्भवेत् मानवे क्षुद्रजीवे मिथ्या गर्वान्विते इति ? अतः देहस्य उत्पत्तिः, येन तं निर्मातारं निमित्तकारणं 'ईश्वरःनाम' तथा



'प्रकृतिं' उपादानकारणं जगतः, तथा 'आत्मानं' जानीयुः मानवाः

तस्य अमृतपुत्राः। परमेश्वरं परमात्मानं विहाय कः अन्यः समर्थः स्यात् 'परमात्म-आत्म-प्रकृतितत्त्ववर्णने ?' अतएव परमात्मना ईश्वरेण 'ओ३म् इति नैजनाम' एतेषां सर्वेषां तत्त्वानां ईश्वरप्रमुखतः वर्णनं स्वतएव बीजरूपे वेदे क्रियते। इदं ईश्वरीयज्ञानं विज्ञानं च सृष्ट्यारम्भकाले एव स्यात् इति स्पष्टं, यस्मिन् काले सूर्यादयः निर्मिताः तिष्ठन्ति, तथा पृथ्वीलोके, अन्येषु लोकेषु च, यत्र मानवसृष्टिः भवितुं अर्हति, तेन एव ईश्वरेण अमैथुनी सर्वा जीवसृष्टिः मानवप्रमुखतः कृता विद्यते। यथा ईश्वरेण सर्वज्ञेन सर्वव्यापकेन अनन्तेन सर्वशक्तिसम्पन्नेन पूर्णेन सूर्यादयः एकवारं निर्मीयन्ते, तथैव 'ईश्वरीज्ञानं वेदः नाम' एकबारं एव दीयते। अस्मात् 'वेदः वेदधर्मः वा' मानवधर्मः' न कोऽपि अन्यः। अन्ये तु सम्प्रदायाः एव, कथित-ईश्वरीयधर्माः, आचार्युः प्रचालिताः प्रायः गतत्रिसहस्रवर्षेषु, यदा महाभारतकालानन्तरं वेदधर्मस्य, देववाण्याः च पतनं जातं, भारतीयानां वेदधर्मावलम्बिनां स्वतएव पतनकारणात्, यस्य पतनस्य इतिहासः गताध्यायेषु विशदरूपेण विद्यते। परन्तु सम्प्रदायाः अपि कस्यचित् वेदतथ्यस्य प्रतिपादनं कुर्वन्ति आंशिकरूपेण, यत् तथ्यं अनुभूतं आचार्यैः स्व-स्व-काले, उत तत्र मानवहितं विचार्य नैजमार्गाः प्रचालिताः लोके। तथापि तावन्मात्रं कोऽपि सम्प्रदायः सत्यः यावन्मात्रं स वेदानुकूलः। ईश्वरस्य पूर्णत्वात् निर्भ्रान्तित्वात् तस्य ईश्वरीय-विधानं वेदः नाम'. तु एकवारं एव मिलेत् सृष्ट्यादौ, यदि तेन ईश्वरेण किं अपि विधानं वेदधर्मशास्त्रं नाम दीयेत। अस्माभिः अतर्क्यप्रमाणैः सिद्धीकृतं, यत् तेन ईश्वरेण जगन्निर्मात्रा सृष्ट्यारम्भे 'वेदज्ञानं' दीयते।



परन्तु 'तत् ईश्वरीयज्ञानं वेदः नाम' कस्यांचित् भाषायां एव

स्यात्। भाषया विना कुत्र इदं ज्ञानं तिष्ठेत् मानवेषु ? अतः स ईश्वरः स्वानुकम्पया दयया 'तत् नैजज्ञानं निर्भ्रान्तं वेदः नाम वेदभाषायां' ददाति देवतानां सकाशात्। अतः वयं कथयामः, यत् ईश्वरः एव भाषायाः अपि आदिस्रोतः, यथा ईश्वरीयज्ञानस्य वेदस्य स एव आदिकारणं। अनन्तरं वेदभाषातः संस्कृतं, तथा संस्कृततः अन्याः सर्वाः भाषाः निस्सरन्तिः लोके। एकस्मिन् शब्दे यथा ऊर्णनाभितः स्वभावतः तन्तुः निस्सरति, तथैव ईश्वरतः स्वभावतः निखिलब्रह्माण्डं स्वकारणप्रकृतिसहितं, वेदज्ञानं वेदभाषामयं सर्गादौ निस्सरति मानवस्य आत्यन्तिक-शारीरिक-आत्मिक-सुखाय। अयं एव अन्तिमः शब्दः ज्ञानविज्ञानस्य। परन्तु प्रकृतिः नित्या यथा आत्मा नित्यः ईश्वरः च।

## तदा कियत्प्राचीनः वेदः ?

वेदः एतावान् प्राचीनः यावान् अयं सर्गः अर्थात् सृष्टिः। सृष्टि-सम्वत्सरः अयं अर्थात् १,६७,३६,४६०६० वर्षात्मकः। प्रायः विंशति-अर्वुद-वर्षाणि व्यतीतानि, यदा इयं सृष्टिः उत्पन्नीभूता। अयं आर्यसम्वत्सरोऽपि कथ्यते. यतोहि आर्य्यैः, देवताभिः, वेदज्ञैः यैः 'ईश्वरीयज्ञानं वेदः नाम' प्राप्तं, तस्मात् दिनात् एव एकैकं दिनं गणितं, तथैव अद्यपर्यन्तं तेषां सन्ततिभिः। परन्तु इदं ईश्वरीयज्ञानं वेदः नाम न केवलं भारतीयानां सम्पत्तिः, अपितु सर्वेषां मानवानां। अतः वेदधर्मः लोकधर्मः विश्वधर्मश्च। यथा सूर्यः, चन्द्रः, वायुः, जलेत्यादीनि सर्वाणि वस्तूनि, ईश्वर-निर्मितानि, सर्वेषां मानवानां विद्यन्ते, तथैव वेदोऽपि। यदा यदा मानवः मानवसमाजः वा इमानि ईश्वर-प्रदत्त-वस्तूनि मिथ्या गर्वेण, नास्तिकभावेन, अन्यायेन च अन्यस्मै मानवाय समाजाय वा वारयति,

तदा तदा युद्धादयः महानर्थाः लोके जायन्ते। भगवता वेदेन स्वत एव आदेशः दीयते यत्

'कृण्वन्तः विश्वं आर्य्यं'

अर्थात् अयं वेदधर्मः सर्वेषां विश्वमानवानां कल्याणाय विद्यते, अतएव सर्वे मानवाः वेदधर्मे आनीताः स्युः, येन ते 'आर्य्याः' श्रेष्ठाः, सज्जनाः, कर्त्तव्यपरायणाः, परस्परं भ्रातरः इव भवेयुः। यस्मात् दिनात् इदं कार्यं परित्यक्तं भारतीय आर्य्यैः, तस्मात् दिनात् तेषां पतनादिकं प्रारब्धं। अनन्तकालपर्यन्तं विश्वं वेदधर्मावलम्बि आसीत्, तथा कोऽपि मानवप्रचालितः सम्प्रदायः नासीत्, इमं ईश्वर–प्रदत्त–धर्मं विहाय लोके। सर्वस्मिन् लोके भारतीयऋषयः मुनयः वेदधर्मप्रचारार्थं गच्छन्तिस्म ईश्वरस्य आदेशं शिरोधार्यं। तदा वेदः एव एकः धर्मग्रन्थः आसीत्।

## सर्वप्रथमं वेदः 'श्रुतिः' 'प्रतृणरूपं' च

ईश्वरीयज्ञानं अर्थात् वेदः तु एकः एव विद्यते। परन्तु यासां चतुःदेवतानां सकाशात् वेदस्य प्रादुर्भावः जातः, ताभिः अयं वेदः चतुःभागेषु 'ऋक्, यजुः, साम, अथर्व' इति नामसु प्रदत्तः 'ज्ञान, विज्ञान, उपासना, कर्म' इति विषयान् आधारीकृत्य पृथक् पृथक् प्रामुख्येन। अस्य प्रमाणं इदं, यत् ये मन्त्राः ऋग्वेदे विद्यन्ते, प्रायः तेषां एव विनियोगः, विज्ञानरूपे यजुर्वेद', उपासनारूपे, गानयुक्ते सामवेदे, तथा कर्मरूपे अथर्ववेदे जायते कतिपयान् मन्त्रान् विहाय अन्येषु त्रिवेदेषु। परन्तु प्रायः समग्रवेदः ऋग्वेदे कथं ? इति प्रश्नः भवितुं अर्हति। अस्य उत्तरं इदं, यत् सर्वे विषयाः 'ज्ञान, विज्ञान, उपासना, कर्मरूपाः' परस्परं सम्बद्धाः अन्योन्याश्रिताः सम-न्विताः च। अस्माभिः 'प्रामुख्येन' इति पदस्य प्रयोगः क्रियते, येन

सुस्पष्टं भवति सर्वेषु वेदमन्त्रेषु अन्योन्याश्रयभावः। यदा अस्माभिः कथ्यते, यत् प्रामुख्येन ऋग्वेदे ज्ञानं दीयते, तदा अस्य अयं अर्थः नास्ति, यत् ऋग्मन्त्रेषु 'विज्ञान, उपासना, कर्म' नास्ति। यदि इदं न स्यात्, तदा कथं विनियोगः स्यात् तेषां एव मन्त्राणां अन्येषु वेदविभागेषु। चतुःमुखः ऋग्वेदमन्त्रः, यः ऋग्वेदे प्रामुख्येन 'ज्ञानं' तथा गौणरूपेण 'विज्ञानं, उपासनां, कर्म' प्रकटीकरोति। परन्तु यत् 'गौणं' ऋग्वेदे, तत् 'प्रमुखं' प्रधानं च भवति अन्येषु वेदेषु तत्तद्विषयं अवलम्ब्य। यदि यजुर्वेदे 'विज्ञानं' प्रामुख्यं भजते, तदा 'ज्ञानं, उपासना, कर्म' गौणत्वं भजन्ते, तथैव अन्येषु वेदेषु अपि स्थितिः विद्यते। प्रथमं 'ज्ञानं' आवश्यकं 'परमात्म-आत्म-प्रकृति-नित्यतत्त्वानां' स्वतएव ईश्वरेण वर्णितानां वेदे स्वानुकम्पया। अनन्तरं तस्य 'ऋग्वेदज्ञानस्य' 'यज्ञक्रियया विज्ञानरूपे प्रयोगः यजुर्वेदे' विद्यते, तथैव 'उपासना गानरूपे सामवेदे' तथा 'कर्म कामरूपे अथर्ववेदे' विद्यते, येन एतेषां सर्वेषां वेदानां 'समन्वयेन' परमपुरुषार्थानां 'धर्म-अर्थ-काम-मोक्षाणां' सम्प्राप्तिः स्यात्, मानवजीवनस्य चरमोद्देश्यरूपे। सर्वाः सत्यविद्याः वेदतः वीजरूपेण निस्सरन्ति, यासां शाखा-प्रशाखाः सर्वं लोकं आच्छादयन्ति अभ्युदय-निःश्रेयससिद्ध्यर्थं। इयं एव ईश्वरीयव्यवस्था लोके यज्ञरूपा, अतः

तस्मात् यज्ञात् सर्वाहुतः ऋचः सामानि जज्ञिरे,
छंदांसि जज्ञिरे तस्मात्, यजुः तस्मात् अजायत।
एतावान् अस्य महिमा, ज्यायान् च पुरुषः,
पादः अस्य विश्वा भूतानि, त्रिपात् अस्य अमृतं दिवि। (यजु०)

इयं निखिलब्रह्माण्डरचना स्वतएव ईश्वरस्य 'एकः महत्तमः यज्ञः' यस्य स एव होता यजमानः च। अयं महायज्ञः तेन ईश्वरेण सर्गे सर्गे जीवमात्रस्य, विशेषतया अमृतपुत्राणां मानवानां कल्याणकामनया क्रियते। परन्तु स मानवः अल्पज्ञः मिथ्या गर्वसमन्वितः 'स्वधर्मपितरं मातरं च ईश्वरं' सर्वथा विस्मरति, तस्य 'अस्तित्त्वं' अपि नहि स्वीकरोति गर्वजनित-अज्ञानात्, तथा नास्तिक-शिरोमणिः चारवाकवत् भणति यथा

यावत् जीवेत् सुखं जीवेत्, ऋणं कृत्वा घृतं पिवेत्,
भस्मीभूतस्य देहस्य पुनरागमनं कुतः।

अतः संसारसागरात् पापपुण्यमयात् जीवनमरणयुक्तात् आत्मजनित-अज्ञानान्धकारकारणात्, कदापि तरति एव नहि, ईश्वर-वेद-वेदभाषा-साहाय्यराहित्यात् नौकारूपत्वात्। 'वेदः' तु 'तरणी'दत्ता एव ईश्वरेण सर्गादौ, येन केनाऽपि जीवेन सह अन्यायः न स्यात्। यदि ईश्वरीयविधानं अवतरेत् लोके समये-समये इच्छानुसारं, यथा सम्प्रदायवादिभिः ईसायि-मुस्लिमादिभिः कथ्यते स्वसम्प्रदायिग्रन्थानां विषये, तदा तु पूर्ववर्त्तिभिः सहमहा-अन्यायः स्यात्। गत-त्रिचतुःसहस्रवर्षेषु इमे सर्वे सम्प्रदायाः प्रादुर्भूताः सन्ति। सम्प्रदायानां परस्परं विरोधिनां सम्प्रदायग्रन्थाः कथं ईश्वरीयधर्मग्रन्थाः' भवेयुः इति स्पष्टं। तथापि सम्प्रदायवादिभिः सर्वैः इदं कथ्यते, यत् 'तेषां सम्प्रदायि-ग्रन्थाः ईश्वरीयधर्मग्रन्थाः' इति विचित्रा स्थितिः। इमे 'सम्प्रदायिग्रन्थाः' केवलं 'स्वानुयायिनां कृते स्वर्गः, अन्येषां कृते नरकः, इति उद्घोषयन्ति, तथा विविधसम्प्रदायानां 'भिन्नभिन्नस्वर्गाः नरकाः च विद्यन्ते। यदि एकः ईश्वरः, एकः तस्य ईश्वरस्य स्वर्गः नरकः च, तदा कथं

भिन्नता? सारांशः तु अयं एव,यत् वस्तुतः विविध-आचार्य्याणां प्रचा-लित-विविधसम्प्रदायानां प्रचारः प्रसारश्च क्रियते तेषां आचार्य्याणां अनुयायिभिः। बहवः आचार्य्याः तु 'स्वतएव ईश्वरः'इति मताः तेषां अनुयायिभिः यथा ईसायिसम्प्रदायिभिः। ते ईसायिनः कथयन्ति, यत् 'ईसा स्वतएव ईश्वरः'। परन्तु 'वेदे' एतादृशी स्थितिः नास्ति। तत्र तु केवलं एकः एव ईश्वरः, तस्य एकः एव वेदः सृष्टादौ दत्तः, सर्वेषां मानवानां कल्याणाय भेदभावराहित्येन। वेदस्य कर्त्ता कोऽपि मानवः नास्ति, अपितु स्वतएव ईश्वरः। इदं 'वेदज्ञानं, ईश्वरे नित्यं' तिष्ठति, तथा सर्गे सर्गे तस्मिन् रूपे एव मिलति मानवान्। अत-एव भूयोऽपि सर्वे मानवाः वेदमार्गात् भ्रष्टीभूताः 'विश्ववेदधर्मे, ईश्वरप्रदत्ते देवतासकाशात्' आगच्छेयुः, यथा महाभारतात् प्राक् स्थितिः आसीत्। 'वेदः, वेदधर्मः, ईश्वरः च' न केवलं भारतीयानां सम्पत्तिः, अपितु सर्वेषां मानवानां समानरूपेण। 'वेदः, वेदभाषा' लोके तिष्ठेत्, भारते तिष्ठेत् न वा तेषां प्रमादात् वेद-संस्कृत-अज्ञा-नात्, विशेषतया स्वधर्मावलम्बिषु मातृषु वेदादेः पंठनपाठनवार-णात् यथा।

'स्त्री-शूद्र-द्विजबन्धूनां, त्रयी न श्रुतिगोचरा' इति

एतेषु सर्वेषु वेदवारणात् घोर न्यायात्, तेऽपि कथित-द्विजाः सर्वथा वेदज्ञानविरहिताः जाताः, दासतादिपाशे निवद्धाः, येन विदेशीय आक्रामकाः शासकाश्च तेषां उपरि घोरतमं अन्यायं कृतवन्तः। अद्य 'स्वातन्त्र्य–सुदिनं' आगतं अस्ति ईश्वरकृपया भारतीयानां, अतः स्वपापस्य प्रायश्चित्तं तु करणीयं एव। अद्य तु सर्वेषां मानवानां 'जन्मसिद्धधिकारः' उद्घोषितः स्यात् 'वेदे, ईश्वरस्य ज्ञाने इति। विशेषतया भारतीयैः इदं वेदज्ञानं मातृवर्गे

संस्थापनीयं, येन तत्र सुरक्षितं भूत्वा मातॄणां दुग्धपानेन सह भारतीयान् मिलेत्। यत् ज्ञानं मातॄणां सकाशात् मिलति, तदेव 'स्थायि, लाभकारि च' भवति। अस्मात् कारणात् मातृवर्गे संस्कृतज्ञानं वेदज्ञानेन सह नितान्तं आवश्यकं, येन भूयोऽपि संस्कृतं मातॄणां भाषा भूत्वा मातृभाषा स्यात् भारतीयानां। अयं स्त्री-मातृवर्गेण सहन्यायः, ताः प्रति अस्माकं पापानां प्रायश्चित्तं स्यात्। 'द्विजबन्धुः' अस्य पदस्य अर्थः भवति, 'द्विजानां वेदज्ञानविरहितः सम्बन्धी, कुले उत्पन्नः वा पुत्रादिः, येन ब्रह्मचर्याश्रमः न पालितः, न वेदः पठितः। परन्तु किं अद्य कथित-द्विजाः स्वत एव वेदज्ञातारः विद्यन्ते ? अतः क्व तेषां 'द्विजत्वं', तथा तस्य अभावे क्व द्विजबन्धुः ? 'शूद्र-शब्दस्य' तु अर्थं जानन्ति एव नहि कथितवेदधर्मावलम्बिनः ? सर्वप्रथमं तु तान् प्रति अयं प्रश्नः। यदि ते 'वेदं' नहि जानन्ति, तदा कथं ते 'वेदधर्मावलम्बिनः ? द्वितीयं तैः विचारणीयं, यत् शूद्रः कः ? मनुस्मृतौ विद्यते यत्

'यः न अधीत्य द्विजः वेदः अन्यत्र कुरुते श्रमं,
स जीवन् एव 'शूद्रत्वं, आशु गच्छति सान्वयः'।

(मनु० अध्या० २, श्लो० १६८)

अतः 'शूद्रः' शब्दस्य अर्थः भवति 'वेदज्ञानविरहितः' इति। अयं एव शास्त्रीयविचारः 'शूद्रत्व-विषये' विद्यते। अतः सहजतया स्पष्टं स्यात्, यत् वयं सर्वे कथित-वेदधर्मावलम्बिनः 'शूद्राः सान्वयाः अर्थात् पुत्रपौत्रादि-सहिताः' वेदज्ञानस्य सर्वथा अभावात्। अतः केषां कृते वेदपठनपाठनं वारणं ? यदा वयं स्वतएव 'शूद्राः सान्वयाः' तदा किं आत्मनः कृते वेदपठनपाठनवारयिता ? शूद्रः न कोऽपि राजमार्गाणां मार्जनकर्त्ता, न कोऽपि शौचालयानां

शुद्धाकर्त्ता उत सेवकवर्गः, अपितु शास्त्रदृष्टौ स एव शूद्रः, यः ब्रह्मचर्याश्रमे वसित्वा २५ वर्षाणि यावत् वेदाध्ययनं नहि करोति गुरुमुखात्। परन्तु ब्रह्मचर्यं तु कुत्र अपि पालयितुं शक्यते ग्रामे, उपनगरे, नगरे वा, तथा वेदः पठितुं शक्यते गुरुमुखात् अद्य विद्यालय-महाविद्यालय-विश्वविद्यालयेषु। सारः तु अयं एव, यत् वेदः पठितः स्यात् वेदधर्मावलम्बिभिः कुत्र अपि कस्यां अपि दशायां गुरुमुखात्। स्थानादिपरिवर्त्तनं तु परिस्थित्यनुसारं भवितुं अर्हति, परन्तु वेदज्ञानं आवश्यकं। यदि प्राचीनभारते वनेषु गुरुकुलानि ऋषिकुलानि आसन्, तदा अद्य वर्त्तमान-महाविद्यालयादयः गुरुकुलानि इव भवितुं अर्हन्ति। येषां अयं आग्रहः यत् केवलं वनेषु गुरुकुलानि ऋषिकुलानि स्युः, ते इदं कार्यं अपि कुर्युः कः विवादः ? परन्तु गुरु-ऋषिकुलानि नहि विद्यन्ते अस्माकं दोषात्, उत परिस्थितिभेदात्, अतः वयं 'वेदं' अपि नहि पठिष्यामः इति भवितुं नहि अर्हति, अन्यथा वयं एव 'शूद्राः', इत्येव अस्माकं सर्वेषां शास्त्रीयसंज्ञा। अन्ते इदं सिद्धं, यत् वयं अपि 'शूद्राः वेदज्ञानविरहिताः', यथा कथित-हरिजनादयः अन्यायात् वेदज्ञानसम्पादने वारिताः। परन्तु ईश्वरः न्यायकारी, अतः वयं स्वतएव 'शूद्राः वेदज्ञानविरहिताः विदेशीयानां दासाः सेवकाः चाटुकाराः जाताः' येन सर्वं प्राचीनभारतगौरवं नष्टीभूतं। अतः अयं डिंडिमघोषः स्यात् यत्

'स्त्री-शूद्र-द्विजबन्धूनां, त्रयी एव श्रुतिगोचरा'

आत्मनः शुद्धयर्थं, स्वघोरतमपापानां प्रायश्चितार्थं इदं कार्यं सद्यः एव कर्त्तव्यं। अनेन सह स्वयं अपि 'वेदः' पठनीयः कथितद्विजैः मिथ्या गर्वान्वितैः, केवलं जन्ममात्रेण। इमे कथित-द्विजाः प्रायः

लौकिकसंस्कृतज्ञानराहित्यात् अस्य श्लोकस्य अपि अर्थं नहिं जानन्ति यथा—

कामात् मातापिता च एनं यदुत्पादयतः मिथः,
संभूतिं तस्य तां विद्यात् यद्योनौ अभिजायते ।
आचार्यः तु अस्य यां जातिं विधिवत् वेदपारगः,
उत्पादयति सावित्र्या सा सत्या सा अजरा अमरा ।

(मनु० अ० श्लो० १४७-४८)

यदि कोऽपि संस्कृतज्ञः स्यात् , तदा अस्य अर्थं ज्ञातुं शक्नोति, यत् मातापिता-सकाशात् सर्वेषां मानवानां समानरूपेण शारीरिक-जन्म भवति, परन्तु वेदज्ञानकारणात् एव द्वितीय-जन्म 'द्विजत्वं नाम' इति कथ्यते । शास्त्रं तु स्पष्टं असन्दिग्धं, परन्तु अज्ञानाय दुराग्रहाय निहितस्वार्थाय अपरिश्रमेण उच्चजातिगर्वाय किं करणीयं ? शूद्रशब्दस्य यौगिकशास्त्रीयार्थाः ज्ञातव्याः, न तु कल्पितरूढ्यर्थाः, येन एकः विशालजनसमूहः नीचजातिवर्गः इति कथ्यते । अस्मात् कारणात् महात्मगान्धिना 'हरिजनः' इति नाम दत्तं आसीत् कथितशूद्र-वर्गाय । वस्तुतः 'हिन्दुः इति स्थाने हरिजनः' इत्येव नाम स्यात् समग्रभारतीयसमाजस्य तदा शोभनं स्यात् । 'हरिजनः' संस्कृतशब्दः, यस्य अर्थः 'हरेः ईश्वरस्य प्रियः', तथा 'हिन्दुः' फारसीशब्दस्य अर्थः 'चौरः लुण्ठकः' इति । दुर्दिनं एव आसीत् तद्दिनं, यस्मिन् अस्माभिः विदेशीयशासकानां दत्तं नाम स्वीकृतं । अस्माकं शास्त्रीयनाम तु 'आर्य्याः' इत्येव आसीत् वेदधर्मसम्बन्धात् । सर्वप्रथमं नामकरणसंस्कारः कार्य्यः । भारतदेशसम्बन्धात् वयं सर्वे 'भारतीयाः' इत्यपि भवितुं अर्हामः । सारांशः अयं, यत् किं अपि संस्कृतनाम स्यात् शास्त्र-इतिहासादिसिद्धं । वयं 'चौराः

लुण्ठकाः' नहि विद्यामहे, येन मुस्लिम-विदेशीय-शासकानां दत्तं नाम स्वीकुर्याम । तदा ते विदेशीयशासकाः विलयं गताः नष्टीभूताः, तथा वयं स्वतन्त्राः जाताः । अद्य का वारयिता नामकरण संस्कारे, संस्कृतपठने, वेदपठने च, येन 'आर्य्याः भारतीयाः' भवेम ।

## वेदस्य आद्यरूपं

आदौ वेदस्य एतादृशं जटिलजटिलं सर्वपदसंयुक्तं पठने अर्थ-ज्ञाने असम्भवं इव रूपं नासीत् । इदं रूपं तु महाभारतकालानन्तरं मध्यकालीनैः पंडितैः कृतं, यैः वेदादिपठनं, श्रवणादिकं अपि, स्त्री-शूद्रादीनां द्विजबन्धूनां कृते वारितं । सिद्धान्तकौमुदीत्यादि-व्याकरणग्रन्थानां रचनाकालानन्तरं एतैः सन्धि-संयोगादिभि, वेदमन्त्र-पदानि सरलसरलानि अपि, एतादृशानि जटिलानि कृतानि, यत् वेदपठनपाठनं असम्भवं जातं । अनेन मार्गेण तेऽपि मध्यकालीनाः पंडिताः वेदज्ञानविरहिताः जाताः । परिणामे, अद्य कोऽपि 'वेदं' पठति एव नहि । अनन्तरं स्वरादिसहतेन वेदस्य पठनमात्रं अर्थ-विरहितं आरब्धं, परन्तु अनेन मार्गेण पद-ज्ञानं अपि न जातं क मन्त्रार्थज्ञानं ? एताभिः मध्यकालीन-दुष्टपरम्पराभिः वेदज्ञानं सर्वथा लुप्तं । प्राचीनभारते महाभारतात् प्राक् पश्चात् अपि, 'वेदस्य प्रतृ-एणरूपं' आसीत् अर्थात् मन्त्रपदानि सर्वाणि पृथक् पृथक् स्वरूपे तिष्ठन्तिस्म । वेदव्याकरणानुसारं यद्रूपं यस्य पदस्य भवति, तदेव रूपं आसीत् वेदमन्त्रे । वेदः तु ईदृशः सरलः, यत् कथने नहि आगच्छति । वेदमन्त्रेषु उपसर्गाः अपि पृथक् पृथक् विद्यन्ते । लौकिकसंस्कृतव्याकरणं 'सिद्धान्त-कौमुदी' इत्यादयः तु वेदे लगन्ति एव नहि । परन्तु एतैः मध्यकालीनैः पंडितैः लौकिकव्याकरणं अपि वेदे प्रयुक्तं, येन वेदमन्त्राः जटिलाः जाताः । ईश्वरस्य, देव-

तानां, ऋषि-मुनीनां किमपि कार्यं जटिलजटिलं नहि भवति। ज्ञान-दानं, प्रबोधः, उपदेशः च तेषां सर्वेषां उद्देश्यं, अतः भाषा सरलसरला भवति, परन्तु विचारः अवश्यमेव गभीरः भवितुं अर्हति।

## वेदस्य आदौ प्रतृण्णरूपं, उत निर्भुजरूपं ?

ऐतरेय आरण्यके अनेन प्रकारेण विद्यते यथा :—

'यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपं, अथ यद्शुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य रूपं।' ३।१३

पदसंहिता, प्रकृतिसंहिता इति प्रकारद्वयं वेदस्य अनन्तकालतः प्रचलतिस्म भारते विश्वे च। परन्तु इदानीं भारतवर्षे पदसंहिता नहि अवलोक्यते, अपितु केवलं प्रकृतिसंहिता मिलति 'निर्भुजस्य रूपं इति नाम', यस्यां वेदमन्त्राः सन्धि-संयोगादिसहिताः एव विद्यन्ते। पदसंहिता या इदानीं नहि मिलति 'प्रतृण्णरूपं इति नाम' आसीत्, यस्यां वेदमन्त्राः सन्धिसंयोगरहिताः आसन् अर्थात् मन्त्रेषु पदानि सर्वथा पृथक् पृथक् विद्यन्तेस्म। प्रश्नः तु अयं एव, यत् किं रूपं वेदस्य उत्पत्तिकाले आसीत्, यदा वेदः 'श्रुतिः' इत्येव आसीत।

कतिपयपंडिताः विचारयन्ति, यत् वेदस्य आदौ निर्भुजरूपं आसीत्, न तु प्रतृण्णरूपं, यत् रूपं वेदस्य पश्चात् जातं। एतादृशः विचारः पं० रघुनन्दनशर्ममहाभागेन 'वैदिक-सम्पत्ति' (हिन्दी-प्राकृतभाषायां) इति ग्रन्थस्य लेखकेन स्वग्रन्थस्य ५५८-५६० पृष्ठेषु प्रकटीकृतोऽस्ति। तेन इदं अपि लिख्यते, यत् अनन्तरं पदसंहिता जाता वेदस्य, येन वेदमन्त्रस्य पद-निर्णये विवादः न स्यात्। तेन महाभागेन अस्य मन्त्रस्य उदाहरणं अपि दत्तं अस्ति यथा :—

न तस्य प्रतिमा अस्ति, यस्य नाम महद्यशः।
हिरण्यगर्भः इत्येषः मा मा हिंसीदित्येषा यस्मान्न जातः इत्येषः।

(यजु० अ० ३२, मं० ३)

स लिखति, यत् कतिपयपंडिताः कथयन्तिस्म, यत् 'नतस्य' एकपदं विद्यते, परंतु अपरे कथयन्तिस्म, यत् 'न' एकं पदं तथा तस्य द्वितीयं पदं विद्यते। इदानीं अपि एतादृशः विवादः सनातनधर्मिषु तथा आर्यसमाजिषु शास्त्रार्थे अवलोक्यते। एतादृशस्य विवादस्य वारणाय पद-संहिता प्रचालिता आचार्यैः वेदज्ञैः, येन विवादः शान्तः स्यात्। तेन अग्रे लिख्यते, यत् व्यासमुनिना 'विकृतवल्ली' नामके ग्रन्थे लिख्यते यत्

'जटा माला शिला लेखा ध्वजः दण्डः रथः घनः,
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वाः मनीषिभिः।

(विकृतवल्ली १।५)

अस्य महाभागस्य अयं विचारः, यत् जटिलात्, कठिनात् सरलं प्रति गच्छति मानवः, परन्तु अस्माकं विचारः अयं, यत् सरलसरलात् जटिलजटिलं कठिनकठिनं प्रति गच्छति मानवः 'आत्मनः अल्पज्ञत्वात् तज्जन्यगर्वत्वात्', येन अन्ये जनाः लाभेन वंचिताः स्युः।

परन्तु ईश्वरः सर्वज्ञः निर्भ्रान्तः अस्ति। किं स ईश्वरः देवता-सकाशात् 'सर्वज्ञानं वेदं' निर्भ्रान्तरूपे (प्रतृणरूपं) उत भ्रान्तरूपे (निर्भुजरूपं) प्रदास्यति आदौ ? वस्तुतः अयं एव प्रश्नः अन्ते उपतिष्ठते। अस्य प्रश्नस्य उत्तरं तु सरलं विद्यते, यत् ईश्वरः 'वेदं स्वज्ञानं' निर्भ्रान्तरूपे ददाति, दास्यति च, येन सर्वे जनाः तस्य आदेशान् आज्ञाः सरलतया बुध्येरन्। कथं स ईश्वरः, सर्वेषां मान-

वानां स्वामृतपुत्राणां 'माता पिता च' मानवेषु 'भ्रान्ति' उत्पद्येत ? स तु इसायिनां मुसलमानानां च 'सेटिनः शैतानः वा' नास्ति, येन मानवेषु 'भ्रान्ति पाप-प्रवृत्ति च' उत्पन्नीकुर्यात्। अतः इयं भ्रान्तिः एव अस्ति, यत् 'वेदः आदौ निर्गुजरूपे ऊत्पन्नीभूतः अर्थात् पदेषु सन्धि-संयोगसहितः।

## आदौ वेदमन्त्राणां पदानि पृथक् पृथक् आसन्

आदौ अर्थात् वेदस्य उत्पत्तिकाले, यदा ईश्वरेण वेदसहितं निखिलब्रह्माण्डं, अमैथुनीजीवसृष्टिसहितं रचितं, तदा वेदमन्त्राणां पदानि पृथक् पृथक् आसन्, इति सुनिश्चितं विवादरहितं च। कारण तु इदमेव, यत् यदि पदानि पृथक्२ न भवेयुः वेदमन्त्रेषु, तदा पदज्ञानं अर्थात् भाषाज्ञानं कदापि न सम्भवेत् लोके। न केवलं पदानि पृथक् पृथक् आसन्, अपितु उपसर्गाः अपि मन्त्रेषु पृथक्२ विद्यन्तेस्म, यत् इदानीं अपि बहुषु मन्त्रेषु अवलोक्यते। यदि पदानि संयुक्ताः तिष्ठेयुः आदौ, यथा इदानीं अवलोक्यते, तदा पदज्ञानाभावे पद-प्रकृतिज्ञानं कदापि न सम्भवेत्। इदं न विस्मरणीयं, यत् आदौ वेदः 'श्रुतिः' इति विद्यते, लेखनादिसाधनाभावात्। वेदस्य वेदभाषा शनैः शनैः सम्पूर्णविश्वे प्रसरति स्वरूपे, अनन्तरं भ्रंशरूपेषु अपि प्रचलति मानवप्रमादात्, अहंभावकौतुकात् मिथ्या गर्वात् च। वेदः एव आदिकारणं, भाषा-लिपि-व्याकरण-निरुक्तादेः, गद्यपद्यस्य, एवमेव सर्वासां विद्यानां। वेदतः बीजरूपेण सर्वं निस्सरति ज्ञानविज्ञानादिकं तथा गद्य-पद्यात्मकं मानवस्य सत्प्रयत्न-परिश्रमानुसारं, यथा ऊर्णनाभितः तन्तुः स्वतएव निस्सरति स्वभावात्। वेदः न गद्यं न पद्यं, यथा मानवः विचारयति, अपितु गद्य-पद्यद्वयस्य आदिस्रोतः

आदिकारणं च। यत्किञ्चित् वेदे स्वरूपे विद्यते, तत्सर्वं अलौकिक-काव्यं अलौकिक-गद्यं अपि विद्यते, मानवस्य काव्यादेः नियमादि-बन्धनरहितं। अनन्तरं मानवेन इदं अलौकिक-गद्यपद्यमया रचना वेदः नाम लौकिक-गद्यपद्य नियमेषु बध्यते, परन्तु स पूर्णतया सफलः नहि भवति। लौकिकबन्धनैः मानवनिर्मितैः तु वेदः अस्मिन् रूपे जायते, यथा अद्य विद्यते, येन वेदपठनपाठनं असम्भवं जायते, उच्चारण-पदार्थज्ञानादेः प्रायः असम्भवात्। प्रत्यक्षस्य कृते किं प्रमाणं? अद्य वेदपठनपाठनक्रमः सर्वथा अवरुद्धः एव भारते विश्वे इति निर्विवादं।

## वर्त्तमानवेदस्वरूपं जटिलजटिलं कथं?

अस्य कारणं इदं, यत् 'अष्टाध्यायी' व्याकरणस्य तथा अन्येषां व्याकरणानां अपि 'सन्धिसंयोगनियमाः' ये वैय्याकरणैः लौकिक-संस्कृतस्य पद-रचनायै निर्मिताः (न तु विविधपदेषु सन्धिसंयोगकरणाय) ते अलौकिकवेदभाषायाः पदेषु अपि प्रयुक्ताः, तेषां पदानां निरर्थकं 'संहितीकरणाय पदप्रकृति-पदार्थ-भाषाज्ञाननाशाय च'। अष्टाध्यायीत्यादि-व्याकरणानि प्रायः गतद्विसहस्रवर्षेषु निर्मितानि लौकिकसंस्कृतस्य पुष्टीकरणाय। सर्वेषु प्राप्तव्याकरणेषु 'अष्टाध्यायी' व्याकरणं प्रामुख्यं भजते अर्थात् सर्वाणि अन्यानि व्याकरणानि अतिशेते। महामुनिपाणिनिः महान् वैय्याकरणः, येन लौकिकसंस्कृतं अमरं कृतं, परन्तु भारते अस्मत्तुल्यैः क्षुद्रपंडितैः (किं एतादृशाः पंडिताः भवितुं अर्हन्ति?) लौकिकसंस्कृतमपि मृतप्रायं ग्रन्थगतं कृतं। अस्यां दशायां कथं संस्कृतोद्धारः तथा वेदोद्धारः स्यात् इति महती चिन्ता बाधते? अतः गतद्विसहस्र-



वर्षेषु वेदस्य अपि महती दुरवस्था जाता, दुर्गतिः च कृता।

## वेदः 'श्रुतिः' आदौ '

श्रवणमात्रेण, वेदस्य वेदभाषायाः प्रचारः प्रसारश्च भवति आदौ सृष्ट्यारम्भकाले। अन्यथा कदापि भवितुं नहि अर्हति, यतोहि यदि वेदे पृथक् २ पदानि न स्युः, तदा श्रवणमात्रेण पदज्ञानं अर्थज्ञानं तदभावे भाषाज्ञानं कदापि न स्यात्। यथा माता सरल-सरलया भाषया पृथक् २ पद-सहितया पदज्ञानं अर्थज्ञानं अनन्तरं भाषाज्ञानं बालके आत्मदुग्धेन सह कारयति, तथैव ईश्वरः देवतानां सकाशात् पृथक् २ पद-अर्थ-भाषाज्ञानेन स्वामृतपुत्रान् स्वामृतपुत्रीः च प्रबोधयति। लोके वेदप्रादुर्भावानन्तरं इदं कार्यं देवताभिः ऋषिभिः मुनिभिः क्रियते। इयं परम्परा अनन्तकालपर्यन्तं प्रचलति लोके। वेदः स्वरूपे नहि तिष्ठति अद्य, अस्य ज्वलत्प्रमाणं इदं, यत् कोऽपि मानवः वेदस्य पदज्ञानं अर्थज्ञानं भाषाज्ञानं च नहि कर्त्तुं शक्नोति श्रवणमात्रेण। इदं अद्य लौकिकसंस्कृतस्य विषयेऽपि सत्यं, यतोहि कोऽपि संस्कृतं ज्ञातुं नहि शक्नोति श्रवणमात्रेण। कारणं केवलं इदं, यत् सर्वेषु पदेषु नियमरूपेण सन्धिः कृतः ग्रन्थेषु, वेदेऽपि, येन वेदः, शास्त्राणि, अन्ये संस्कृतसाहित्यव्याकरणादिग्रन्थाः पठने नहि आगच्छन्ति, क तेषां अर्थज्ञानं? एतादृशी दुःस्थितिः विद्यते, कोऽपि स्वतएव अवलोकयितुं शक्नोति, यदि स अल्पं अपि संस्कृतज्ञानं रक्षति। एकस्मिन् स्थले स एव पं० रघुनन्दनमहाभागः लिखति स्वग्रन्थे यथा—

'.........विचित्र-छंदांसि वेदस्य ( ऋग्वेदस्य ) यत् यदा-तानि छंदांसि पदेषु सन्धि-रहितानि पठ्यन्ते, तदा वैदिकपिंगलशास्त्रानुसारं शुद्धानि प्रतीयन्ते, परन्तु यदा पदेषु सन्धिसहितानि पठ्यन्ते, तदा अशुद्धानि प्रतीयन्ते.....................इत्यादि।' (वैदिक-सम्पत्ति, पृ० ५८०)

अनेन निर्विवादं सिद्धयति, यत् ऋग्वेदः अर्थात् सर्वे वेदाः यजुरादयः पदसंहिताः आसन् प्रादुर्भावकाले सृष्ट्यारम्भे अर्थात् तेषु सर्वेषु वेदेषु पदानि पृथक् २ आसन्। इदं बुद्धौ अपि समायाति, प्रत्यक्षं अनुभवसिद्धं अपि, यत् सर्वासां जीवितभाषाणां अयं एव प्रशस्तविधिः, यत् वाक्येषु पदानि लेखने, भाषणे, ग्रन्थेषु च पृथक् २ विद्यन्ते, अन्यथा पदबोधः अर्थबोधः कदापि न स्यात्, तथा ताः सर्वाः भाषाः संस्कृतवत् म्रियेरन्।

मुनिजैमिनिना मीमांसा-ग्रन्थे लिख्यते यथाः—

तेषाम् ऋग् यत्र अर्थवशेन पादव्यवस्था ( जै० २।१।३५ )

गीतिषु सामाख्या (जै० २।१।३६)

शेषे यजुः शब्दः (जै० २।१।३७)

व्याख्या :—अनेन सिद्धयति, यत् केवलं ऋग्वेदे पाद-व्यवस्था विद्यते अर्थात् किमपि अलौकिक-छन्दः विद्यते, यस्मिन् लौकिक-छन्दोज्ञानं तु लगति एव नहि। एकस्मिन् स्थले स एव पं० रघुनन्दनमहाभागः लिखति, यत् वैदिकछन्दसां तु ज्ञानं सर्वथा लुप्तं एव अस्ति इदानीं ( वै० सम्पत्ति पृष्ठ ५८० )। इदं मन्येत न वा, परन्तु इदं तु सर्वथा सत्यं, यत् ऋग्वेदमन्त्राणां, यदा पदेषु सन्धिरहितः पाठः क्रियते, तदा छन्दांसि शुद्धानि विद्यन्ते। अनेन अस्माकं एव पक्षः प्रबलः जातः, यत् वेदः आदौ सर्वथा सन्धिरहितः आसीत् अर्थात् पदानि पृथक् २ विद्यन्तेस्म मन्त्रेषु। अस्माकं इदं अपि पक्षः विद्यते, यत् वेदे अलौकिक-मुक्तछन्दांसि विद्यन्ते लौकिकवर्णमात्रा-बन्धनरहितानि। अस्मात् कारणात् वेदतः गद्यं पद्यं इति द्वयं निःसरति [illegible]। ईश्वरः तु मानवः नास्ति अल्पज्ञः बद्धः च। अतः ईश्वरस्य सर्वाणि कार्याणि लौकिक-बन्धनरहितानि

सन्ति। वेदविषयेऽपि यदा अनुसन्धानं भवेत्, तदा अयं एव पक्षः सत्यः सिद्धः स्यात्। अस्माभिः बहुकालपर्यन्तं अन्वेषणं कृतं, तथा अन्तरात्मनः साक्ष्यं अपि इदं, ईश्वरप्रेरितं च। एतादृशानि महान्ति कार्याणि वेद-वेदभाषा-संस्कृतोद्धारादीनि ईश्वर-साहाय्येन विना नहि सम्भवन्ति मादृशैः क्षुद्रजीवैः। महायोगिराजकृष्णेन अपि गीतायां दीयते यथा :—

यदा यदाहि धर्मस्य ग्लानिः भवति भारत,<br>
अभ्युत्थानं अधर्मस्य, तदा आत्मानं सृजामि अहं।<br>
परित्राणाय साधूनां, विनाशाय च दुष्कृतां,<br>
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥

अतः यदा वेदधर्मस्य आत्यन्तिकपतनं जायते, तथा नास्तिकतादिकारणात् लोके पापस्य अत्यन्तं वृद्धिः जायते, तदा ईश्वरीय-नियमानुसारं, येन ईश्वरधर्मस्य वेदधर्मस्य सर्वथा लोपः न स्यात् केनाऽपि आत्मना, ईश्वरप्रेरणया साहाय्येन च इदं कार्यं क्रियते यथा महर्षिदयानन्देन, यस्य कार्यस्य पूर्तिः अद्य लेखकेन क्रियते। महर्षिदयानन्दः न केवलं महापण्डितः अपितु योगी अपि आसीत्, अतः तस्य आत्मा अवतरितः लोके वेदोद्धाराय। अन्यस्य अपि आत्मनः ईश्वरप्रेरणया प्रादुर्भावः भवितुं अर्हति इति रहस्यं सर्वं, यस्मिन् सम्बन्धे किं अपि अधिकं नहि कथयिष्यते इदानीं। अत्र तु केवलं इदमेव स्पष्टीकृतं, यत् वेद–वेदभाषा–संस्कृतोद्धाराय ईश्वरसाहाय्यं प्रेरणाद्वारेण अनिवार्य्यं, यस्य प्रतीतिः अनुभूतिः च अन्तरात्मना क्रियते योगस्थदशायां। न अयं विषयः अनुमानेन, प्रत्यक्षप्रमाणेन वा सिद्धः स्यात्।

अस्तु, सारांशः अयं, यत् वेद–वेदभाषा–संस्कृतोद्धारस्य कालः

युगं वा आगतं अस्ति, यस्य अनुभूतिः प्रतीतिश्च मया अन्तरात्मनि क्रियते। अतः अद्य उद्धारः तु भवेत् एव ईश्वरेच्छया, कोऽपि मानवः इच्छेत् न वा।

## अतः सृष्ट्यादौ ऋग्वेदस्य मन्त्राणां पदानि पृथक् पृथक् आसन्, तथा अन्येषां वेदानां अपि

पूर्व कथनेन अतर्क्यप्रमाणसहितेन निर्विवादं सिद्धं स्यात्, यत् ऋग्वेदः मन्त्रपदेषु सर्वथा सन्धिरहितः एव आसीत् अर्थात् पदानि पृथक् २ तिष्ठन्तिस्म। ऋग्वेदात् प्रायः सर्वे मन्त्राः अन्येषु वेदेषु यजुः साम-अथर्व-नामसु गताः तत्तद्वेदानां विशिष्टप्रयोजनसिद्ध्यर्थं, अतः तेषु सर्वेषु अपि मन्त्रपदानि पृथक् २ आसन्। प्रायः ऋग्वेदस्य मन्त्राः अन्येषुवेदेषु विद्यन्ते कतिपयान् मन्त्रान् विहाय इति अस्माभिः पूर्वं निवेदितं। वेदः तु एकः एव, परन्तु चतुःशाखामयः, येन ज्ञान-विज्ञान-उपासना-कर्म-पुरुषार्थचतुष्टयं सिद्धं स्यात्। अतः वेदः चतुर्मुखःइति कथ्यते 'ब्रह्म' इति नाम। यैः वेदस्य इदं प्रयोजनं रहस्यं च न ज्ञातं, तैः अज्ञानवशात् कथितं यत् 'ब्रह्म' ब्रह्मन्, ब्रह्मा चतुर्मुखः कोऽपि देवः शरीरधारी', यथा वेदवाणी 'सरस्वतीदेवतारूपे'। परन्तु केवलं–मिथ्या कल्पना इयं, यतोहि वाणी वाक् वा काऽपि चैतन्या शरीरधारिणी देवता भवितुं नहि अर्हति, तथैव चतुर्मुखः ब्रह्मा, यः प्रत्येकं मुखतः एकैकं वेदं कथयति इति कल्पना। इदं रहस्यं, यत् विस्मृतं वेदानां अपठनात् संस्कृतभाषायाः अज्ञानात्, भूयोऽपि स्पष्टीक्रियते।

जैमिनिमुनिना लिख्यते, यत् 'गीतिषु सामाख्या' अर्थात् सामवेदे पदव्यवस्था नास्ति यथा ऋग्वेदे, अपितु तालादिव्यवस्था भवति गायनार्थं। सामगायनं सुप्रसिद्धं, प्राचीनतमं, यस्य संज्ञा

रस्य सर्वाणि गायनानि निस्सृतानि सन्ति, यथा संस्कृततः संसारस्य सर्वाः भाषाः निस्सृताः सन्ति, यतोहि ताः सर्वाः इदानीं यावत् वेदशब्दान् बिभ्रति स्वरूपे विरूपे वा, यतोहि वेदः वेदभाषा च आदिस्रोतः लोकवाणीनां, यथा अस्माभिः गताध्यायेषु सिद्धं। तेन एव मुनिना लिख्यते, यत् 'शेषे यजुः शब्दः' अर्थात् यजुर्वेदः अथर्ववेदः च 'गद्यं शब्दः नाम' इति। सर्वैः वैदिकाचार्यैः अनेन प्रकारेण लिख्यते स्वीक्रियते च। कदाचित् स्तोकः भ्रमः एव स्यात् अत्र, यतोहि सम्प्रति प्रकाशितवेदग्रन्थेषु यजुः साम–अथर्व–नामसु छन्दसां नामानि दीयन्ते, यानि वस्तुतः ऋग्वेदछन्दसां विद्यन्ते। अनेन निर्विवादेन सिद्धं स्यात्, यत् सर्वेषु वेदेषु मन्त्राणां पदानि पृथक् २ आसन्, यदा वेदानां प्रादुर्भावः जातः

## तदा वेदानां लेखनं प्रकाशनं कीदृशं स्यात् ?

अतः निर्विवादं सिद्धं, यत् सर्वेषां वेदानां लेखनं प्रकाशनं च अनेन प्रकारेण स्यात्, यथा आदिसृष्टौ आसीत् अर्थात् मन्त्राणां पदानि पृथक् २ स्वरूपे दीयेरन्। अनेन मार्गेण एव वेदोद्धारः स्यात्, न अन्यथा इति स्पष्टं कस्यचित् अपि ज्ञानवतः वेदधर्मशुभचिन्तकस्य वेदधर्मावलम्बिनः। अस्मिन् विषये एकमात्रजीवितवेदज्ञपं० श्रीपाददामोदरसातवलेकरस्य प्रायः शतवर्षदेशीयस्य मतं दीयते यत् तेन एकस्मिन् पत्रे दत्तं यथाः—

> 'पदच्छेद-पूर्वकः मन्त्रपाठः मुद्रापयितव्यः। मम मनसि वर्त्तते एतत्। आचार्यविनोवाभावे अपि एवमेव कथयति.......अहं सर्वेषां चतुर्णां अपि वेदानां पदच्छेदपूर्वकं मुद्रणं करिष्यामि.......................'



अतः अनेन अपि सिद्धं, यत् वेदानां मन्त्रपदानि पृथक् पृथक्

तिष्ठेयुः इति समीचीनं युक्तियुक्तं च, तथा वेदाः सर्वप्रथमं अस्मिन् रूपे आसन् इत्यस्ति अस्माकं दृढं मतं, यत् अस्माभिः प्रबलप्रमाणैः विदुषां मतैः च सिद्धं।

**ऋग्वेदस्य मन्त्राः अस्मिन् रूपे आसन् आदौ**

अग्निम् ईडे पुरोहितं यज्ञस्य देवम् ऋत्विजम्।
होतारं रत्नधातमम्॥ १
अग्निः पूर्वेभिः ऋषिभिः ईड्यः नूतनैः उत।
सः देवान् आ इह वक्षति॥ २
अग्निना रयिम् अश्नवत् पोषम् एव दिवे दिवे।
यशसं वीरवत्तमम्॥ ३
अग्ने यं यज्ञम् अध्वरं विश्वतः परिभूः असि।
सः इत् देवेषु गच्छति॥ ४
अग्निः होता कविक्रतुः सत्यः चित्रश्रवस्तमः।
देव देवेभिः आ गमत्॥ ५ इत्यादि

व्याख्या :—वेदमन्त्राः सर्वे अस्मिन् सरलतमे रूपे आदौ आसन्, 'श्रुतिः नाम' येन श्रवणमात्रेण सर्वेषां पदानां पृथक् २ ज्ञानं स्यात्। अनन्तरं तेषां अर्थः अपि देवताभिः ऋषिभिः मुनिभिः मौखिकरूपेण स्पष्टीकृतः। इयं लेखनपरिपाटी वैदिकी उत साध्वी नास्ति, यत् 'मन्तस्य पदस्य 'हलन्त म्' संयुक्तः स्यात् अचि परपदस्य' अपितु 'हलन्त म्' इत्येव तिष्ठेत् अचि अपि यथा हलि, उत अनुस्वारः स्यात्। अस्मिन् विषये अस्माभिः बहूनि प्रमाणानि दत्तानि सन्ति, यत् 'मः अनुस्वारः स्यात् अचि हलि' इत्येव आसीत् वैदिकी-लेखनपरिपाटी। प्रत्येकं पदस्य अस्तित्वं पृथक् २ भवति, अतः परपदे पूर्वाक्षरः अच् हल् वा इति प्रश्नः नहि उपतिष्ठते। अस्माभिः प्राचीनानां अपि प्रयोगाः

दत्ताः सन्ति, येन सिद्धं स्यात् यत् 'मः अनुस्वारः क्रियते पूर्वाचार्य्यैः अचि', तथा अत्र कोऽपि विरोधः नास्ति व्याकरणस्य। तथापि यस्मात् कालात् पं० भट्टोजिदीक्षितमहाभागेन 'अष्टाध्यायी' व्याकरणस्य वृत्तिः रचिता, तस्मात् कालात् इयं लेखनपरिपाटी वेदेऽपि प्रचालिता, यत् 'न केवलं मः अनुस्वारः कृतः स्यात् हलि, अपितु मः सन्धिः स्यात् अचि, येन पूर्वपरपदद्वयस्य उच्चारणं अपि असम्भवं स्यात्, यथा वेदेऽपि

अदीनाः पदस्य मदीनाः स्यात्

येन मुसलमानाः कथयन्ति, यत् तेषां 'मदीना नगरं नाम' वेदेऽपि विद्यते। अस्मिन् विषये अस्माभिः बहुलिखितं गतेषु पृष्ठेषु यथास्थानं यथावसरं। इयं लेखन-उच्चारण-परिपाटी महादूषिता विद्यते, पं० भट्टोजिदीक्षित-व्याख्या-आधारिता 'मः अनुस्वारः' इति सूत्रस्य। अस्माभिः प्रबलप्रमाणैः तथा प्राचीनप्रशस्तप्रयोगैः सिद्धं, यत् इयं व्याख्या साध्वी नास्ति। अस्माकं कोऽपि विरोधः नास्ति, यत् 'हलन्त म्' तिष्ठेत् अचि, परन्तु सन्धिः कदापि न क्रियेत अचि, येन भ्रमः न स्यात्। वयं वारं वारं लिखामः अस्मिन् विषये यथावसरं, यतोहि अनेन मार्गेण वेदस्य तथा संस्कृतसाहित्यस्य नाशः कृतः, क्रियते च, येन वेदस्य तथा संस्कृतस्य कदापि उद्धारः न सम्भवेत्। सौभाग्यं यत् महर्षिदयानन्देन अपि 'मः अनुस्वारः क्रियते अचि' यथा :—

'प्रथममन्त्रे पदच्छेदे.................अग्निं ईडे

तृतीयमन्त्रे.........................पोषं एव

चतुर्थमन्त्रे..............................यज्ञं अध्वरं, इत्यादि



व्याख्याः—उत्तम स्यात्, यत् वेदमन्त्राणां लेखनं अनेन प्रकारेण गात् यथाः—

'अग्निं ईडे पुरोहितं यज्ञस्य देवं ऋत्विजं ।
होतारं रत्नधातमं ॥ १

अनेन प्रकारेण लेखनेन समयस्य स्थानस्य 'न्यूनता' स्यात्, तथा 'मः अनुस्वारः' इति सूत्रस्य पालनं अपि स्यात्। दौर्भाग्यवशात् 'वैदिकव्याकरणं' अद्य किं अपि उपलब्धं नास्ति। 'अष्टाध्यायी' व्याकरणं प्रायः द्विसहस्रवर्षप्राचीनं, तथा पं० भट्टोजिदीक्षितमहाभागस्य वृत्तिः नवीना, अतः अस्याः वृत्तेः वेदेऽपि प्रयोगः स्यात् इति चित्रं। यदि सर्वासां वेदपरम्पराणां नाशः जातोऽस्ति तथा मार्गदर्शनं नहि भवति, वैदिकसाहित्यं अपि पठित्वा, तदा सद्बुद्धेः प्रयोगः कार्य्यः, यथा अन्यैः देशैः उन्नतिशीलैः क्रियते स्वस्वभाषासाहित्यविषये। किं भारते बुद्धिः न्यूना विद्यते ? आं ! सद्बुद्धिः कियती विद्यते इति विषये अवश्यमेव सन्देहः, न तु बुद्धिः, कुबुद्धिः वा विषये।

## वेदस्य प्रचलितरूपे प्रकाशनं गतद्विशतवर्षेषु जातं

मुद्रण-प्रकाशनादिसुविधा तु भारतदेशे प्रायः गतद्विशतवर्षेषु जाता, यदा विदेशीय-आंग्लशासकानां शासनं यत्र तत्र देशे प्रारब्धं। सर्वप्रथमं तु तैः मुद्रणालयाः आत्मशासनसौविध्याय प्रचालिताः, परन्तु अनन्तरं अन्यैः देशीयैः विदेशीयैः जनैः अपि नैजमुद्रणालयाः स्थापिताः, येषु संस्कृतग्रन्थानां अपि मुद्रणं प्रकाशनं च जातं। अयं कालः अव्यवस्थायाः तथा अज्ञानान्धकारस्य आसीत्। अयं भारतीयानां घोरपतनकालः, यः महाभारतानन्तरं प्रारब्धः,तथा दासताकाले पूर्णतां गतः, यस्य कुपरिणामाः इदानीं अपि अवलोक्यन्ते।



अयं इतिहासः गताध्यायेषु स्पष्टीकृतः, यत् महाभारतकालानन्तरं अनेकानि वेदविकृतानि मतमतान्तराणि प्रचलितानि प्रायः नास्ति-

कादीनि, येषां स्थापकानां नास्तिकचारवाकप्रमुखतः अयं घोषः आसीत् वेदसम्बन्धे यथा

त्रयः वेदस्य कर्त्तारः, भण्डधूर्त्तपिशाचकाः'

( इति चारवाकमतं )

एतादृशे दूषितवातावरणे सर्वथा वेदविरुद्धे 'भगवतः वेदस्य ईश्वरीयज्ञानस्य' का दुर्दशा दुर्गतिः च भविष्यति, इति सरलतया अनुमातुं शक्यते केनाऽपि बुद्धिमता। येषां नास्तिक–सम्प्रदायानां कृते बौद्धसम्प्रदायप्रमुखतः, ईश्वरः नासीत्, आत्मा नासीत्, जड-प्रकृतिः अपि नासीत्, तेषां कृते 'किं मूल्यं वेदस्य ईश्वरीयज्ञानस्य', यदा कोऽपि ईश्वरः नास्ति जगत्स्रष्टाः जगन्नियन्ता, सर्वान्तर्यामी सर्वव्यापकः सर्वज्ञः सर्वशक्तिमान्? नास्तिकाः कथयन्तिस्म, यत् ते सर्वे एव ईश्वराः, किं अपि अनाचार-दुराचार-कदाचार-व्यभिचारादि-करणे समर्थाः, अतः क्व अन्यः ईश्वरः वेदवर्णितः? तेषां घोषः आसीत् यत् :—

'मद्यं मांसं च मीनं च मुद्रा मैथुनं एव च,
एते पंचमकाराः स्युः, मोक्षदाः हि युगे युगे।
पीत्वा पीत्वा पुनः पीत्वा, यावत् पतति भूतले,
पुनः उत्थाय वै पीत्वा, पुनर्जन्म न विद्यते।

( महानिर्वाणतन्त्रं )

मातृयोनिं परित्यज्य, विहरेत् सर्वयोनिषु।'

( ज्ञानसंकलनीतन्त्रं )

एतैः वेदविरुद्धमार्गिभिः नास्तिकैः मांसयज्ञाः प्रचालिताः एतैः नास्तिकैः वेदविरुद्धमार्गिभिः, आर्य्याणां वेदधर्माव-



लम्बिनां द्रव्यज्ञानयज्ञानां स्थाने मांसयज्ञाः प्रचालिताः, येषु पशु-

हिंसा भवतिस्म, तथा यज्ञशेषे मद्यमांसादेः प्रयोगः भवतिस्म, तथा यज्ञससारोहोपलक्ष्ये व्यभिचारादेः नग्ननृत्यं भवतिस्म। एतैः महा-धूर्त्तैः वेदनाम्नि, नरमेधः, गोमेधः, अश्वमेधः इति नामकाः यज्ञाः प्रचालिताः, येषु नर-गो-अश्वादीनां बलिः अग्नौ प्रक्षिप्य भवतिस्म। मद्येन मत्ताः इमे वाममार्गिणः, यजमानस्य भार्यासु अश्वसमागमं कारयन्तिस्म, तथा दैत्यपिशाचवत् हसन्तिस्म। प्रायः एतासां स्त्रीणां मृत्युः भवतिस्म अश्वानां पाद-दलनेन। किं पापं न कृतं एतैः दुष्टैः वाममार्गिभिः? एते वाममार्गिणः सर्वस्मिन् विश्वे, अन्येषु देशेषु अपि,जाताः, न केवलं भारते, अस्य इतिहासः साक्षी विद्यते। विश्वेतिहासः पठनीयः केनाऽपि। वर्त्तमानकालेऽपि एतादृशाः धूर्त्ताः नास्तिकाः मिलन्ति लोके। सज्जनानां दुष्टानां अयं लोकः समुच्चयः अर्थात् सज्जनाः सदैव विद्यन्ते तथा दुष्टाः अपि। कदापि लोके सज्जनानां बाहुल्यं जायते, येन सुख–शान्तिः भवति लोके, कदापि दुष्टानां बाहुल्यं जायते, येन अनाचार-दुराचार-व्यभिचार-दुःख-अशान्तिः (युद्धादयः) भवन्ति लोके। इदानीं भावितृतीय-महायुद्धस्य भूमिका रचिता विद्यते नास्तिकादिभिः मिथ्या गर्व-समन्वितैः। एतेषु युद्धशीलेषु चिन्ता नास्ति, लोकनाशः स्यात् न वा। भारतस्य सीमासु एते नास्तिकाः, कथित–साम्यवादिनः, चीनीयाः बलात् प्रविष्टाः सन्ति युद्धप्रियाः। अवलोकनीयं कदा कथं च एतेषां शत्रूणां, कथित-बौद्ध-मित्राणां भारतसीमातः निष्का-सनात् भारतरक्षणं भवति। भारतं अपि भावितृतीयविश्वमहा-युद्धस्य 'कुरुक्षेत्रं' भवितुं अर्हति भूयोऽपि, यतोहि चीनीयाः प्राक्पश्चिमीयाः युद्धाय सन्नद्धाः तिष्ठन्ति, परस्परं एकीभूय परामर्शं च इति अस्माकं निश्चितं मतं। भारतशासकैः भारतीयराजनीतिः

पठनीया, विशेषतया कौटिल्य-अर्थशास्त्रं, येन शत्रुद्वयस्य नाशः स्यात्, यतोहि ते भारतनाशं चिन्तयन्ति उद्घोषयन्ति च। यथा चीनदेशः, तथैव पाकस्थानं भारतनाशं इच्छन्ति इति सुनिश्चितं। तेषां दासतापाशेऽपि निबद्धं स्यात् भारतं, इत्यपि तेषां 'हार्दिकं'। भारतीयनिर्बलशासनं पंचशीलयुक्तं भारतनाशाय अलं न विस्मरणीयं।

### एतै वाममार्गिभिः मांसमद्यमैथुनादिप्रचारिभिः वेदः वैदिकसाहित्यं, धर्मशास्त्राणि भ्रष्टीकृतानि

तदा किं आश्चर्यं, यत् एतैः वाममार्गिभिः नास्तिकैः मद्यमांसमैथुनादिप्रचारिभिः अस्माकं वेदः, वैदिकसाहित्यं तथा अन्यानि प्रायः सर्वाणि धर्मशास्त्राणि मनुस्मृत्यादीनि कूटमिश्रणैः भ्रष्टीकृतानि ? आश्चर्यं तु तदा स्यात्, यत् वेदादयः धर्मग्रन्थाः न भ्रष्टीकृताः स्युः ? वेदे क्षेपकाः विद्यन्ते, तथा उव्वट-महीधरसायणादीनां आचार्य्याणां नाम्नि एतादृशानि भ्रष्टभाष्याणि विद्यन्ते, यत् तेषां वेदभाष्याणां पठनेन वेदधर्मतः पूर्णतया ग्लानिः जायते, तथा तस्य धर्मस्य त्यागाय कोऽपि विचारशीलः मानवः उद्यतः भवति। अस्य कूटमिश्रणस्य दुष्टवेदभाष्यस्य पठनेन ज्ञातं भवति, यत् कदाचित् वेदः, क्व ईश्वरीयज्ञानं, कस्यचित् सभ्य-सदाचारी-पठित-पुरुषस्य अपि लेखः नास्ति, येन नर-गो-अश्वादीनां यज्ञेषु बलिः, वस्तुतः वधः समर्थ्यते। अस्यां दशायां कः मन्येत, यत् वेदः ईश्वरीयज्ञानरूपे देवतासकाशात् सृष्ट्यादौ प्रादुर्भूतः, तथा अन्यानि ब्राह्मणादीनि शास्त्राणि ऋषिमुनिभिः रचितानि ? तदा आंग्लादीतिहासकारैः लिखितं, यत् वेदः जांगलिकानां गोपालानां अश्लील-असभ्य-गीतानि, अक्षरशः सत्यं स्यात्। दौर्भाग्यं तु एतत्,

यत् इमानि सर्वाणि कूटमिश्रणानि, दुष्ट-भाष्यादीनि अस्माकं ऋषिमुनीनां महाविचारकाणां सदाचारिणां नाम्नि विद्यन्ते। यदि वाममार्गिणां सर्वथा पृथक् ग्रन्थाः स्युः वाममार्गप्रचारकाः, तदा तु सरलतया उत्तरं दातुं शक्यते, यत् अस्माकं वेदादयः एतादृशाः नहि विद्यन्ते, परन्तु यत्र छलेन दुष्टबुद्ध्या च शास्त्रेषु कूटमिश्रणं कृतं, तदा किं करणीयं ?

वयं मन्यामहे, यत् अस्माकं ऋषिमुनिभिः एतादृशं दुष्टकार्यं नहि कृतं। तेषां कृते तु इदं सर्वं असम्भवं आसीत्, यतोहि ते भ्रष्टमार्गस्य मांसमदिरामैथुनादेः प्रचारकाः न आसन्। वयं तु इदमपि मन्यामहे, यत् कदाचित् उव्वट-महीधर-सायणाचार्यैः एतादृशं दुष्टभाष्यं नहि कृतं, येन भ्रष्टमार्गस्य व्यभिचारादेः प्रचारः प्रसारश्च भवति। इदं प्रतीयते, यत् तेषां नाम्नि कैश्चित् वाममार्गिभिः देशद्रोहिभिः, विदेशीयशासकानां क्रीतदासैः, उत स्वत एव विदेशीयशासकैः कृतं कारितं वा। अतः इदं कार्यं अस्माकं शत्रूणां विदेशीयशासकानां, तेषां क्रीतदासानां अपि भवितुं अर्हति भारतस्य दासताकाले, यतोहि शासितजातेः इतिहाससाहित्यादिकं भ्रष्टीक्रियते, येन शासितेषु नैजधर्म-संस्कृति-साहित्यादितः आत्मग्लानिः तथा विदेशीयशासकानां भाषा-सभ्यतादिषु प्रीतिः उत्पद्येत। अतः अस्माकं भयं, यत् कदाचित् मुस्लिम-आंग्ल-विदेशीयशासनकाले, इदं सर्वं भ्रष्टीकरणं जातं वेदादिशास्त्राणां।

## सनातनधर्मिणां आर्यसमाजिनां परस्परं विरोधः व्यर्थः

यदा इदं प्रायः सुनिश्चितं, यत् वेदभाष्याणि सर्वथा भ्रष्टानि वाममार्गिभिः, देशद्रोहिभिः, उत विदेशीयशासकानां क्रीतदासैः कृतानि उव्वटमहीधरसायणादीनां नाम्नि, तदा सनातनधर्मिणां आर्यसमा-

जिनां परस्परं निन्दावचनैः वाग्युद्धं कथं उचितं ? यावत् इदं सिद्धं न भवेत्, यत् उव्वटमहीधरादयः स्वतएव वाममार्गिणः आसन्, तथा तैः एव वेदः दुष्टभाष्येण भ्रष्टीकृतः, तावत् तेषु दोषारोपणं व्यर्थं। सनातनधर्मि-आर्यसमाजिदलद्वयस्य इदं पुनीतकर्त्तव्यं, यत् मिलित्वा, कस्यां सभायां एकीभूय वा, अस्य महाकलङ्कस्य दूरीकरणाय उद्युक्ताः, कटिबद्धाः च भवेयुः। इयं वेदस्य वेदधर्मस्य, सृष्टिधर्मस्य, ईश्वरधर्मस्य घोरतमा निन्दा, येन कथित-वेदधर्मावलम्बिनः अन्येषां सम्प्रदायानां ईसायि-मुसलमादीनां समक्षे स्थातुं नहि शक्नुवन्ति। लज्जायाः कोऽपि अवसरः नास्ति, यतोहि वेदे तथा अन्येषु शास्त्रेषु (कूटमिश्रणानि विहाय) ऋषिमुनिप्रणीतेषु अश्लील-असभ्य-व्यभिचारादिवर्द्धका काऽपि वार्त्ता नास्ति। इदं मलं कूटमिश्रण-कूटभाष्यादिरूपं यदि वेदतः, अन्येभ्यः शास्त्रेभ्यः ब्राह्मण-उपनिषद्भ्यः अध्यात्मवादिग्रन्थेभ्यः, दूरीकृतं स्यात्, तदा वेदः सूर्यवत् निर्मलाकाशे अज्ञानान्धकारमेघविरहिते प्रकाशवान् स्यात्, येन भूयोऽपि विश्वं अनेन घोषेण प्रतिध्वनितं स्यात् यथा

'कृण्वन्तः विश्वं आर्य्यम्'

तथा सर्वं विश्वं २५ वर्षेषु वेदधर्मावलम्बि स्यात् यथापूर्वं, यदि इदं कार्यं अविलम्बेन सम्पादितं स्यात्। यदि साधनानि दीयेरन्, तदा वयं अपि कर्त्तुं शक्नुमः अन्येषां विदुषां सहयोगेन।

## उव्वट-महीधराचार्यणां नाम्नि वाममार्गिणां भाष्यं

अस्माकं निश्चितं मतं, यत् उव्वटमहीधरादयः यदि वस्तुतः वेदज्ञाः वेदाचार्य्याः आसन्, तदा तैः एतादृशं अश्लीलव्यभिचारादिवर्द्धकं यजुर्वेदस्य भाष्यं नहि कृतं, यतोहि किं अपि अश्लीलं

वेदे अस्ति एव नहि। यदि अन्वेषणेन तेषां जीवनवृत्तेन वा इदं सिद्धं स्यात्, यत् ते एव भाष्यकर्त्तारः, तदा ते अवश्यमेव वाममार्गिणः वेदधर्मविरोधिनः स्युः, यैः छद्मवेशे अस्माकं वेदधर्मः निन्दितः। प्रथमं तु अस्माकं अयं एव विश्वासः, यत् तैः एतादृशं वेदभाष्यं नहि रचितं, तथा सायणाचार्यादिभिः नहि लिखितं, यत् 'नरादेः बलिः दत्तः स्यात् यज्ञादिषु', यथा तेषां व्याख्यासु पठ्यते। यदि तैः एव लिखितं, तदा कथयिष्यते, यत् तैः वेदधर्मः निन्दितः। वेदः ईदृशः यथा :—

'अरे! अस्य महतः भूतस्य (ईश्वरस्य) निःश्वसितं
एतत् यद्ऋग्वेदः यजुर्वेदः सामवेदः अथर्वाङ्गिरसः।'
— (बृहदारदायक उपनिषद्)

तदा तु किं अपि अश्लीलं, असभ्यं, व्यभिचारादिवर्द्धकं कदापि न स्यात् वेदे ईश्वरयोनित्वात्, तस्मात् एव ईश्वरात् उत्पन्नीभूतत्वात्।

अस्माभिः अत्र एकं अतर्क्यं प्रमाणं दीयते उव्वटमहीधरनाम्नि वेदभाष्यतः, येन त्रिवार्त्ताः सिद्धाः स्युः यथा (१) यत् कदाचित् एतादृशं अश्लीलभाष्यं तैः परम्परागतं प्राप्तं,यत् तैः अपि दत्तं, परन्तु तस्य भाष्यस्य सत्यतायां तेषां हृदये शङ्का आसीत् (२) इदं 'परम्परागतं भाष्यं महाभारतकालानन्तरं केनाऽपि वाममार्गिणा रचितं कथित-वेदधर्मावलम्बिनः छद्मवेशे, येन इदं ज्ञातं न स्यात्, यत् स वाममार्गी अस्ति। (३) एतादृशं भाष्यं कस्यचित् देशधर्मद्रोहिणः उत विदेशीयशासकानां क्रीतदासस्य अपि भवितुं अर्हति, यत् हस्तलिखित-भाष्ये कस्मिंश्चित् काले कारितं कृतं च।

अस्य प्रमाणं इदं, यत् यजुर्वेदस्य २३ अध्यायस्य २० मन्त्र-

स्य तथा ३१ मन्त्रस्य भाष्ये अनेन प्रकारेण दीयते, यत् ‘अश्लीलाभिप्रायं वचनम्’ तथा ‘अश्लीलभाषणं समाप्तम्’ इति। यदि कोऽपि स्वतएव एतादृशं अश्लीलभाष्यं लिखेत्, तदा स कदापि न लेखिष्यति अनेन प्रकारेण। यतोहि तस्यां दशायां तु तस्य विश्वासः स्यात्, यत् मन्त्राणां इदं एव अश्लीलभाष्यं साधु। अनेन सिद्ध्यति, यत् तेषां उव्वटमहीधराणां एतादृशे भाष्ये विश्वासः नासीत्, यत् तैः कस्माच्चित् स्थानात् प्राप्तं, तथा स्वभाष्ये दत्तं। न्यूनातिन्यूनं तस्य भाष्यस्य सत्यतायां तेषां शङ्का आसीत्। कदाचित् एतादृशी त्रुटिः-सायणाचार्येण अपि कृता, यदा तेन अपि वेदे नर-गो-अश्वादिबलिविषये यज्ञादिषु लिखितं। वेदभाष्यविषये परम्परा इयं, यत् सायणाचार्येण यत् वेदभाष्यं कृतं ईस्वीयसंवत्सरस्य १३–१४ शताब्द्यां, तद्भाष्यं अवलोक्य उव्वटेन भाष्यं कृतं, तथा उव्वटस्य वेदभाष्योपरि व्याख्यारूपेण वेदभाष्यं महीधरेण कृतं। कदाचित् सायणाचार्येण रावणादीनां वेदधर्मविरोधिनां. वस्तुतः वाममार्गिणां रक्षसां वेदभाष्यं अवलोक्य वेदभाष्यं कृतं। अनेन सिद्धं स्यात्, यत् स्वतन्त्ररूपेण उव्वटमहीधरैः वेदभाष्यं नहि कृतं। अतः इयं दूषितपरम्परा प्रायः एकसहस्रवर्षप्राचीना, या पूर्ववर्त्तिवाममार्गिभिः प्रचालिता, मद्यमांसमैथुनादिप्रचाराय, या विदेशीयशासकैः उत्तेजिता भारतस्य दासताकाले निहितस्वार्थकारणात्। अस्माकं विचारे विदेशीयशासकानां न्यूनः दोषः नास्ति वेदादिशास्त्राणां, संस्कृतसाहित्यस्य च भ्रष्टीकरणे नष्टीकरणे च। परन्तु पूर्णविश्वासेन कथयितुं नहि शक्यते, यत् केन मार्गेण वेदेषु अपि ‘क्षेपकाः मिश्रणानि’ आगतानि, तथा एतादृशानि भ्रष्ट-अश्लीलभाष्याणि जातानि। अत्र अनुसन्धानं आवश्यकं।

विद्यते' तदा कथं न वेदानां उपयोगः, संरक्षणं, पठनपाठनं च कृतं स्यात् भारतीयराज्येन ? लोकोन्नति-दृष्ट्या भारतीयशासनेन उपयोगः कार्य्यः, यतोहि विशुद्ध-राजनीति-शासन-प्रशासन-राजसभा-विद्यासभा-राष्ट्रनायकनिर्वाचनादि-विषये सर्वं आवश्यकं विद्यते वेदेषु, वैदिकादि-साहित्ये च, येन भारते वस्तुतः 'राम-राज्यं' स्यात्। किं न जानाति भारतीयशासनं, यत् प्राचीनभारतेन कलाकौशल-यन्त्रादिषु कीदृशी 'महत्तमा उन्नतिः' कृताऽऽसीत्' येन भारतं सर्व-लोकस्य कला-यन्त्रादिषु अपि 'जगद्गुरुः' आसीत् ? वायुयानानां अपि पुरा भारते निर्माणं भवतिस्म, तथा तत्सम्बन्धिसाहित्यं इदानीं अपि भारते विद्यते। कस्यचित् अपि पुरुषस्य 'ईश्वरे, आत्मनि, प्रकृतौ' विश्वासः भवेत् न वा 'लौकिकोन्नति-कामनया, नास्तिकेन अपि वेदानां तथा वैदिक-साहित्यस्य सम्यग्रूपेण पठन-पाठनं कर्त्तव्यं' येन भारतस्य भौतिकोन्नतिः स्यात्, एवमेव विश्व-स्य अपि। इदं सत्यं, यत् वेदेषु 'ईश्वर-आत्मा-प्रकृति-विषयिकं उत्कृष्ट-ज्ञान-विज्ञानं विद्यते, येन मुक्तिः अपि भवति'। परन्तु यदि कोऽपि मानवः 'मुक्तिं' न कामयते, ईश्वरे विश्वासं न करोति, तदा का ईश्वरस्य हानिः ? अत्र तु मानवस्य एव हानिः विद्यते। परन्तु वेदेषु लोक-कल्याणार्थं अर्थात् 'अभ्युदायार्थं सर्वासां सत्यविद्यानां कलाकौशल-यन्त्रादि-विषयिकानां वर्णनं विद्यते, तासां उपयोगः क्रियेत, येन मानवः लोके सुखी स्यात्। अतः नास्तिकेनाऽपि सद्बुद्ध्या वेदस्य पठनं प्रयोगः च कार्य्यः लोकोन्नतये। तदा कथं न भारतीयशासनेन देशस्य विश्वस्य च कल्याणाय ?

## भारतीयजनतया अपि किं अपि करणीयं अस्यां दिशि

'यथा राजा तथा प्रजा' इति सत्योक्तिः विद्यते, अतः बह्वी आशा तु जनतातः नास्ति। तथापि जनतायां बहवः पुरुषाः

धार्मिकाः, भारतशुभचिन्तकाः विद्यन्ते, ये विचारयन्ति अपि, यत् केन प्रकारेण भारतदेशस्य वास्तविकोन्नतिः स्यात्, येन भारतं 'प्राचीनगौरवपदं' आप्नुयात्, तथा भूयोऽपि 'जगद्गुरुः' भवेत् सर्वेषु क्षेत्रेषु। अहं मन्ये, यत् एतेषां जनानां संख्या लघ्वी विद्यते, तथापि यदि इमे सर्वे एकीभूय सद्-बुद्धया कार्यं कुर्युः, तदा अवश्यमेव भारतत्राणं, लोक-कल्याणं च स्यात्, यतोहि वेद-मार्गेण एव प्रथमं 'अभ्युदय-सिद्धिः' अनन्तरं निःश्रेयससिद्धिः सम्भवा। अन्यः कोऽपि मार्गः नास्ति लोकोन्नतेः। न्यूनातिन्यूनं आस्तिकाः, नास्तिकाः, सर्वे भारतीयाः अन्न-वस्त्र-गृह-सुखं तु कामयन्ते एव। वेदेषु, वैदिक-साहित्ये तथा संस्कृत-साहित्ये एतादृशी बह्वी सामाग्री विद्यते, येन देशे कलाकौशल-यन्त्रादेः चरमोन्नतिः भवेत्। संस्कृतं भारतस्य प्राचीनतमा भाषा, यस्यां 'राष्ट्रियगौरवेतिहासः, भारतीयसंस्कृतेः वास्तविकस्वरूपं, तथा कलाकौशलयन्त्रादेः उत्कृष्ट-ज्ञान-विज्ञानं विद्यते, अतः राष्ट्रियदृष्ट्या इदं सर्वं साहित्यं वेदान् आरम्भ आद्यन्तं पठनीयं, येन भारतोद्धारः स्यात्। संस्कृतेन एव क्षेत्रीयभाषासमस्या समाधातुं शक्यते, न अन्यथा। अतः जनतया राष्ट्र-हिताय एतादृशः प्रयत्नः कार्य्यः, येन संस्कृतं एव अस्य देशस्य 'राष्ट्र-राज-शिक्षा भाषा भवेत् पूर्ववत्। जनता-राज्यं इदं, अतः निर्वाचने मत-द्वारा भारतीयशासनं अस्मिन् सन्मार्गे आनेतव्यं। अनेन एव भारतकल्याणं स्यात्। अनन्तरं संस्कृत-मार्गेण वेद-प्राप्तिः, वैदिक-साहित्य-प्राप्तिः तथा ईश्वर-प्राप्तिः अपि स्यात्, यदि कोऽपि इच्छेत्। अतः 'वेदः' न विस्मरणीयः, यतोहि तेन एव

'अभ्युदय–निःश्रेयस–सिद्धिः'

लोके परलोके सम्भवति। वेदः 'सर्व–सत्यविद्यानां अपि निधिः', अतः लौकिक–दृष्ट्या तु भारतीयैः, सर्वैः मानवैश्च, अध्येतव्यः। किं अधिकं।

इति शम्



**ग्रन्थ–समाप्तिः**

महाश्चर्यं तु इदमेव, यत् उव्वटमहीधरमहाभागैः ज्ञात्वाऽपि अश्लीलवचनानि, इदं न विचारितं तैः, यत् वेदे तानि कथं आगतानि ? एतादृशः अश्लीललेखः तु कस्यचित् सभ्य-पठित-मानवस्य अपि नहि भवितुं अर्हति, क्व सर्वज्ञ-पूर्ण-ईश्वरस्य ? मानसिकदासतायाः इयं पराकाष्ठा आसीत्, या इदानीं अपि प्रचलति। दुःखं तु इदमेव, यत् इदानीं यावत् शोधः नहि क्रियते। धर्माचार्यैः कथं अस्मिन् सम्बन्धे एकीभूय विचारः नहि क्रियते ? तथ्यं तु इदमेव, यत् कथित-धर्माचार्याणां प्राकृतभाषाप्रियाणां संस्कृतज्ञानाभावात् कथं वेदादि शास्त्राणां ज्ञानं भवेत्, येन ज्ञातं स्यात् क्षेपकादिकं अश्लीलभाष्यादिकं ? अस्तु, संस्कृतज्ञानां ज्ञानाय इदं भाष्यं दीयते, ते किमपि कुर्युः न वा ?

## अश्लीलवेदभाष्यं

गणानां त्वा गणपतिं हवामहे, प्रियाणां त्वा प्रियपतिं हवामहे,
निधीनां त्वा निधिपतिं हवामहे, वसो मम आ अहम् अजानि
गर्भधम्, आ त्वम् अजासि गर्भधम् ॥

(यजु० अ० २३, मं० १९)

तौ उभौ चतुरः पदः सम्प्रसारयावः स्वर्गे लोके प्रोर्णुवाथां,
वृषा वाजी रेतोधाः रेतः दधातु ॥ इत्यादि

(यजु० अ० २३, मं० २०)

(१) व्याख्याः—अत्र मन्त्रे 'गणपतिः' शब्दात् 'अश्वः' इति अर्थः गृहीतः, यतोहि इमे मन्त्राः 'अश्वमेधयज्ञसम्पादने' प्रयुक्ताः, येन यजमानस्य राज्ञः आयुषः वृद्धिः स्यात्, अन्यैः सुखैः सह। स्वर्गसुखं अस्य यज्ञस्य सामान्योद्देश्यं। यज्ञस्य उद्देश्यं तु दुष्टं नास्ति यथा 'आयुषः वृद्धिः' उत 'स्वर्ग-प्राप्तिः' यदि स्वर्गः कोऽपि एतादृशः

लोकः न मतः स्यात् यथा ईसायि-मुसलमानानां, यत्र केवलं भोग-विलास-सामग्री विद्यते। परन्तु यादृश्यः अनर्थकारिरीतयः प्रचालिताः वाममार्गियज्ञहोतृभिः, ताः सर्वाः महाव्यभिचारादिवर्द्धकाः निन्दनीयाश्च, याभिः अस्माकं वेदधर्मः वेदधर्मावलम्बिनः विश्वस्मिन् विश्वे निन्दिताः भवन्ति।

स्थूलदुष्टबुद्ध्या एतैः वाममार्गिभिः एतादृश्यः दुष्टरीतयः प्रचालिताः, याः वर्णने सर्वथा अश्लीलाः व्यभिचारादिवर्द्धकाः विद्यन्ते। यजुर्वेदस्य १६ मन्त्रतः ३१ मन्त्रं यावत् अश्लीलं विद्यते, यद्यपि चतुराध्यायानां विनियोगः अश्वमेधयज्ञे क्रियते तद्यथा :—

'साक्षात् जीवित-वाजी अर्थात् अश्वः यज्ञभूमौ रज्ज्वा बध्यते। तदन्तरं राज्ञः पत्नी यज्ञशालायां पश्यतां सर्वेषां ऋत्विजानां दर्शकानां 'अश्वसमीपे शेते'। श्याना सती कथयति 'हे अश्व! मम पतिः त्वं भूयाः। तव गर्भधं रेतः अहं आकृष्य क्षिपामि योनौ, त्वं च रेतः आकृष्य क्षिपसि। प्रथममन्त्रेण इदं कथयित्वा, द्वितीयमन्त्रेण राज्ञः पत्नी स्वयमेव अश्वशिश्नं आकृष्य स्वयोनौ स्थापयति, प्रार्थयते च, यत् त्वं अश्व मयि रेतः वीर्य्यं स्थापय (किं केन प्रकारेण अपि अश्वपशु-स्त्रीसंभोगः समागमं च सम्भवं? परिणामे, बह्व्यः राजपत्न्यः मृताः अश्वपददलनेन, याः बलात् मृत्युमुखे नीताः राज्ञः आयुष्यं संवर्द्धनाय स्वर्गप्रदानाय च। राज्ञः आयुष्यं वर्द्धितं न वा पत्न्यः तु मृताः)। हे अश्व! लिङ्गं योनौ प्रवेशय, यस्मिन् लिङ्गे योनौ प्रविष्टे स्त्रियः जीवन्ति भोगान् च लभन्ते। अन्येषां मन्त्राणां अयं अर्थः क्रियते, यत् ऋत्विजः अंगुल्या योनिं प्रदर्शयन् आह, यत् स्त्रीणां शीघ्रगमने योनौ हलना-शब्दः भवति। प्रधानमहिषी तु कदाचित् स्वर्गं नरकं वा गता

अश्व-पदादिदलनेन, परन्तु अन्याः राजपत्न्यः तदृत्विजं प्रति अंगुल्या शिश्नं प्रदर्शयन् कथयन्ति, यत् यदा त्वं चलसि, तदा तव सच्छिद्रं लिङ्गं तव मुखं इव भासते। इदं कुकृत्यं तु अध्वर्युः नाम ऋत्विजः करोति। ब्रह्मा-ऋत्विजः एतान् सर्वान् दुष्टान् वाममार्गिणः अतिशेते। स ब्रह्मा कथयति, यत् हे महिषि ! यदा तव माता पिता च मैथुनार्थं एकं पर्यङ्कं आरोहतः, तथा तव पिता तव मातुः योनौ मुष्ट्याकारं शिश्नं अक्षिपत्, तदा तव उत्पत्तिः जाता। सा महिषी उत्तरति, यत् हे ब्रह्मन् त्वं एवं मा ब्रूहि, यतोहि तव अपि अनेन मार्गेण उत्पत्तिः। एवमेव उद्गाता, होता च ऋत्विज-द्वयं अश्लीलतमाः वार्त्ताः कथयन्ति, येन तेषां अपि व्यभिचारादिप्रियता स्पष्टीभवति। एतद्द्वयं कथयति, यत् यदा ह्रस्वं स्थूलं च शिश्नं स्त्रियाः योनिं प्रति उपगच्छेत्, तदा वृषणौ अस्याःयोनेःउपरि राजतः कम्पेते। सम्भोगे नारी ऊरुवत् लक्ष्यते। अन्ते अश्लीलं विद्यते, यत् यदा वैश्यः शूद्रां गच्छति अर्थात् शूद्रायां व्यभिचारं करोति, तदा शूद्रः पुष्टिं न इच्छति, तथैव यदा शूद्रः वैश्यायां व्यभिचारं करोति, तदा वैश्यः इति न अनुमन्यते, यत् तस्य स्त्री पुष्टा जाता। अस्य व्यङ्ग्यकथनस्य आशयः अयं, यत् वाममार्गे कोऽपि व्यभिचारः नाम पापं नास्ति। कोऽपि कस्यां अपि स्त्रियां इच्छानुसारं विहरेत्। यथा ऋत्विजाः वाममार्गिणः तथैव राजाऽपि धूर्त्तराट् भवति स्म। स राजा यजमानः कथयतिस्म, हे अश्व ! त्वं मम महिष्याः अर्थात् पत्न्याः योनौ स्वलिंङ्गं प्रवेशय, चिन्ता नासीत् सा महिषी म्रियते न वा। प्रायः महिष्याः मृत्युः भवतिस्म इति तथ्यं। 'यथा राजा तथा प्रजा' इति लोकोक्त्यनुसारं प्रायः सर्वे भारतीयाः तदा वाममार्गिणः जाताः आसन्। पुराणानि अवलोक्य मैथुनादिकं

तेषां 'परमधर्मः' आसीत्। अस्यां दशायां संस्कृतं, साहित्यं वेदः च कथं जीवेत् इति स्पष्टं।

(२) व्याख्या :—यदि वस्तुतः इदं सर्वं भ्रष्टं कुकृत्यं वेदे विद्यते, तदा वेदधर्मावलम्बिभिः सत्वरं उद्घोषणीयं। यदि एतादृशं किं अपि वेदे नहि विद्यते, तदाऽपि सद्यः उद्घोषणीयं, येन वेदधर्मः लोके निन्दितः न स्यात्। एतानि दुष्टभाष्याणि आधारीकृत्य पाश्चात्य-विद्वद्भिः वेदभाष्याणि रचितानि रच्यन्ते च, तदा कः विचारः स्यात् तेषां वेदविषये? वयं कथयामः, यत् 'वेदः ईश्वरीयज्ञानं, निर्भ्रान्तं पूर्णं' इति, परन्तु वेदे यदि इदं सर्वं अनाचार-दुराचार-व्यभिचारा-दिवर्द्धकं स्यात्, तदा वेदः क ईश्वरीयज्ञानं, कस्यचित् सदाचारिसभ्य-पुरुषस्य अपि ग्रन्थः नास्ति। तदा तु स वेदः सर्वथा त्याज्यः, यथा अद्य वेदधर्मावलम्बिभिः कथित-सनातनधर्मावलम्बिभिः आर्यसमा-जिभिः स्वाचरणेन सिद्धीक्रियते, यत् वस्तुतः तेषां कोऽपि विश्वासः श्रद्धा च वेदे नास्ति। कोऽपि पठति एव नहि भगवतः वेदान्, यद्यपि ते सर्वे कथयन्ति 'वेदः तेषां धर्मग्रन्थः स्वतः प्रमाणं इत्यादि अपौ-रुषेयत्वात्'। परन्तु कः वराकः पठति इदानीं ज्ञात्वाऽपि वर्णाश्रम-व्यवस्था वेदज्ञानाधीनः अर्थात् वेदपठनात् गुरुमुखात् ब्रह्मचर्याश्रमे?

## एका अग्निपरीक्षा

स्थितिद्वयं विद्येत। एका स्थितिः तु इयं भवितुं अर्हति, यत् वेदे एतादृशं अश्लीलं घोरानर्थकरं व्यभिचारादिवर्द्धकं विद्यते, उत नहि विद्यते। येषां वेदधर्मावलम्बिनां, अयं विश्वासः, यत् वेदे एतादृशं अश्लीलं विद्यते, तदा तैः स्पष्टतया कथनीयं। तदा तैः 'अश्वमेधाः, गोमेधाः नरमेधाः अश्व-गो-नरादिहिंसा-मयाः करणीयाः। न निन्दनीयं वेदधर्मावलम्बिभिः, यत्

वाममार्गिभिः 'गो-नरमेधाः यज्ञाः' क्रियन्तेस्म, यत्र 'तैः गो-नरादेः हिंसा क्रियतेस्म' तेषां बलिं दत्त्वा, अग्नौ प्रक्षिप्य च यज्ञः नाम, येन ते तेषां मांसादिकं भक्षयेयुः 'यज्ञशेषः इति नाम', तथा कथितयज्ञोपलक्ष्ये सुरादिपानं कृत्वा व्यभिचारादिषु अबाधं संचरेयुः। किं वयं वाममार्गिणः एतादृशाः, उत वेदमार्गगामिनः? किं ऋत्विजैः एतादृशः अश्लीलः उपहासः स्वस्त्रीभिः कर्त्तुं कारयितुं च शक्यते, यथा अश्वमेधयज्ञे वर्ण्यते? यदि नहि तदा कथं अन्येषां यजमानानां स्त्रीभिः सह अयं अश्लीलोपहासः? इयं अग्निपरीक्षा तेषां ऋत्विजानां जनानां कार्य्या, ये कथयन्ति, यत् एतादृशं अश्लीलं विद्यते वेदे।

## सायणाचार्य-नाम्नि किं विद्यते?

वयं इदानीं यावत् न मन्यामहे, यत् सायणाचार्येण तत्सर्वं स्वतएव लिखितं, यत् अत्र दीयते, यथा वयं न मन्यामहे, यत् एतादृशं अश्लीलवेदभाष्यं उव्वटमहीधराचार्य्यैः कृतं, यावत् -अनुसन्धानेन इदं न सिद्धं स्यात्। यत् सायणाचार्य-नाम्नि विद्यते तत् इदं :—कृष्ण-यजुर्वेदस्य तैत्तिरीयब्राह्मणे विद्यते, यत् 'वाचे पुरुषम् आलभते, ब्रह्मणे ब्राह्मणम् अलभते, आशायै जामिम् आलभते, प्रतीक्षायै कुमारीम् आलभते।' एतेषां व्याख्या अनेन प्रकारेण विद्यते। वाग्देवतायै पुरुषं पूरकं स्थूलशरीरम् आलभते अर्थात् पुरुषस्य बलिं दीयते तस्य वधं कृत्वा; ब्राह्मणजात्याभिमानी देवः तस्मै कंचित् ब्रह्मवर्चसयुक्तं ब्राह्मणजातीयं पुरुषम् आलभते अर्थात् वेदज्ञब्राह्मणस्य बलिः देयः तस्य वधं कृत्वा; विषयतृष्णाभिमानिन्यै निवृत्तरजस्कां भोगायोग्यां स्त्रियम् आलभते; प्रतीक्षायै लब्धव्यस्य वस्तुनः लाभप्रतीक्षाभिमानिन्यै कुमारीम् अनूढां कन्याम् आलभते अर्थात् निवृत्तरज-

स्कस्त्रियाः तथा कन्यायाः वधः कार्य्यः तत्तद् देवताप्रसन्नतायै। अनेन सिद्ध्यति, यत् स्त्रीपुरुषादीनां बलिः तु दीयतेस्म वाममार्गिभिः वेद-नाम्नि। 'तैत्तिरीयापस्तम्बहिरण्यकेशी' इति ग्रन्थस्य क-६, प्र० १, अ० ८ दीयते, यत् गो—अश्वादयः सप्तग्राम्यपशवः तथा सप्तहिरणादयः वन्यपशवः यज्ञाय आनीताः स्युः, तथा तेषां सर्वेषां पशूनां गोप्रमुखतः मांसं भक्षणीयं 'यज्ञशेषरूपेण', एतादृशी व्याख्या सायणाचार्य-नाम्नि विद्यते।

## वेदे क्षेपकाः

इत्यपि ज्ञातव्यं सर्वैः वेदधर्मावलम्बिभिः तथा वेदहितचिन्तकैः, यत् वेदेषु अपि क्षेपकभागाः विद्यन्ते, परन्तु साभाग्यवशात् तत्सर्वं ज्ञातवृत्तं एव वेदपाठकानां वेदचार्य्याणां। तेषां प्रक्षिप्तभागानां दूरीकरणमात्रं एव कर्त्तव्यं, येन वेदाः अपौरुषेयाः स्वरूपे मिलेयुः। वालखिल्यभागः ऋग्वेदे, खिलभागः यजुर्वेदे, आरण्यक-महानाम्नी-सूक्तानि सामवेदे तथा कुन्तापसूक्तं अथर्ववेदे प्रक्षिप्तभागाः विद्यन्ते। इमे प्रक्षिप्तभागाः प्रथमं वेदस्य 'परिशिष्टानि' आसन् व्याख्यारूपेण, परन्तु वेदस्य लिपिकाराणां, प्रकाशकानां असावधानतया इमे ब्राह्मणभागाः व्याख्यारूपाः मूलवेदस्य भागाः इव जाताः इदानीं। इदं सर्वं वेदपठनमात्रेण स्पष्टं भवति, यतोहि तत्र 'अथ वालखिल्यं, इति वालखिल्यं' इत्यादि संकेताः प्राप्यन्ते। वेदस्य मन्त्रभागे 'वेदसंहिता नाम' प्रायः किं अपि मिश्रणं नास्ति कतिपयान् मन्त्रान् विहाय, परन्तु तत्र अपि सरलतया ज्ञातुं शक्यते, यत् के शब्दाः वाक्यानि च मिश्रितानि सन्ति। अतः प्रायः सर्वः वेदः 'अपौरुषेयः' पूर्णतया विशुद्धः एव यथा सृष्ट्यारम्भे आसीत्, इमान् क्षेपकान् विहाय। ब्राह्मणभागाः व्याख्यारूपाः यत्र तत्र वेदेषु मिलिताः मेलिताः वा सन्ति

प्रमादात् अनवधानात्, परन्तु वेदशोधः न इदानीं अपि असम्भवं कार्यं। सायणाचार्यस्य कालं यावत्, प्रायः सप्तशतानि वर्षाणि व्यतीतानि 'वालखिल्यभागः' वेदस्य, एकः प्रथक् ग्रन्थः आसीत्। ऐतरेय ब्राह्मणस्य २८/८ इति स्थाने दीयते एकं वाक्यं यथा 'वज्रेण वालखिल्याभिः वाचः कूटेन', यस्य व्याख्या सायणाचार्येण क्रियते यथा 'वालखिल्यनामकाः केचन महर्षयः तेषां सम्बन्धीनि अष्टौ सूक्तानि विद्यन्ते, तानि वालखिल्यनामके ग्रन्थे समाम्नायन्ते' इति। अनेन सिद्ध्यति, यत् वालखिल्यसूक्तानि पृथक् ग्रन्थे आसन् न वेदे पूर्वतः।

तथापि समग्रवेदे अर्थात् वेदचतुष्टये अनुसन्धानं शोधादिकं कार्य्यं, येन वेदः आदिमरूपे मिलेत्; तथा प्राप्त-वेदभाष्याणि, अन्यत् वैदिकसाहित्यं अपि विशुद्धरूपे मिलेत्। यथा इदानीं प्रायः समग्रसंस्कृतसाहित्यं अस्तव्यस्तं, जटिलजटिलं, ग्रन्थगतं मृतप्रायं, कूटमिश्रणादिभिः युक्तं विद्यते, तथैव समग्रवैदिकसाहित्यं वेदान् आरम्भ अस्तव्यस्तं जटिलजटिलं ग्रन्थगतं मृतप्रायं कूटमिश्रणसंयुक्तं विद्यते, अतः अस्य सर्वस्य उद्धारः कार्य्यः, येन प्रथमं भारतस्य अन्ते च विश्वस्य, वास्तविककल्याणं स्यात्, यतोहि

येन अभ्युदय-निःश्रेयससिद्धिः स एव धर्मः'

अतः एतादृशः वेदधर्मः, ईश्वरधर्मः विश्ववेदमानवधर्मः संरक्षणीयः येन भाविविश्वमहायुद्धादिभिः मुक्तिः मिलेत्, तथा चिरसुखशान्तिः स्यात्।

(१) सर्वप्रथमं तु सर्वैः मानवैः वेदपठनपाठनेच्छुभिः इदं पूर्णतया ज्ञातव्यं, हृदयङ्गमं करणीयं, यत् वेदाः सृष्ट्यारम्भकाले प्रादुर्भूताः, अतएवं तेषु वेदेषु 'कोऽपि लौकिकेतिहासः, देशविदेशानां वर्णनं

राजवंशादि–वर्णनं वा कदापि भवितुं नहि अर्हति'। तेषु वेदेषु तु विशुद्ध–ज्ञान–विज्ञानं परमात्मा–आत्मा–प्रकृति–विषयिकं विद्यते' तथा अयं अपि मार्गः वेदे प्रशस्तः क्रियते, यत्कथं अभ्युदय–निःश्रेयस-सिद्धिः भवति।

अतः वेदेषु तु केवलं उत्कृष्ट–धर्मस्य विवेचनं विद्यते, येन लोकोन्नतिः, ईश्वर-प्राप्तिः च स्यात्। इदं तु बालकोऽपि ज्ञातुं शक्नोति, कुतः बुधाः, यत् 'ईश्वरीय-ज्ञाने' लोकेतिहासस्य, मानवेतिहासस्य, देशानां पर्वत-नदी-क्षेत्रादीनां वर्णनं कदापि न स्यात्। भवेत् चेत् एतादृशे 'कथित-ईश्वरीय-ज्ञाने' इतिहासादिकं यथा बाइबिलादिषु विद्यते, तदा तत्सर्वं 'ईश्वरीयज्ञानं' न स्यात्।

वस्तुतः सत्यता तु इयं एव, यत् ये शब्दाः वेदेषु विद्यन्ते, तान् शब्दान् आधारीकृत्य मानव-पर्वत-नदी-क्षेत्रादीनां 'नामानि' पश्चात् दीयन्ते। केवलं अस्मात् कारणात् वेदेषु इतिहासः, राजवंश-क्षेत्र-नदी-पर्वतादयः पठ्यन्ते, तदा तु अयं भ्रमः एव अस्ति।

(२) भगवतां वेदानां शब्दानां 'यौगिकाः' अर्थाः भवितुं अर्हन्ति, न कदापि रुढ्यर्थाः, लौकिकाः वा, यथा महाभाष्यकारेण पतञ्जलि-मुनिना तथा अन्यैः पाणिनि-प्रभृति-मुनिभिः स्पष्टतया लिख्यते। अस्माभिः पूर्वं लिखितं, यत् वेदाः सृष्ट्यादौ प्रादुर्भवन्ति, एवमेव वेदभाषाऽपि, यस्यां भाषायां 'ईश्रीयज्ञानं वेदरूपे' दीयते। सृष्ट्यारम्भकाले तु कोऽपि इतिहासादिः भवितुं न अर्हति। अतः सूर्यवत् स्पष्टं, यत् वेदे लौकिकार्थाः तु कदापि भवितुं नहि अर्हन्ति। वेदे तु केवलं 'धात्वर्थाः' भवितुं अर्हन्ति, ये 'यौगिकार्थाः' इति कथ्यन्ते। 'यौगिक' शब्दस्य अर्थः भवति, स 'अर्थः' यः प्रकृतिप्रत्ययार्थ-सम्बन्धात् अधिगतः भवति अर्थात् धात्वर्थः इति निर्विवादं।

वेदेषु वेदभाषा-शब्दानां सर्वेषां, विज्ञान-कर्म-उपासना-ज्ञान परकार्थाः भवन्ति, यतोहि ईश्वरेण इमाः सर्वाः सत्यविद्याः मानव-कल्याणाय, अभ्युदय-निःश्रेयस-सुसम्पादनाय तत्र प्रकाशिताः सन्ति। अतः वेदेषु तु यौगिकार्थाः लगान्ति इति निर्विवादं, यथा सर्वैः आप्तैः ऋषि-मुनिभिः स्वीकृतं। अत्र सन्देह-लेशोऽपि नास्ति।

### विश्वप्रश्नः अयं न केवलं भारतस्य, 'यतोहि वेदः विश्वमानवधर्मः' ईश्वर-प्रदत्तः

सर्वैः प्राचीनैः ऋषि-मुनिभिः आप्तैः महापुरुषैः पूर्व-वर्णितैः 'स्व-साक्ष्यं' दीयते अस्मिन् विषये, यत् वेदः निश्चयरूपेण 'ईश्वरीज्ञानं', अतः 'विश्वमानवधर्मः', न केवलं भारतीयानां धर्मः, तेषां सम्पत्ति च। ईश्वरः पक्षपाती नास्ति, न ऋषि-मुनयः पक्षपातिनः अतः वै सत्यं २, पक्षपातादिकं विहाय, साटोपं उद्घोषितं, यत् 'वेदः एव मानवधर्मः' न कोऽपि अन्यः लोके। अतः लोक-दृष्ट्याअस्माभिः भारतीयैः वेद-भाष्य-विषयः अवलोकनीयः। वेदस्य उद्घोषः अयं 'कृण्वन्तः विश्वं आर्य्यं', अतः, यत् लोकोपकारि, तदेव करणीयं, येन भूयोऽपि वेदधर्मः 'विश्वधर्मः' स्यात्। इदं तु निर्विवादं यत् प्राचीनकाले वेदधर्मः एव 'विश्वधर्मः' आसीत्। एतादृशानि प्रमाणानि बाहुल्येन संस्कृत-साहित्ये मिलन्ति, येन स्पष्टं जायते, यत् सृष्टिकालतः महाभारतकालपर्यन्तं वेदधर्मः एव 'विश्वधर्मः' आसीत्, तथा ऋषि-मुनयः वेदधर्मस्य प्रचारार्थं, विश्वेगच्छन्तिस्म। अतः व्यापक-दृष्ट्या अस्माभिः सर्वैः कार्यं करणीयं। केषांञ्चित् अपि कथित-विदुषां रावण-उव्वट-महीधर-सायणादीनां



वेदभाष्यं यदि कुत्र अपि 'अश्लील, असभ्य, अयुक्ति-युक्त, वेद-

निन्दकं, भारतगौरव-नाशकं' स्यात्, तत् अविचारेण दूरीकरणीयं घोषणीयं च, यत् इदं भाष्यं 'अश्लीलतादिदोष-युक्तं' अतः त्याज्यं।

## लोके आर्य्याः दस्यवः, सुराः असुराः, देवाः राक्षसाः सदैव तिष्ठन्ति ।

इदं न विस्मरणीयं सर्वैः लोकैः, यत् लोके सदैव आर्य्याः दस्यवः, सुराः असुराः, देवाः राक्षसाः, तिष्ठन्ति यथा इदानीं अपि अवलोक्यते। एतादृशः कोऽपि ऐतिहासिककालः नास्ति लोकस्य, यदा केवलं सज्जनाः, उत दुष्टाः तिष्ठेयुः, तस्मिन् काले। यदा आर्य्याणां सज्जनानां धार्मिकाणां सदाचारिणां आधिक्यं जायते लोके, तदा लोकस्य सर्वतोमुखी उन्नतिः भवति, परन्तु यदा दुष्टानां आधिक्यं जायते, तदा लोकस्य सर्वतोमुखी अवनतिः भवति, येन महायुद्धादिभिः लोकविनाशः जायते। अयं प्रकृतेः नियमः, यः दिनरात्रिवत् अवलोक्यते लोके, उन्नतिः अवनतिः, अवनतिः उन्नतिः इति अवलोक्यते भ्रमन्ती चक्रवत्। उन्नतिकाले वैभवादेः जाते सति मानवसमाजस्य प्रमादात आलस्यात् अवनतेः कारणानि अदृष्ट-रूपेण उत्पद्यन्ते, तथैव अवनतिकाले मानवसमाजस्य परिश्रमेण पुरुषार्थेन सद्विद्याज्ञानेन एतादृशानि अदृष्टकारणानि उत्पद्यन्ते, येन उन्नतिः भवति मानवसमाजस्य राष्ट्रस्य वा। परन्तु अन्ततो-गत्वा मानवस्य व्यक्तेः यदा चरित्रादिपतनं जायते, तदा अवनतिः भवति, तथा चरित्रादेः उत्थानकाले उन्नतिः भवति, यतोहि मानव-समूहः एव 'समाजः राष्ट्रं वा नाम' लोके। अतः न विचारणीयं सर्वैः भारतीयैः, यत् तेषां 'संस्कृतभाषायाः, संस्कृतसाहित्यस्य, वेदस्य, वैदिकसाहित्यस्य' उन्नतिः कदापि न भविष्यति। परन्तु इदं अपि ज्ञातव्यं तैः, यत् उन्नतिः भूत्वा भूयोऽपि अवनतिः भवितुं

अर्हति मानवप्रकृतेः नियमानुसारं। भूयोऽपि भविष्यत्काले एतादृशानि युगानि आगन्तुं शक्नुवन्ति, यदा दस्युभिः अनार्य्यैः, असुरैः राक्षसैः संस्कृतसाहित्यस्य वैदिकसाहित्यस्य वेदान् आरभ्य नाशः कृतः स्यात्, यथा एतादृशैः असुरैः वाममार्गिभिः नाशः कृतः इदानीं, यत् अस्य ग्रन्थस्य प्रधानविषयः। प्राचीनभारतेऽपि राक्षसैः असुरैः यज्ञादयः मांसादिप्रक्षेपेण भ्रष्टीकृताः विध्वस्ताः, परन्तु आर्य्यैः देवताभिः रामादिभिः तेषां रक्षा कृता, रक्षसां च नाशः कृतः। यदि एतादृशैः राक्षसैः असुरैः वेदमार्गविरोधिभिः अस्माकं यज्ञरूपिसंस्कृतादेः वेदस्य च नाशः कृतः कूटमिश्रणादिभिः मांसमदिरामैथुनादिसमर्थकैः, तदा अस्माभिः भगवतः रामादीनां सन्ततिभिः आत्मनः 'संस्कृतभाषायाः, संस्कृतसाहित्यस्य, वेदस्य वैदिकसाहित्यस्य' रक्षा कार्य्या 'अनुसन्धानशोधरूपिरामबाणेन'। अत्र का विचिकित्सा आर्य्येषु सुरेषु देवेषु देवतासु? एकेन रामबाणेन 'शल्यचिकित्सा' कार्य्या पूर्वोक्ता, विचिकित्सायाः 'वि' उपपदं दूरीकृत्य 'आर्य्योचित-चिकित्सया।'

## अतः अस्माकं एका घोषणा

अस्माकं एका घोषणा, यत् संस्कृतभाषायाः संस्कृतसाहित्यस्य, वेदस्य वैदिकसाहित्यस्य' उद्धारकालः सन्निकटः आगतोऽस्ति, कोऽपि इच्छेत् न वा, मन्येत न वा। कोऽपि कृष्णः उत्पन्नः जातोऽस्ति, येन कंसरूपिवाममार्गस्य वेदविरुद्धस्य, लौकिकवैदिक-संस्कृतसाहित्येषु कूटरूपेण मिश्रितस्य, छलेन प्रचारितस्य, विध्वंसः अवश्यंक्रियेत। सर्वे विद्वांसः जानन्ति, यत् एतैः दुष्टैः वाममार्गिभि अस्माकं धर्मादिग्रन्थाः भ्रष्टीकृताः, यथा अस्माभिः अतर्क्यप्रमाणैः गतेषु अध्यायेषु स्पष्टीकृतं, येन तेषां प्रचारकाणां

मांसमदिरामैथुनमुद्रामत्स्यादीनां अबाधरूपेण प्रचारः स्यात् । एतेषु दुष्ट-कार्येषु भारतीयदेशद्रोहिणां, विदेशीयशासकानां तथा तेषां क्रीतदासानां अपि हस्तः आसीत् इति इतिहाससिद्धं । परन्तु यदि एतैः भारतस्य शत्रुभिः एतादृशः विनाशः कृतः, तदा भारतस्य स्वातन्त्र्यप्रभाते कथं अस्य विनाशस्य सुधारः नहि क्रियते भारतीयैः ? कः संकोचः का शंका ? लोके अवलोक्यते, यत् केनाऽपि शत्रुणा यदि विनाशः क्रियते देशादेः भाषा-साहित्यादेः, तदा सुधारः क्रियते तत्तद्देशवासिभिः । विनाशः सुधारः, सुधारः विनाशः प्रचलेत् लोके सर्वेषु क्षेत्रेषु समये समये । अतएव सज्जनैः आर्य्यैः विद्वद्भिः कर्त्तव्यपरायणैः सुधारः कार्य्यः अविलम्बेन, येन प्राचीनभारतवत् राष्ट्रोन्नतिः सम्भवा स्यात्, तथा भारतं भूयोऽपि नैजं ध्रुवं पदं 'जगद्गुरुत्व' आप्नुयात् । परन्तु इदं सर्वं संस्कृतेन, संस्कृत-साहित्येन, वेदेन, वैदिकसाहित्येन सम्यक् अन्वेषितस्य संशोधितस्य, सम्भवं स्यात् न अन्यथा । अन्येषां देशानां अभ्युदयः, लौकिकवैभवः, ईश्वरादिविरहितः नास्तिकरूपः तु सम्भवः, अपितु न निःश्रेयससिद्धिः भवेत् अभ्युदयेन सह वेदशास्त्रं विहाय । अस्माकं संस्कृतभाषा साहित्यं वेदादिकं प्रकृतिं आप्नुयात्, इति अस्माकं चरमोद्देश्यं । अतः भगवतः कृष्णस्य गीतावत् अयं ग्रन्थः कदाचित् सिद्धः स्यात्, यथा अर्जुनोद्धारः कृतः, पुनः धर्म-संस्थापनाय । तथैव अयं ग्रन्थः आत्यन्तिकसंस्कृतोद्धारं वेदोद्धारं च कुर्यात् असंशयं, विश्ववेदधर्मस्य, विश्ववेदभाषायाः संस्कृतस्य, विशुद्धस्य मलरहितस्य हिरण्यमयस्य, पुनः भारते लोके च संस्थापनाय । अतः संस्कृतसंसाराय एकं विनम्रनिवेदनं भगवतः कृष्णस्य शब्देषु:—

'निमित्तमात्रं भव सव्यसाचिन्'

न विध्वंसाय, अपितु धर्मसंस्थापनार्थाय यथा :—

हिरण्मयेन पात्रेण सत्यस्य अपहितं मुखम्,
यः असौ आदित्ये पुरुषः, स असौ अहम्।
ओ३म् खं ब्रह्म ॥ (यजु० अ० ४०, मं० १७)

## सामवेदस्य वेदानां च विषये गायनाचार्य अलाउद्दीनखां किं कथयति ?

अस्य महाभागस्य यः लेखः 'हिन्दुस्तान टाइम्स, दिल्ली' समाचारपत्रे १४-६-५८ ई० तारिकायां प्रकाशितः तस्य सारांशः अयं

'नाद-ब्रह्म'

गायनाचार्याणां, तथा गायकानां केवलं एकः समानः च धर्मः विश्वे, यतोहि ते सर्वे 'नाद-ब्राह्मणः' उपासकाः पूजकाश्च। यतः सर्वे गायकाः 'नाद-ब्राह्मणः' पूजकाः, अतः तैः प्राचीनतमस्य भारतीयगायनस्य उद्धारः कार्यः। 'ध्रुव-पद' भारतीय गायनं प्राचीनतमं, अद्वितीयं च, यस्य तुलनां, किं अपि अन्यत् गायनं संसारे इदानीं यावत् कर्त्तुं नहि शक्नोति। 'वेदाः एव 'ध्रुवपद' इति गायनस्य 'जन्म-दातारः', अर्थात् वेदेभ्यः एव 'ध्रुवपद' गायनस्य जन्म जातं'।............स्वामी हरिदासः 'ध्रुवपद' इति गायनस्य आंग्ल-इतिहासस्य मध्यकाले (अर्थात् १५ शताब्दीतः प्रायः १७ शताब्दीं यावत् ईस्वीय-संवत्सरेषु अयं कालः गण्यते) महत्तमः आचार्यः अभवत्, तस्य जगद्विख्यातः तानसेनः, बेजूबावरा च शिष्य-द्वयं आसीत्।.........................इदं सत्यं कथ्यते, यत् तेषां 'ध्रुवपद' गायनं श्रुत्वा हिंस्रादयः, सिंहादयः

निकटे आगच्छन्तिस्म, तथा हिंसक-स्वभावं अपि परित्य-जन्तिस्म। श्री मिश्रीसिंहमहाभागस्य समयेऽपि इदं भवितुं अर्हतिस्म·· ···············इत्यादि।

विशेष-व्याख्या :—परन्तु 'ध्रुवपदं' किं? वस्तुतः उच्चतमं 'साम-गायनं' एव अस्ति। अद्य तु प्राचीन 'सामगानस्य' सर्वाः परम्पराः नष्टाः जाताः सन्ति। वस्तुतः 'वेदः अक्षय-विद्यानिधिः' परन्तु अद्य कः शृणोति वने क्रन्दनं इव?

अस्मिन् ग्रन्थे अनेन महाभागेन 'नाद-ब्रह्म' तथा 'वेदाः' इति शब्दानां प्रयोगः क्रियते। 'ब्रह्म' वेदः इति भवति, अतः 'नाद-ब्रह्म' अस्य शब्द-द्वयस्य अर्थः 'सामवेदः' एव अस्ति। अतः सिद्धं, यत 'सामगान' एव सर्वेषां गायनानां 'उद्गम-स्थानं', यत् अस्माभिः पूर्वं कथितं।

## भारतीयधर्म-निरपेक्ष-राज्येन कथं, कस्मात् कारणात् वा वेदानां रक्षा कार्य्या?

यदि एतादृशः प्रश्नः केनाऽपि कृतः स्यात्, तदा तस्य उत्तर इदं। किं भारतीयशासनं देशस्य 'आर्थिक-सामाजिक-मानसिक-आत्मिक-उन्नतिं न कामयते? यदि कामयते, तदा 'वेदाः वैदिक-साहित्यं च' अस्य सर्वस्य 'अक्षय-निधिः', यः ऋषि-मुनिभ्यः 'दाय-रूपे' प्राप्तः भारतेन, मानव-कल्याणाय, लोकहिताय च। एतेषु ग्रन्थेषु सम्प्रदायवादः नास्ति कोऽपि। 'वेदः तु मानवधर्मः विश्व-धर्मः, ईश्वरेण सर्व-सत्य-ज्ञान-विज्ञान-सहितः सर्वेषां मानवानां कल्याणाय दत्तः'। अतः वेदानां अपि 'उपयोगः लौकिकोन्नतये' भारतीयधर्म-निरपेक्ष-राज्येन कर्त्तुं शक्यते, करणीयः च। यदि वेदेषु 'सर्व ज्ञान बीजरूपेण' कलाकौशल-यन्त्रादि-निर्माणविषयेऽपि